श्रीमत्कौत्साचार्यकृता

# अथर्ववेदीया चतुरध्यायिका

निर्मलभाष्योपेता शशिकला-हिन्दीव्याख्यया च विभूषिता

डा० जमुनापाठकः

श्रीमत्कौत्साचार्यकृता

# अथर्ववेदीया चतुरध्यायिका

[ निर्मलभाष्योपेता शशिकला-हिन्दीव्याख्यया च विभूषिता ]

डॉ० जमुनापाठकः
एम० ए०, पी-एच्० डी०
संस्कृत-विभागः, कलासङ्कायः
काशीहिन्दूविश्वविद्यालयः, वाराणसी

वाणी मन्दिर, नई सड़क, वाराणसी
१९९८

# भूमिका

अस्ति वैदिकवाङ्मये प्रातिशाख्यशास्त्रस्य महत्त्वपूर्णं स्थानम् । प्रतिचरणस्य संहितानां सम्यगवबोधनार्थं शास्त्रस्यास्य ज्ञानमपरिहार्यम् । वैदिकध्वनिविज्ञानस्य क्षेत्रेऽप्यस्य महत्त्वपूर्णं योगदानम् । अत्र विहिता ध्वनिवैज्ञानिकतथ्याः प्राचीनभारतीयाचार्याणां सूक्ष्मदृष्ट्या गम्भीरचिन्तनं प्रदर्शयन्ति ।

संहितापदविषयकं विधानमस्य शास्त्रस्य प्रमुखं प्रतिपाद्यम् । पदानां सन्धिभिस्संहिता निष्पद्यत इत्यस्य सिद्धान्तः । अत एवात्र स्वचरणस्य सन्धिविषयकाः नियमाः विहिताः । संहितासु प्रयुक्तानां पदानां मूलस्वरूपं सम्यगवबोधयितुं तच्चरणस्य पदपाठविषयकानि विधानान्यपि विहितानि । संहितापदपाठयोः सुरक्षार्थं क्रमपाठविषयकं विधानमपि निर्दिष्टम् अस्ति । वर्णं एव पदानां मूलघटकः, अत एवात्र चरणविशेषस्य संहितासु प्रयुक्ता वर्णाः, तेषामुच्चारणप्रक्रिया चोपदिष्टा । उदात्तादयः स्वराः वैदिकभाषायाः प्रधानवैशिष्ट्यम् । संहितागतमन्त्राणामभीष्टार्थनिर्धारणाय स्वराणामत्यधिकमुपादेयत्वं सिद्धमेव । अस्तु, स्वरविषयकविधानञ्चाप्यत्र निर्दिष्टम् विद्यते ।

सम्प्रति इमे प्रातिशाख्यग्रन्था उपलभ्यन्ते – ऋग्वेदप्रातिशाख्यम्, तैत्तिरीयप्रातिशाख्यम्, शुक्लयजुर्वेदप्रातिशाख्यम्, अथर्ववेदीया चतुरध्यायिका, ऋक्तन्त्रम्, अथर्ववेदप्रातिशाख्यञ्चेति ।

**अथर्ववेदीया चतुरध्यायिका** श्रीमत्कौत्साचार्यकृतमथर्वचरणस्य प्रातिशाख्यम् । विषयप्रतिपादनमेव प्राचीनभारतीयाचार्याणां उद्देश्यम्, न त्वात्मख्यापनम् । अत एव तेषां परिचयविषये निश्चितरूपेण किमपि कथयितुं न शक्यते । कौत्साचार्योऽपि अपवादो नास्ति । वैदिकपण्डितैः युधिष्ठिरमीमांसकैः अनेकेषां कौत्साचार्याणामुल्लेखः कृतः—(१) रघुवंशस्य (५ १) श्लोके निर्दिष्टः वरतन्तुशिष्यः कौत्सः, (२) महाभाष्ये (३.२.१०८) निर्दिष्टः पाणिनिशिष्यः कौत्सः, (३) निरुक्ते (१.५) उल्लिखितः कौत्सः, (४) गोभिलगृह्यसूत्रे ( ३.४.१० ) आपस्तम्बधर्मसूत्रे ( १.१९.४, १.२८.१ ) सामवेदीय-

निदानसूत्रे (२१.१० ३.२.११, २.८.१०) निर्दिष्टः कौत्सश्च। 'एषु कः चतुरध्यायिकाकारः' विषयेऽस्मिन्तैः सन्देहोऽपि कृतः[१]। वस्तुतस्तु ग्रन्थकर्ता कौत्सः पाणिनेः पूर्ववर्ती एव। यथा रचनाकालनिर्धारणेन स्पष्टीभविष्यति।

**रचनाकालः**–ग्रन्थस्यास्य रचनाकालविषये निश्चयेन वक्तुं न शक्यते। परञ्च 'प्रथमान्तानि तृतीयान्तानि शौनकस्य प्रतिज्ञानं न वृत्तिः' (१.१.८) इत्यनेन विधानेन ज्ञायते यद् ग्रन्थोऽयं शौनककृतादृग्वेदप्रातिशाख्यात् परवर्ती विद्यते। शौनकः निरुक्तकाराद् यास्काचार्यात्परवर्ती विद्यते यतो हि शौनकेन ऋग्वेदप्रातिशाख्ये 'न दाशतय्येकपदा काचिदस्तीति वै यास्कः' (ऋ० प्रा० १७.४२) इत्यत्र यास्कस्य मतमुद्धृतम्। अत एव चतुरध्यायिका ऋग्वेदप्रातिशाख्यापेक्षया यास्काद् अधिकपरवर्तिरचना वर्तते।

चतुरध्यायिकापाणिनिव्याकरणयोः विषयप्रतिपादनस्य, रचनाक्रमबद्धतायाः, विधानानां विधायाः, संज्ञाप्रयोगस्य च तुलनात्मकानुशीलनेन ज्ञायते यच्चतुरध्यायिका पाणिनिव्याकरणात्पूर्ववर्ती विद्यते।
यतो हि—

(१) पाणिनिना वर्णा माहेश्वरस्य चतुर्दशसूत्रेषूपनिबद्धाः[२]। तेन च स्वरार्थमच्, व्यञ्जनार्थं हल्, समानाक्षरार्थमक्, सन्ध्यक्षरार्थमेच्, नामिनर्थमिच्, प्रत्याहारः प्रयुक्तः। कौत्सेन यद्यपि वर्णा नोपदिष्टाः परञ्च तस्य संज्ञाविधानेन ज्ञायते यत्तेन वर्णानां क्रमः प्रातिशाख्यानुसारं स्वीकृतः[३]। चतुरध्यायिकायां तेन प्रत्याहारः न प्रयुक्तः, प्रत्युत प्रातिशाख्यानुसारं स्वरः, व्यञ्जनम्, स्पर्शः, प्रथमः, द्वितीयः, तृतीयः, चतुर्थः, उत्तमः, अन्तःस्थः, ऊष्मः, सोष्मः, समानाक्षरः, सन्ध्यक्षरः, नामिन् इत्यादयः संज्ञाः प्रयुक्ताः। चतुरध्यायिकाकारः कौत्साचार्यः पाणिनेः परवर्ती तच्छिष्यश्चेत् तेन स्वकृतौ चतुरध्यायिकायामपि गुरुपरम्परानुसारं स्वराद्यर्थमचादिप्रत्याहारः प्रयोक्तव्यः। परञ्च एवं न।

---

१. संस्कृत-व्याकरणशास्त्र का इतिहास द्वितीय भाग पृ० ३२८।

२. अइउण्। ऋऌक्। एओङ्। ऐऔच्। हयवरट्। लण्। ञमङणनम्। झभञ्। घढधष्। जबगडदश्। खफछठथचटतव्। कपय्। शषसर्। हल्।

३. अ आ आ३। इ ई ई३। उ ऊ ऊ३। ऋ ॠ ॠ३। ऌ, ॡ ॡ३। ए ए३। ऐ ऐ३। ओ ओ३। औ औ३। एते स्वराः। क ख ग घ ङ। च छ ज झ ञ। ट ठ ड ढ ण। त थ द ध न। प फ ब भ म। य र ल व। ᳵ क, श ष स ᳶ प ह इति व्यञ्जनानि।

(२) कौत्सेन 'वस्वन्तस्य पञ्चपद्याम्' ( १.३.२८ ) 'वसौ ह्रस्वात्' ( ४.१.३५ ) अत्र लडर्थे लिडर्थे च वैदिकवसुप्रत्ययः प्रयुक्तः। परञ्च पाणिनिना 'विदेः शतुर्वसुः' ( पा० व्या० ७.१.३६ ) इत्यत्र लडर्थे वसुप्रत्ययः, 'क्वसुश्च' ( पा० व्या० ३.२.१०७ ) इत्यत्र लिडर्थे क्वसुप्रत्ययश्च प्रयुक्तः। एवं पाणिनेः प्रत्ययविधानं कौत्सादुत्कृष्टः परवर्तित्वात्।

(३) पाणिनिना 'समाहारः स्वरितः' ( पा० व्या० १.२.३१ ) इत्यनेन स्वरितस्य लक्षणं कृतम्। तस्यानुसारं स्वरिते उदात्तानुदात्तयोः दुग्धजलमिश्रणवत्समाहारः विद्यते। परञ्च कौत्साचार्येण 'आक्षिप्तः स्वरितः' (१.१.१६)इत्यनेन प्रातिशाख्यानुसारं[1] स्वरितस्योच्चारणे उच्चारणावयवानां तिर्यग्गमनमेव स्वीकृतम्।

(४) विषयप्रतिपादनस्य क्रमबद्धता ग्रन्थयोः पूर्ववर्तित्वं परिवर्तित्वञ्च प्रदर्शयति। परवर्तिग्रन्थस्य क्रमबद्धता पूर्ववर्तिग्रन्थस्यापेक्षया प्रौढा भवति। पणिनिव्याकरणे विषयप्रतिपादनं क्रमबद्धत्वेन विद्यते परञ्च चतुरध्यायिकायां तत्र शैथिल्यं दृश्यते। यथा - अत्र सन्धिविषयकविधानानि द्वितीयाध्यायस्य 'संहितायाम्' इति प्रथमसूत्रात्प्रारभ्यते परञ्च तत्रैव क्रमबद्धत्वशैथिल्यात्प्रथमाध्यायस्य तृतीये पादेऽपि 'षट्पुरुसोरुकारोऽन्तस्य दशदाशयोरादेशश्च मूर्धन्यः ( १.३.१ ) इत्यादिष्वपि सन्धिविधानं दृश्यते। पूर्ववर्तिग्रन्थे परवर्तिग्रन्थस्यापेक्षया क्रमबद्धतायाः प्रौढत्वस्याभावः स्वाभाविकमेव भवति।

एवं स्पष्टमिदं यच्चतुरध्यायिकायाः रचनाकालः पाणिनिव्याकरणस्य रचनाकालात्पूर्वमेव विद्यते।

उपर्युक्तविवेचनेन ज्ञायते यच्चतुरध्यायिकायाः रचनाकालः यास्ककालात्परं पाणिनिकालात्पूर्वं वर्तते। विद्वद्भिः यास्कस्य रचनाकालः ई० पू० सप्तमः खिृष्टाब्दः पाणिनेः रचनाकालः ई०पू० पञ्चमः खिृष्टाब्दः मतः। क्रमेण शौनककालः ई० पू० सप्तम-खिृष्टाब्दस्य मध्यकालः पूर्वार्द्धकालः वा भवितव्यः तदनन्तरं कौत्सस्य रचनाकालः ई० पू० सप्तम-खिृष्टाब्दस्य पूर्वार्द्धकालः षष्ठ-खिृष्टाब्दस्य उत्तरार्द्धकालो वा प्रतीयते।

**ग्रन्थस्य नामकरणम्**—विभिन्नस्थलेषु ग्रन्थस्यास्य पृथक्पृथग्-नामोपलभ्यते-अथर्ववेदप्रातिशाख्यम्, शौनकीया चतुरध्यायिका, अथर्ववेदीयकौत्सव्याकरणम्, अथर्ववेदीया चतुरध्यायिका च।

---

१. आयामविश्रम्भाक्षेपैस्त उच्यते ( ऋ० प्रा० ३.१ )

**अथर्ववेदप्रातिशाख्यम्**—अथर्वचरणस्य संहितानां प्रातिशाख्यमिदमत एव ग्रन्थस्यास्य अथर्ववेदप्रातिशाख्यमिति नाम अभिहितम्[1]। अथर्ववेदप्रातिशाख्यम् = अथर्वचरणस्य प्रातिशाख्यम् अथवा अथर्वचरणस्य शौनकशाखाविशेषसम्बन्धिप्रातिशाख्यमिति। एवमथर्ववेदप्रातिशाख्यनाम्ना ग्रन्थत्रयमुपलभ्यते—(i) पं० विश्वबन्धुशास्त्रिमहोदयैः सम्पादितं अथर्ववेदप्रातिशाख्यम् (लघुपाठः) (ii) प्रो० सूर्यकान्तमहाभागैः सम्पादितम् अथर्ववेदप्रातिशाख्यम् (दीर्घपाठः) (iii) प्रो० ह्विटनीमहाभागैः सम्पादितम् अथर्ववेदप्रातिशाख्यम् (चतुरध्यायिका) च। एवं पृथक्पृथग्ग्रन्थत्रयम् अथर्ववेदप्रातिशाख्यनाम्ना सम्पादितम् अस्ति। अथर्ववेदप्रातिशाख्यम् इत्यनेनाभिधानेन एषु को ग्रन्थोऽभीष्ट इति निश्चयपूर्वकं कथयितुं न शक्यते। नाम्यसाम्याद् ग्रन्थस्यास्य निश्चितस्वरूपमवबोधनार्थम् अथर्ववेदप्रातिशाख्यम् इति नामकरणं नास्ति सामर्थ्ययुतम्।

**शौनकीया चतुरध्यायिका**—'शाखायां शाखायां = प्रतिशाखम्, प्रतिशाखं भवमिति प्रातिशाख्यम्' इत्यनुसारं वेदस्य शाखाविशेषसम्बन्धिप्रातिशाख्यमिति मतसमर्थकैः पण्डितैः 'शौनकीया चतुरध्यायिका' इति नामकरणं कृतम्[2]। शौनकशाखीया अत एव शौनकीया, चतुरध्याययुता अत एव चतुरध्यायिका एवं शौनकीया चतुरध्यायिका इति। अत्र चतुरध्यायात्मिका अत एव चतुरध्यायिका तु समुचितम् परञ्च शौनकीया न। यतो हि प्रातिशाख्यं नाम शास्त्रं स्वचरणमधिकृत्य विधानं करोति, शाखाविशेषमेवाधिकृत्य न। ग्रन्थोऽयम् अथर्वचरणमधिकृत्य विधानं करोति, अत एव शौनकीयास्थाने अथर्ववेदीया इति अत्युचितम्। प्रातिशाख्यस्य विधानं शाखाविशेषपर्यन्तं सीमितं मन्यते चेत्तदपि अथर्ववेदीया नाम एवातिसमीचीनम्। यतो हि ऋग्वेदस्य शाकल शाखाविशेषस्य शैशिरीयनामकोपशाखाविशिष्टस्य प्रातिशाख्यम् ऋग्वेदप्रातिशाख्यनाम्ना ख्यातम्, न तु शैशिरीय प्रातिशाख्यम् अथ वा शाकलप्रातिशाख्यमिति।

**अथर्ववेदीयं कौत्सव्याकरणम्**—सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य सरस्वतीभवनपुस्तकालयस्य पाण्डुलिपिसङ्ग्रहे प्राप्तहस्तलेखानुसारं पं०

---

१. ह्विटनीमहाभागैः स्वसम्पादितसंस्करणस्य नामकरणं कृतमस्ति।

२. प्रो० वीरेन्द्रकुमारवर्ममहाभागैः कृतस्य 'ऋग्वेदप्रातिशाख्य : एक परिशीलन' ग्रन्थस्य भूमिकायां १४ पृष्ठे।

युधिष्ठिरमीमांसकमहाभागैः ग्रन्थस्यास्य 'अथर्ववेदीयं कौत्सव्याकरणम्' इति नाम कृतम्। यतो हि हस्तलेखस्य पादपुष्पिकायां 'इत्यथर्ववेदे कौत्सव्याकरणे चतुरध्यायिकायाः ·· ··पादः' इत्युल्लेखः प्राप्तः। मीमांसकैः निर्दिष्टं यद् एवमेव हस्तलेखः बालशास्त्रिगदरेमहाभागस्य ग्वालियर-सङ्ग्रहालये विद्यते। तस्यापि पादपुष्पिकायाम् 'इत्यथर्ववेदे कौत्सव्याकरणे चतुरध्यायिकायां ······' इति पाठः प्राप्यते। 'पुष्पिकायामुपलब्धपाठोऽयं ग्रन्थकारस्य लेखो हस्तलिपिकारस्य वा, विषयोऽयं सन्देहास्पदम्।

**अथर्ववेदीया चतुरध्यायिका**—अथर्वचरणस्य प्रातिशाख्यमिदं चतुरध्यायेषु विभक्तम्, अत एव प्रस्तुतसंस्करणस्य 'अथर्ववेदीया चतुरध्यायिका' नाम दत्तम्। **नामौचित्यम्**—नाम्नाऽनेन ज्ञायते यदथर्वचरणस्य प्रातिशाख्यमिदं चतुरध्यायात्मकं विद्यते। चतुरध्यायिकानाम्ना एव पूर्वभाष्यकारैः स्वभाष्यस्य नामधेयं चतुरध्यायिभाष्यं कृतम्। तेनैव नाम्नात्र चतुरध्यायिका नाम अङ्गीकृतम्। अथर्वचरणस्य प्रातिशाख्यमिदमत एव अथर्ववेदीया विशेषणं प्रयुक्तम्। अथर्ववेदीया चतुरध्यायिका' इत्यनेन अथर्वचरणस्य चतुरध्यायात्मकं प्रातिशाख्यमिति स्पष्टं भवति। अन्येभ्यः अथर्ववेदप्रातिशाख्येभ्यः अस्य पृथगत्वञ्च ज्ञायते।

**प्रकाशितसंस्करणम्**—जर्मनदेशीयैः पण्डितप्रवरैः प्रो० डब्लू डी० ह्विटनीमहाभागैः प्रातिशाख्यस्यास्य सम्पादितमेकमेव संस्करणमथर्ववेदप्रातिशाख्यनाम्ना प्रकाशितम्। प्रथमन्तु अस्य प्रकाशनम् 'अमेरिकन् ओरिएन्टल सोसाइटी' इत्यस्यां वार्षिकपत्रिकायामभवत्। परञ्च १८६२ ख्रिष्टाब्दे स्वतन्त्रपुस्तकरूपेण प्रकाशितं जातम्। तदनन्तरमस्य द्वितीयावृत्तिः चौखम्बा संस्कृतसिरीज' द्वारा १९६२ ईशवीये प्रकाशिता। ह्विटनीमहाभागस्य संस्करणेऽस्मिन् चतुरध्यायिकायाः सूत्राणि तेषामाङ्ग्लभाषायामनुवादः व्याख्या च संयोजिता। व्याख्यायामस्यां कस्याप्यज्ञातकर्तृकस्य चतुरध्यायिनामकभाष्यस्य प्रत्यालोचनञ्चापि कृतमस्ति। भाष्यस्यास्य हस्तलेखः ह्विटनीमहाभागैः जर्मनदेशीये बर्लिननगरे रायलपुस्तकालये चैम्बरकलेक्सन-सङ्ख्या १४३, वेबर-सङ्ख्या ३६१ इत्यत्र प्राप्तः। निर्देशोऽयं ह्विटनीमहाभागैः स्वसंस्करणस्य भूमिकायां कृतः।

**पाण्डुलिपिः** ह्विटनीमहाभागस्य व्याख्यानुशीलनेन 'स्थले स्थले भाष्यस्य पाठोऽयमपभ्रष्टः' इति ज्ञात्वापि तत्प्राप्तुं रायलपुस्तकालयस्य पुस्तकालयाध्यक्षाय पञ्चपत्राणि मया प्रेषितानि, परञ्च कस्यापि प्रत्युत्तरं

---

१. संस्कृत व्याकरणशास्त्र का इतिहास : द्वितीय भाग, पृ० ३२७।

नोपलब्धम्। भारतदेशस्याप्यनेकेषु पुस्तकालयेषु भाष्यं प्राप्तुं मया बहु-प्रयत्नः कृतः, परञ्चाभावात्सर्वत्रासफलत्वमेव जातम्। प्रसिद्धवैदिक-पण्डितानां युधिष्ठिरमीमांसकमहोदयानां 'संस्कृतव्याकरणशास्त्र का इतिहास' इत्याख्यस्य ग्रन्थस्य द्वितीयभागस्य ३२८ पृष्ठें निर्दिष्टोद्धरणानुसारं काशीस्थे सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य सरस्वतीभवनपुस्तकालये मया प्रयत्नः कृतः। तत्र पाण्डुलिपिसंग्रहे २०८६ सङ्ख्यायां ग्रन्थस्यास्य पाण्डुलिपिः प्राप्ता। दशपत्रात्मको विंशतिपृष्ठीयो हस्तलेखोऽयं कौत्सव्याकरणनाम्ना ख्यापितः। तत्र देवनागरीलिपिः, प्रतिपत्रस्य आकारश्च ७.५" × ३.२" विद्यते। सर्वप्रथमपृष्ठे ग्रन्थयास्य नामाङ्कितं विद्यते। द्वितीयादेकोनविंशतिपृष्ठे चतुरध्यायिकाःसू-त्राणि लिखितानि सन्ति। विंशतिमं पृष्ठं रिक्तम्। एवं अष्टादशेषु पृष्ठेष्वेव सूत्राणि विद्यन्ते। प्रतिपृष्ठे सप्तपङ्क्तीषु सूत्राणि लिखितानि सन्ति। प्रतिपङ्क्तौ अक्षराणां सङ्ख्या ३६ विद्यते। प्रथमाध्यायस्य प्रथमपादस्य पुष्पिकायां निर्दिष्टं यद् 'इत्यथर्ववेदे कौत्सव्याकरणे चतुरध्यायिकस्य प्रथमः पादः' इति। द्वितीयपादस्य पुष्पिकायां 'इति प्रथमाध्यायस्य द्वितीयः पादः' तृतीयपादान्ते 'प्रथमस्य तृतीयः पादः' चतुर्थपादान्ते 'इत्यथर्ववेदे कौत्सव्याकरणे चतुरध्यायिकायां प्रथमस्य चतुर्थः पादः। प्रथमोऽध्यायः समाप्तः' इति निर्दिष्टः। सर्वेष्वध्यायान्तेषु 'इत्यथर्ववेदे कौत्सव्याकरणे चतुरध्यायिकायां··· ध्यायस्य चतुर्थः पादः। '·····अध्यायः समाप्तः' इति लिखितम्। परञ्चात्र हस्तलेखस्य कालः कुत्रापि न निर्दिष्टः। पत्रस्यावस्थां वर्णानामाकारञ्च दृष्टवा अनुमीयते यद् हस्तलेखोऽयं २५० संवत्सर-प्राचीनः। एवं सप्तदशेस्वीयस्य मध्यकालः हस्तलेखसमयः भवितुमर्हतीति।

**मातृकासङ्केतः**—प्रस्तुतसंस्करणे सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य सरस्वतीभवने प्राप्ता मातृका 'क' इति संज्ञया, ह्विटनीमहाभागस्य संस्करणम् 'ख' इति नाम्ना, ह्विटनीमहाभागैः बर्लिनपुस्तकालये प्राप्ता 'ग' संज्ञया ख्यापिता विद्यते। यद्यपि ह्विटनीमहाभागैः प्राप्ता मातृका मया न दृष्टा तथापि तेषां संस्करणेः स्थले स्थले सूत्राणां तथा च सूत्राणां भाष्यस्योद्धरणेन तस्याः मातृकायाः अपि किञ्चिमात्रं पाठस्य ज्ञानं भवति। अत एव तस्या निर्देशस्य कृते मया गसंज्ञा प्रयुक्ता विद्यते।

**सूत्रपाठसमीक्षा**--संस्करणेऽस्मिन् कमातृकानुसारं सूत्राणि गृहीतानि। ह्विटनीमहाभागस्य संस्करणापेक्षया प्रस्तुतसंस्करणे सूत्राणामाधिक्यं विद्यते। कमातृकायां कतिपयानि सूत्राणि ईदृशानि विद्यन्ते यानि ह्विटनीमहाभागैः न गृहीतानि।

[१] ह्विटनीमहाभागस्य संस्करणे प्रथमाध्यायस्य चतुर्थे पादे चतुर्दश-सूत्राणि विद्यन्ते। तत्र चतुर्थपादस्यान्तिमसूत्रस्य व्याख्यायां ह्विटनीमहाभागैः निर्दिष्टं यत् सूत्रमिदं पादस्यान्तिमसूत्रं भवितुं नार्हति। अतः परमपि कति-पयानि सूत्राणि भवितव्यानि। कमातृकायामस्मात्सूत्रात्परमपि पञ्चसूत्राणि विद्यन्ते यानि ह्विटनीमहाभागैः भाष्यस्यांशत्वेन स्वीकृतानि। अत्र कारणं भवितुमर्हति—कमातृकायां 'परिपाठ एतावत्स्वर्थेऽपि' (१.४.१५) इत्यत्र 'किमर्थं परिपाठ एतावत्स्वार्थेऽपि' इति पाठः विद्यते। ह्विटनीमहाभागस्य १.४.१४ सूत्रस्य व्याख्यया ज्ञायते यद् गमातृकायामपि कमातृकावत्पाठः अस्ति। किमर्थमित्यनेन इमानि सर्वाणि सूत्राणि भाष्यस्यांशानि प्रतीयन्ते। गमातृकायां भाष्यस्योपलब्धतापि सन्देहं विवर्धयति च। अत एव ह्विटनीमहाभागैः सूत्रत्वेन एतेषां सूत्राणां ग्रहणं न कृतम्। तानि सन्ति—

परिपाठ एतावत्स्वर्थेऽपि ( १.४.१५ )
बहुविधास्त्रिविधा प्लुतयो भवन्ति ( १.४.१६ )
स्वरपरा अभिनिष्ठानपरा व्यञ्जनपरा ( १.४.१७ )
तासां या समानाक्षरपरास्ता इतावप्लुतयो भवन्ति ( १.४ १८ )
इत उत्तरमधिकम् ( १ ४.१९ )

इति पञ्च सूत्राणि संयोज्य कमात्रिकायां प्रथमाध्यायस्य चतुर्थे पादे एकोनविंशसूत्राणि पठितानि सन्ति। प्रस्तुतसंस्करणे कमातृकानुसारमेतानि पञ्च सूत्राणि अपि गृहीतानि सन्ति। किमर्थमिति पाठस्तु भाष्यस्याशं भवितुमर्हति परञ्च सूत्रन्तु सूत्रकारकृतमेव विद्यते। यतो हि अत्र नूतन-विषयप्रतिपादनमस्ति। अथ वा प्रातिशाख्यग्रन्थः चरणविशेषस्य शाखा-ध्येतॄणां परिषदि समीक्ष्यमाणानां विषयाणां प्रतिपादकः अस्ति, अत एव पार्षदनाम्नाऽप्यभिहितो विद्यते। तत्र विषयविधानसमीक्षणस्य तर्कवितर्के किमर्थमिति प्रयोगः भवितुमर्हति। अत एव किमर्थमित्यस्य प्रयोगः सूत्रत्वं न बाधते। अत एवात्र एतानि पञ्चसूत्राणि सूत्ररूपेण गृहीतानि विद्यन्ते। एवमत्र प्रथमाध्यायस्य चतुर्थे पादे एकोनविंशसूत्राणि विद्यन्ते।

[२] ह्विटनीमहाभागस्य संस्करणे तृतीयाध्यायस्य द्वितीये पादे एको-नत्रिंशत्सूत्राणि गृहीतानि सन्ति। तत्र संयोगादि स्वरात्' (३.२.३) इत्य-स्मात्सूत्रात्*** इत्येवं ताराङ्कितं विद्यते येन प्रतीयते यदतः परमपि कति-पयानि सूत्राणि विद्यन्ते यानि ह्विटनींमहाभागैः न प्राप्तानि। गमातृकायां

तत्र सूत्राणां गलितत्वमेव कारणं भवितुमर्हति। यस्माद् ह्विटनीमहाभागैः स्वसंस्करणे ताराङ्कितं कृतम्। परञ्च कमातृकायां पादस्यास्य तृतीयसूत्रात् सूत्रद्वयमधिकं पठितम्। सूत्रद्वयमेतद् विद्यते

छकारस्य च ( ३ २.४ )
पिप्पल्यादिषु पूर्वात् ( ३.२.५ )

अत एव प्रस्तुतसंस्करणे मया एतत्सूत्रद्वयं गृहीतं येन तृतीयाध्यायस्य द्वितीये पादे एकत्रिंशत्सूत्राणि विद्यन्ते।

[३] ह्विटनीमहाभागस्य संस्करणस्य तृतीयाध्यायस्य तृतीये पादे विंशत्सूत्राणि विद्यन्ते। तत्रादौ कमातृकायां कारिकात्मकानि दशसूत्राण्यधिकानि पठितानि। ह्विटनीमहाभागैः तानि सूत्राणि भाष्यस्यांशरूपेण स्वीकृतानि तेषां कारिकात्मकत्वमेव कारणं भवितुमर्हति येषामुल्लेखः तृतीयाध्यायस्यैव द्वितीयपादस्य क्वचित्प्रकृत्या' ( ३.२.२१ ) इत्यस्य सूत्रस्य व्याख्यायां कृतः। तानि सूत्राणि सन्ति—

षडेव स्वरितजातानि लक्षणानि प्रतिजानते ( ३.३.१ )
पूर्वं पूर्वं दृढतरं मृदीयो यदुत्तरम् ( ३.३.२ )
अभिनिहितः प्राश्लिष्ट जात्य क्षैप्रश्च तावुभौ।
तैरोव्यञ्जनपादवृत्तावेतत्स्वरितमण्डलम् ( ३.३.३ )
सर्वतीक्ष्णोऽभिनिहितः ततः प्राश्लिष्टमुच्यते ( ३.३.४ )
ततो मृदुतरौ स्वारौ जात्यः क्षैप्रश्च तावुभौ ( ३.३ ५ )
ततो मृदुतरः स्वारः तैरोव्यञ्जनमुच्यते ( ३.३.६ )
पादवृत्तौ मृदुतरः। इति स्वारबलाबलम् ( ३.३.७-८ )
अपरः प्राह। तैरोव्यञ्जनपादवृत्तौ तुल्यवृत्तीति ( ३ ३.९ )
उदात्तपूर्वः परोऽनुदात्तः स्वरितसन्धिः ( ३.३.१० )

एषु सूत्रेषु स्वरितस्वरस्य बलाबलत्वमुक्तं यदन्यत्र ग्रन्थेऽस्मिन्न विहितम्। अतएव प्रस्तुतसंस्करणे कमातृकानुसारं एतान्यपि सूत्राणि गृहीतानि सन्ति।

[४] एवमेव कमातृकायाम् अस्यैव पादस्यान्तेऽपि दशसूत्राण्यधिकानि पठितानि, यानि ह्विटनीमहाभागैः भाष्यस्यांशानि स्वीकृतानि विद्यन्ते। तत्र कारणं भवितुमर्हति कमातृकायां 'सन्धौ स्वरितम् ( ३.३.३३ ) इत्यत्र 'किं सन्धौ स्वरितम्' तथा च 'अक्षरस्य स्वर्यमाणस्य स्वर्यते' ( ३.३.३६ )

इत्यत्र 'किमक्षरस्य स्वर्यमाणस्य स्वर्यते' इति पाठः प्राप्यते । 'स्वरितोदात्तेऽनन्तरमनुदातम्' ( ३.३.३० ) इत्यस्य सूत्रस्य ह्विटनीव्याख्यया ज्ञायते यद् गमातृकायामपि कमातृकावदेव पाठः विद्यते । किमनेनेति पदेन इमानि सर्वाणि सूत्राणि भाष्यांशानि प्रतीयन्ते । अत एव महाभागैः सूत्रत्वेन एतेषां सूत्राणां ग्रहणं न कृतम् ।

अस्वराणि व्यञ्जनानि (३.३.३१)
स्वरवन्ती इत्यान्यतरेयः (३.३.३२)
सन्धौ स्वरितम् (३ ३.३३)
पूर्वरूपमित्यान्यतरेयः (३.३.३४)
उत्तररूपं शाङ्खमित्रिः (३.३.३५)
अक्षरस्य स्वर्यमाणस्य स्वर्यते (३.३.३६)
अर्धं ह्रस्वस्य पादो दीर्घस्येत्येके (३.३.३७)
सर्वमिति शाङ्खमित्रिः (३.३.३८)
अक्षरस्यैषः विधानं विद्यते यद्विस्वरीभावः (३.३.३९)
ऋगर्धर्चपदान्तावग्रहविवृतिषु मात्राकालः कालः (३.३ ४०)

गमातृकायां ह्विटनीमहाभागैः भाष्यं प्राप्तम् अत एव एतानि सूत्राणि उक्तसूत्रद्वये प्रयुक्तेन किमिति पदेन भाष्यस्य भागत्वेन स्वीकृतानि । परञ्च कमातृकायां तु केवलं सूत्राण्येव विद्यन्ते, तत्र भाष्याभावः एव । कमातृकानुसारं नवीनविषयप्रतिपादकत्वाद् इमान्यपि दशसूत्राणि प्रस्तुतसंस्करणे सूत्ररूपेण गृहीतानि । एवम् कमातृकानुसारं संस्करणेऽस्मिन् चत्वारिंशत्सूत्राणि सन्ति ।

[५] तृतीयाध्यायस्यैव चतुर्थे पादे ह्विटनीमहाभागस्य संस्करणे द्वाविंशत्सूत्राणि विद्यन्ते । तस्य 'प्रपराभ्यामेनः' ( ३.४.६ ) इत्यस्मात्सूत्राद् ह्विटनीमहाभागेन ताराङ्कितं कृतम् । येन प्रतीयते यदत्रापि कतिपयानि सूत्राणि सन्ति यानि ह्विटनीमहाभागैः न प्राप्तानि गमातृकायां गलितत्वात् । अत एव तत्र ताराङ्कितं कृतम् । कमातृकायां तस्मिन्स्थाने पञ्चसूत्राणि पठितानि सन्ति । तानीमानि—

नशश्च ( ३.४.९ )
धातुस्थाद् यकारात् ( ३.४.१० )
उरू ( ३.४.११ )
ब्रह्मण्वत्यादीनाम् ( ३.४.१२ )
निपातस्य ( ३.४.१३ )

अत एव प्रस्तुतसंस्करणे एतानि पञ्चसूत्राणि गृहीतानि सन्ति ।

[६] 'अपरश्चास्मिन्नेव पादे कमातृकायां 'न मिनाति' (३.४.१९) इत्यस्मात् सूत्रात् परमपि एकं सूत्रमधिकं पठितम् । यत्सूत्रमस्ति 'नभेः' (३ ४.२०) । अस्योल्लेखः ह्विटनीमहाभागैः कुत्रापि न कृतः । तदपि कमातृकानुसारं प्रस्तुतसंस्करणे गृहीतम् ।

[७] ह्विटनीमहाभागैः 'प्रपराभ्यामेनः' ( ३ ४ ६ ) इत्यस्य सूत्रस्य व्याख्यायां सूत्रद्वयमपि अनुमीयते । यस्य गमातृकायां पाठः नास्ति । कमातृकायामपि अस्य सूत्रद्वयस्य पाठः न विद्यते परञ्च प्रस्तुतसंस्करणे इदमपि सूत्रद्वयं सूत्रत्वेन गृहीतम् । तदेतद् विद्यते—

प्रपरिभ्यां नः ( ३.४.७ )

आशीरुरुष्यगृहेषु शिक्षेभ्यश्च ( ३.४.८ ) इति

एवं प्रस्तुतसंस्करणे तृतीयाध्यायस्य चतुर्थे पादे त्रिंशत्सूत्राणि विद्यन्ते ।

[८] ह्विटनीमहाभागस्य संस्करणे चतुर्थाध्यायस्य प्रथमे पादे षट्चत्वारिंशत्सूत्राणि विद्यन्ते । तत्रादौ कमातृकायां विंशत्कारिकात्मकानि त्रिपञ्चाशत्सूत्राणि ह्विटनीमहाभागानां संस्करणादधिकानि पठितानि सन्ति । ह्विटनीमहाभागैः एतान्यपि सूत्राणि भाष्यस्यांशरूपेण स्वीकृतानि, तेषामुल्लेखोऽपि अस्य पादस्य 'उपसर्ग आख्यातेनोदात्तेन समस्यते' ( ४ १.५४ ) इत्यस्य सूत्रस्य व्याख्यायाम् ग्रन्थस्यान्ते 'अतिरिक्तव्याख्यायाम्' ( Additional Note ) इत्यत्र २६१ पृष्ठे च कृतः । तानि सूत्राणि सन्ति—

समासावग्रहविग्रहान्पदे यथोवाच छन्दसि शाकटायनः । तथा प्रवक्ष्यामि ( ४.१.१-२ )

चतुष्टयं पदम् । नामाख्यातोपसर्गनिपाताः ( ४.१.३-४ )

आख्यातं यत्क्रियावाचि ( ४.१.५ )

नाम सत्वाख्यमुच्यते ( ४.१.६ )

निपाताश्चादयः सर्वे ( ४.१.७ )

उपसर्गास्तु प्रादयः ( ४.१.८ )

नाम नाम्नानुदात्तेन समस्तम् । प्रकृतिस्वरम् ( ४.१.९-१० )

न युष्मदस्मद्वचनानि ( ४.१.११ )

न चामन्त्रितमिष्यते ( ४.१.१२ )

नामानुदात्तं प्रकृतिस्वरो गतिः ( ४.१.१३ )
अनुच्चो वा नाम चेत्स्यादुदात्तम् ( ४ १.१४ )
क्रियायोगे गतिपूर्वः समासोऽयम् । यावान्तोऽनुच्चा समर्थास्तान्सम-स्येत् ( ४ १ १५-१६ )
यत्रानेकोऽनुच्चोऽस्ति परश्च प्रकृतिस्वरः,
आख्यातं नाम वा यत्स्यात्सर्वमेव समस्यते ( ४.१.१७-१८ )
सोपसर्गं तु यन्नीचैः पूर्वं वा यदि वा परम्,
उदात्तेन समस्यन्ते । यथैतत्सुप्रतिष्ठितम् ( ४.१.१९-२० )
उदात्तस्तु निपातो यः सानुदात्तः क्वचित्भवेत्,
समस्यन्ते यथाविधम् । इतिहासो निदर्शनम् ।
नघारिषां सुसहेत्येवमादीन्युदाहरेत् ( ४.१.२१-२३ )
सहेत्यनेनानुदात्तं नाम समस्यते ( ४.१.२४ )
अनुदात्तेन चोदात्तस्वभावो यत्र चोच्यते ।
सहसूक्तवाकः सान्तर्देशा शतक्रतुः निदर्शनम् ( ४.१.२५-२६ )
अनुदात्तोऽनु गतिर्मध्ये पूर्वपरौ प्रकृतिस्वरौ
पूर्वेण विग्रहस्तत्र । पुरुषेऽधि समाहिते ( ४ १.२७-२८ )
उदात्तोऽनु गतिर्यत्रानुदात्तं परं पदम्
पूर्वेण विग्रहस्तत्र । संसुभूत्या निदर्शनम् ( ४.१.२९-३० )
यत्रोभे प्रकृतिस्वरे पूर्वं यच्च परं च यत् ।
वार्जयित्वाद्युदात्तानि सर्वमेव समस्यते ( ४.१.३१-३२ )
नाख्यातानि समस्यन्ते ( ४.१.३३ )
न चाख्यातं नाम च ( ४.१.३४ )
नाम नाम्नोपसर्गैस्तु सम्बन्धार्थं समस्यते ( ४.१.३५ )
न युष्मदस्मदादेशे अनुदात्तात्स्वरात्परे,
नामोसर्गगतिभिः समस्यन्ते कदाचन ।
मामनु प्र ते प्रवामित्येवमादिन्युदाहरेत् ( ४.१.३६-३८ )
एतदश्चानुदात्तानि इदमश्च तथैव च,
नामोपसर्गगतिभिः समस्यन्ते कदाचन ।
वृहन्नेषां य एनां वनिमायन्ति पर्येनाम्पर्यस्येति निदर्शनम् (४.१.३९-४१)
अनुदात्तोऽनु गतिः सर्वैः समस्तः स्वरितादिभिः ।
स्रंस्राव्येण दुरमण्य आचार्येति निदर्शनम् ( ४.१.४२-४३ )
प्रपराणि समा दुनिरधि परिवीति च,

अत्यभ्यपि सूदपा य उपानु प्रति त्रिंशति : ( ४.१.४४-४५ )
एकाक्षरा उदात्ताः ( ४.१.४६ )
आद्युदात्तास्तथा परे ( १.४.४७ )
अभीत्यन्तः ( ४.१.४८ )
उपसर्गाः क्रियायोगे गतिस्तथा ( ४.१.४९ )
आद्युदात्ता दशैतेषाम् । उच्चा एकाक्षरा नव ।
विंशतेरुपसर्गाणामन्तोदात्तस्त्वभीत्ययम् ( ४ १.५०-५२ )
अच्छारमस्तं हस्तो लाङ्गूलं तिरः पुरः पुनर्णमः श्येनी
वाती फली हिं स्रुग्वषट् प्रादुरुला ककजा स्वाहा स्वधा
श्रत्स्वररला इत्युपसर्गवृत्तीनि यथाम्नातः स्वराणि ( ४ १.५३ )

एतानि सूत्राण्यपि प्रस्तुतसंस्करणे कमातृकानुसारं नूतनविषयप्रतिपादकत्वात् सूत्रान्तर्गतं गृहीतानि सन्ति । एवं संस्करणेऽस्मिन् चतुर्थाध्यायस्य प्रथमे पादे नवनवतिसूत्राणि विद्यन्ते ।

[९] ह्विटनीमहाभागस्य संस्करणे चतुर्थाध्यायस्य चतुर्थे पादे सप्तविंशतिसूत्राणि विद्यन्ते । तत्र कमातृकायामेकमधिकम् सूत्रं पठितमस्ति—'संहिता दाढर्चार्थम्' (४.४.८) । अत्र पदपाठस्यापरं प्रयोजनमुक्तम् । ह्विटनीसंस्करणे सूत्रमिदं नास्ति । सूत्रस्यास्य निर्देशोऽपि महाभागैः स्वसंस्करणे कुत्रापि न कृतः । प्रस्तुतसंस्करणे कमातृकानुसारं सूत्रमिदं गृहीतं येनात्र अष्टविंशत्सूत्राणि सन्ति ।

इत्येवं ह्विटनीमहाभागस्य संस्करणे पादानुसारं ४१+२१+२९+१४ (=१०५)+३९+२०+२१+२७ (=१०७)+२५+२९+२०+२२ (=९६)+४६+२६+२८+२६(=१२६)=४३४ सूत्राणि, परञ्च प्रस्तुतसंस्करणे पादानुसारं ४१+२१+२९+१९(=११०)+३९+२०+२१+२७(=(१०७)+२५+३१+४०+३०(=१२६)+९९ २६+२८+२७ (=१८०)=५२३ सूत्राणि सन्ति ।

**प्रस्तुतसंस्करणम्** —यद्यपि ह्विटनीमहाभागानां संस्करणं विद्वत्तापूर्णं श्रमसाध्यञ्च तथापि संस्कृतभाष्याभावाद् ग्रन्थस्यास्य विधानानां सम्यगवबोधनार्थं न सामर्थ्ययुतम् । संस्कृतविश्वविद्यालयस्य हस्तलेखेऽपि चतुरध्यायिकायाः सूत्राण्येव विद्यन्ते । तत्रापि भाष्याभावः । भाष्यं विना सूत्रग्रन्थानां सम्यगवबोधनमतिश्रमसाध्यमेव न, प्रत्युत अतिकठिनं चापि विद्यते ।

अत एव चतुरध्यायिकायाः संस्कृतभाष्यमावश्यकं कार्यमिति मयानुभूतम्, येन विश्वस्य सर्वभाषामाध्यमेन वेदाध्येतृणां कृते ग्रन्थोऽयं सुगमः भवतु। अत एवाहं ग्रन्थस्यास्य संस्कृतभाष्यलेखने प्रवृत्तो जातः। परिणामतः इदम्प्रथम तया निर्मलाख्यसंस्कृतभाष्येण शशिकलानामहिन्दीव्याख्यया चोपेतं संस्करणमिदं प्रस्तूयते।

**संस्करणस्यास्य वैशिष्ट्यम्**- संस्करणेऽस्मिन् सरस्वतीभवनपुस्तकालयस्य पाण्डुलिपिसङ्ग्रहे प्राप्तहस्तलेखानुसारम् अध्यायेषु पादेषु च सूत्राणां विभाजनं कृतम्। अत्र सूत्राणां हिन्दीभाषायामनुवादः स्वकृतं निर्मलाख्यं संस्कृतभाष्यं शशिकला नाम हिन्दीव्याख्या च संयोजिता। संस्कृतभाष्येण विश्वस्य सर्वभाषामाध्यमेन च वेदाध्यायिनां कृते, हिन्दीभाषायामनुवादेन व्याख्यया च हिन्दीमाध्यमेन चतुरध्यायिकायाः सूत्राणि सारल्येन बोधगम्यानि भवितुमर्हंति।

भाष्ये व्याख्यायाञ्च सूत्राणामर्थावबोधनार्थं प्रतिपदार्थं कृतम्। गूढतथ्यानां विषयाणाञ्च स्पष्टीकरणार्थमन्येषां प्रातिशाख्यानां शिक्षाग्रन्थानाञ्च तत्तत्स्थले साहाय्यं प्राप्तं, येन सरलतया बोधगम्यं भवतु। सूत्रेषु प्रयुक्तानां पदानां प्रयोजनं स्थले स्थले निर्दिष्टम्। सूत्रविषयकशङ्कामुपस्थाप्य तस्य समाधानं प्रदत्तम्। स्फोटनादिध्वनिविज्ञानविषयकसूत्राणां ध्वनिवैज्ञानिकविश्लेषणं कृतम्, येन विषयः सारल्येन सुगम्यः भवतु। 'वस्वन्तस्य पञ्चपद्याम्' (१.३.२६) इत्यादिषु स्थलेषु यत्र वस्वादयः वैदिकप्रत्ययः प्रयुक्तः तत्र व्याकरणशास्त्रस्य विधानेनापि विषयः स्पष्टीकृतः। विषयाणां सम्यगवबोधयितुं यथास्थानमावश्यकतानुसारं संहितातः निदर्शनानि, तेषां पदपाठः क्रमपाठश्च संयोजितः। पुमो मकारस्य स्पर्शेऽघोषेऽनूष्मपरे विसर्जनीयोऽपुंश्चादिषु' (२.१.२५) इत्यादिविधानं ह्विटनीमहाभागैः अनावश्यकमनुपयोगिनश्चोक्तं, तत्र सूत्राणामाश्यकत्वमुपयोगित्वञ्चोपस्थापितम्। एवं संस्करणमिदं चतुरध्यायिकायाः सूत्राणां सम्यगवबोधनार्थं उपयोगी भवितुमर्हतीति। अस्तु—

परिगृह्णन्तु वेदज्ञाः व्याख्यानं मम निर्मलम्।
अत्र मे यदयुक्तं स्यात् तत्संशोध्य च गृह्यताम्॥ इति

श्रीरामनवमी,
१९९७ खिृष्टाब्दः

विदुषां वशंवदः—
जमुनापाठकः

## सङ्केतसूचिका

| सङ्केतः | | नाम |
|---|---|---|
| अ० प्रा० | — | अथर्ववेदप्रातिशाख्यम् |
| ऋ० प्रा० | — | ऋग्वेदप्रातिशाख्यम् |
| उ० | — | उत्तरार्धम् |
| उ० भा० | — | ऋग्वेदप्रातिशाख्यस्य उवटभाष्यम् |
| क्र० पा० | — | क्रमपाठः |
| तै० प्रा० | — | तैत्तिरीयप्रातिशाख्यम् |
| त्रि० | — | तैत्तिरीयप्रातिशाख्यस्य त्रिभाष्यरत्नभाष्यम् |
| नि० | — | निरुक्तम् |
| प० पा० | — | पदपाठः |
| पा० व्या० | — | पाणिनिव्याकरणम् : अष्टाध्यायी |
| पा० शि० | — | पाणिनिशिक्षा |
| पू० | — | पूर्वार्धम् |
| पृ० | — | पृष्ठम् |
| मा० शि० | — | माण्डूकी शिक्षा |
| या० शि० | — | याज्ञवल्क्यशिक्षा |
| वा० प्रा० | — | वाजसनेयिप्रातिशाख्यम् |
| वै० | — | तैत्तिरीयप्रातिशाख्यस्य वैदिकाभरणभाष्यम् |
| सं० | — | अथर्ववेदसंहिता-शौनकशाखीया |
| सं० पा० | — | संहितापाठः |

# विषयानुक्रमणिका

## प्रथमोऽध्यायः

**प्रथमः पादः**



**द्वितीयः पादः**

## द्वितीयोऽध्यायः

### प्रथमः पादः

## चतुर्थोऽध्यायः

## परिशिष्टम्

# अथर्ववेदीया चतुरध्यायिका

## प्रथमोऽध्यायः

### अथ प्रथमः पादः

#### निर्मलभाष्यम्

[ मङ्गलाचरणम् ]

नारायणं गुरुं नत्वा श्रिया सह विभूषितम् ।
ततश्च भारतीं देवीं वाणीं ब्रह्ममयीन्तथा ॥
आचार्यं प्रमुखञ्चैव वर्मोपाधिसुशोभितम् ।
गुरुश्रेष्ठं तु वीरेन्द्रं कुमारेण च संयुतम् ॥
सर्वांश्च वैदिकाचार्यान् कौत्साचार्यं महामुनिम् ।
चतुरध्यायि-विज्ञानं निर्मलाख्यमिदं कृतम् ॥

[ वर्ण्यविषय-निर्देशनम् ]

**चतुर्णां पदजातानां नामाख्यातोपसर्गनिपातानां सन्ध्यपद्यौ गुणौ प्रातिज्ञम् ॥ १ ॥**

**सूत्र-अनुवाद**—नाम, आख्यात, उपसर्ग तथा निपात—इन चार पदसमुदायों के सन्धिविषयक (सन्ध्य) तथा पदविषयक (पद्य) विशेषताओं (के विधान) की प्रतिज्ञा (की जाती है) ।

#### निर्मलभाष्यम्

अत्र सूत्रकारः श्रीमत्कौत्साचार्यश्चतुरध्यायिकायाः प्रतिपाद्यविषयं प्रस्तौति । सन्धौ भवः सन्ध्यः । पदे भवः पद्यः । **सन्ध्यः** सन्धिविषयकं **पद्यः** पदविषयकञ्च विधानं क्रियते । केषां सन्ध्यः पद्यश्च ? इत्युच्यते **नामाख्यातोपसर्गनिपातानां** नाम चाख्यातश्चोपसर्गश्च निपातश्च नामाख्यातोपसर्गनिपाताः तेषां, **चतुर्णां** चतुष्प्रकाराणां **पदजातानां** पदसमुदायानां सन्ध्यः

सन्धिविषयकम्, पद्यः पदविषयकश्च गुणौ वैशिष्ट्ये प्रातिज्ञं प्रतिज्ञायाः विषयः कृतः। नामाख्यातोपसर्गनिपातानां चतुर्णां पदसमुदायानां संहिताविषयकं पदपाठविषयकं च विधानमत्र विहितमिति प्रस्तुतम्।

चतुर्धा पदा भवन्ति - नाम चाख्यातश्चोपसर्गश्च निपातश्चेति। यथोक्तं यास्केन—'तद् यान्येतानि चत्वारि पदजातानि, नामाख्याते चोपसर्गनिपाताश्च तानीमानि भवन्ति' (नि० १.१)। शौनकेनाप्युक्तम् 'नामाख्यातमुपसर्गो निपातश्चत्वार्याहुः पदजातानि शाब्दाः' ( ऋ० प्रा० १२.१७ )। कात्यायनस्यापीदं मतम्—'तच्चतुर्धा' 'नामाख्यातोपसर्गनिपाताः' ( वा० प्रा० ८.५२, ५३ )।

किं नाम ? यत्र द्रव्यं प्रधानं तन्नाम इत्युच्यते। यथोक्तं यास्केन—'सत्त्वप्रधानानि नामानि' ( नि० १.१ )। शौनकमते यत्पदेन वक्ता सत्त्वमभिदधाति तन्नाम इत्युच्यते 'तन्नाम येनाभिदधाति सत्त्वम्' (ऋ० प्रा० १२.१८ ) इत्यत्र द्रव्यं सत्त्वम्। लिङ्गसङ्ख्ययोरत्र सद्भाव इति च सत्त्वम्' यथोक्तं यास्केन —'मूर्तं सत्त्वभूतं सत्त्वनामभिर्व्रज्या पक्तिरिति' ( नि० १.१ )। ननु व्रज्या पक्तिरित्यत्र व्रज् पच् धातुरेव कथं तन्नाम ? उच्यते – कृदभिहितो भावो द्रव्यवत् प्रकाशते। अत एव एते नाम एव। यथोक्तं यास्केन —'अद इति सत्त्वानामुपदेशः। गौरश्वः पुरुषो हस्तीति' ( नि० १.१ )। कात्यायनेन चतुर्णां पदजातानां प्रयोगः तु कृतः परञ्च तल्लक्षणं न प्रतिपादितम्। निरुक्तभाष्यकारेण दुर्गाचार्येण नाम-विषये एवमुक्तम्—नमन्त्याख्यातशब्दे गुणभावेन नमयन्ति वा स्वमर्थमाख्यातशब्दवाच्ये गुणभावेनेति नामानि' ( नि० १.१ दुर्गभाष्यम् )।

किमाख्यातम् ? क्रिया धात्वर्थः तस्य वाचकम् आख्यातपदम्। यथा— भवति, पचति इत्यादयः। येन पदेन वक्ता क्रियामभिदधाति तदाख्यातम्। यथोक्तं यास्केन—'भावप्रधानमाख्यातम्' ( नि० १.१ )। शौनकेनोक्तम्— 'तदाख्यातं येन भावं सधातु' 'क्रियावाचकमाख्यातम्' ( ऋ० प्रा० १२.१९, २५ )। भवतीति भावः क्रिया। यथोक्तं यास्केन —'भवतीति भावस्य। आस्ते शेते व्रजति तिष्ठतीति' ( नि० १.१ )। दुर्गाचार्यमते—'आख्यायन्ते स्त्रीपुंनपुंसकानि क्रियागुणभावेन वर्तमानान्येन क्रिया च तेषामुपरि वर्तमानेत्याख्यातम्' ( नि० १.१ दुर्गभाष्यम् )। पुनर्यत्र नामाख्याते उभे भवतः तत्र भावस्यैव प्राधान्यम्। यथोक्तं यास्केन—'यद् यत्रोभे भावप्रधाने भवतः' ( नि० १.१ )। एवं वाक्ये आख्यातमेव प्रधानमिति फलितम्।

क उपसर्गः ? य नामाख्यातयोः अर्थे वैशिष्टचं जनयति स उपसर्गः। यथोक्तं शौनकेन —'उपसर्गो विशेषकृत्' ( ऋ० प्रा० १२.२५ )। उपसर्ग-विषये यास्केन बहूनामाचार्याणां मतानि प्रस्तुतानि। शाकटायनस्य मते नामाख्याताभ्यां सह उपसर्गाः सार्थका अन्यत्र तु निरर्थका एव—'न निर्बद्धा उपसर्गा अर्थान्निराहुरिति शाकटायनः' ( नि० १.१ )। गार्ग्यस्य मते तु स्वतन्त्रा अपि सार्थकाः, न तु निरर्थकाः—'उच्चावचाः पदार्था भवन्तीति गार्ग्यः' ( नि० १.१ )। दुर्गाचार्यमतेन 'आख्यातमुपगृह्यार्थविशेषमिमे तस्यैव सृजन्तीत्युपसर्गाः' ( नि० १.२ दुर्गभाष्यम् )। वैदिकाभरणकारमते 'गतितया कर्मप्रवचनीयतया वा पदान्तेरुपसृजन्ते इत्युपसर्गाः ( तै० प्रा० १.२५ वै० )। शौनकेन विंशतिसङ्ख्याका उपसर्गा उक्ताः—

प्राभ्या परा निर्दुरनु व्युपाप सं परि प्रति न्यत्यधि सूदवापि।
उपसर्गा विंशतिरर्थवाचकाः सहेतराभ्याम् ॥ (ऋ० प्रा० १२.२०)

तैत्तिरीयप्रातिशाख्ये तु दशसङ्ख्याका एवोपसर्गा मताः—

'आप्रवोपाभ्यधिप्रतिपरिविनीत्युपसर्गाः' ( तै० प्रा० १.१५ )

ननु—

'प्रपरापसमन्ववनिर्दुर्व्याङ्न्यधयोऽप्यतिसूदभयश्च।
प्रतिना सह लक्षयितव्याः पर्युपर्योरपि लक्षणमत्र ॥'

इति पाणिनीयाः विशेषेण भणन्ति। कथमत्र शौनकादिना निरर्गल-मुपसर्गाः सङ्कुचिताः। उच्यते—प्रयोजनवती संज्ञा उक्ता। सूत्रकारैः स्वा-वश्यकतानुसारं संज्ञा प्रतिपादिता। ऋग्वेदे शौनकेनोक्ताः कृष्णयजुर्वेदे तैत्ति-रीयप्रातिशाख्येनोक्ता एव उपसर्गाः प्राप्ताः। न तु एतावन्त एवोपसर्गाः।

निपातः कः ? उपमाद्यर्थेष्वनेकप्रकारेषु निपतन्ति इति निपाताः। यथोक्तं यास्केन —'उच्चावचेष्वर्थेषु निपतन्ति इति निपाताः' (नि० १.२)।

एतान्येव पदजातानि, येषु वैदिकं लौकिकञ्च वाङ्मयं प्रतिष्ठितम्। अथर्वचरणमधिकृत्य एतेषां पदसमुदायानां सन्धिविषयकं पदपाठविषयकं च विधानमत्र विहितम्।

किमर्थं सन्धिविषयकं पदपाठविषयकञ्च ? उच्यते—पदान्तपदाद्योः सन्धिना एव संहितायाः निष्पत्तिः। सन्धौ वर्णागमलोपविकारप्रकृतिभावाश्च जायन्ते। तृतीयाध्यायपर्यन्तं एतेषामेव विधानं कृतम्। आगमः यथा— 'टकारात्सकारे तकारेण' ( २.१.८ ) 'ङणनेभ्यः कटतैः शषसेषु' (२.१.९)

इत्यादयः। लोपः यथा 'स्वराद्यवयोः पदान्तयोः' ( २.१.२१ ) 'रेफस्य रेफे' ( २.१.१९ ) इत्यादयः। विकारः यथा—'पदान्तानामनुत्तमानां तृतीया घोषवत्स्वरेषु' ( २.१.२ ) 'उत्तमा उत्तमेषु' ( २.१.५ ) इत्यादयः। प्रकृतिभावः यथा—'क्वचित्प्रकृत्या' ( ३.२.२९ ) 'प्रगृह्याश्च प्रकृत्या' ( ३.२.८ ) इत्यादयः। एतैरेव सन्धिविधानैः पदान्तपदाद्योः संहिता भवति।

संहितायाः मन्त्राणामर्थबोधनाय मन्त्रगतपदानामर्थज्ञानमावश्यकम्। पदार्थज्ञानाय पदानां मूलरूपस्य ज्ञानमपेक्षितम्। पदानां मूलरूपं पदपाठेनैव ज्ञायते। संहितायां पदजातानि सन्धिना स्वमूलरूपे नैव विद्यन्ते। तेषु लोपागमवर्णविकारैः परिवर्तनं भवति। अत एव संहितातः पदपाठविषयकविधानेनैव तेषां मूलरूपस्य ज्ञानं सम्भवति। पदपाठविधानेनैव पदस्य मूलरूपं सन्दिग्धपदानां विभक्तिः, समस्तरूपम्, उपसर्गाख्याते, प्रकृतिप्रत्ययौ, प्रगृह्यस्वराः इत्यादयः च बोधगम्याः। तदतिरिक्तं पदपाठेनैव पदानां च मूलस्वरज्ञानम्। मूलस्वरावबोधनं बिना पदानां यथेष्टार्थनिर्धारणमशक्यम्। संहितायां पदानां मूलस्वरः पूर्वपरप्रभावेण परिवर्तितो भवति। पदपाठेनैव तेषां मूलस्वरः ज्ञायते। यथोक्तं सूत्रकारेण—'पदाध्ययनमन्तादिशब्दस्वरार्थज्ञानार्थम्' ( ४.४.७ )। पाणिनिशिक्षायामुक्तम्—

'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥'
( पा० शि० ५२ )

एवं स्पष्टमिदं यत् संहितायाः मन्त्राणां सम्यगवबोधनार्थं तत्सम्बद्धानि सन्धिविषयकानि पदविषयकानि च विधानानि अपेक्षितानि। तद्विधानानि अत्र विहितानि। तन्निमित्तं वर्णानामपि ज्ञानमावश्यकम्। अत एव तदपि विहितम्। संहितापाठपदपाठयोः रक्षणार्थं क्रमपाठोऽपि अनुपेक्षणीयः। यथोक्तं सूत्रकारेण—क्रमाध्ययनं संहितापददार्ढ्यार्थम्' ( ४.४.८ )। अत एव तत्सम्बन्धिविधानमपि सूत्रकारेण निर्दिष्टम्।

अत्र ग्रन्थस्य प्रतिपाद्यविषयकथनं मङ्गलार्थकम्। ग्रन्थकारः स्वकृतेः निर्विघ्नसमाप्त्यर्थं मङ्गलं प्रयोजयति। विषयवस्तुनिर्देशनमपि मङ्गलाय भवति। यथोक्तं—'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्' इति॥१॥

### शशिकला

इस सूत्र में सूत्रकार श्रीमत्कौत्साचार्य द्वारा चतुरध्यायिका के प्रतिपाद्यविषय का कथन किया गया है। सन्धि में होने वाला 'सन्ध्य' तथा पद में

होने वाला 'पद्य' होता है। सन्ध्य=सन्धिविषयक तथा पद्य=पदपाठ-विषयक विधान किया जायेगा। किसके 'सन्ध्य' और 'पद्य' की विशेषताओं के कथन की प्रतिज्ञा की जाती है? इसको बतलाते हैं - नाम, आख्यात, उपसर्ग और निपात—इन चार प्रकार के पद-समुदायों के सन्धिविषयक ( सन्ध्य ) तथा पदविषयक ( पद्य ) वैशिष्टच के विधान की प्रतिज्ञा की जाती है। नाम, आख्यात, उपसर्ग तथा निपात—इन चार प्रकार के पद-समूहों के संहिता-विषयक तथा पदपाठ-विषयक विधान को यहाँ बतलाया जायेगा—यह कहा गया है।

पद चार प्रकार के होते हैं—नाम, आख्यात, उपसर्ग तथा निपात। जैसा यास्क ने कहा है—'वह ( निघण्टु ) चार पदसमुदायों वाला है, वे हैं—नाम, आख्यात, उपसर्ग तथा निपात' ( नि० १.१ )। शौनक ने भी कहा है —'वैयाकरण पदों की चार जातियाँ बतलाते हैं— नाम, आख्यात, उपसर्ग तथा निपात' ( ऋ० प्रा० १२.१७ )। कात्यायन द्वारा भी ऐसा ही कहा गया है ( वा० प्रा० ८.५२, ५३ )।

जहाँ द्रव्य की प्रधानता होती है, वह नाम कहलाता है। यास्क ने कहा है—'सत्त्व' प्रधान है जिनमें वे, नाम कहलाते हैं' ( नि० १. १ )। शौनक के अनुसार भी 'जिस पद से वक्ता सत्त्व का अभिधान (कथन) करता है, वह नाम कहलाता है' ( ऋ० प्रा० १२.१८ )। यहाँ 'सत्त्व'=द्रव्य है। कभी-कभी भाव भी मूर्त्तरूप को प्राप्त होकर सत्त्व के रूप में आया हुआ द्रव्य नाम से अर्थात् लिङ्ग-संख्या-वचन इत्यादि- युक्त शब्दों से व्यवहृत होता है—जैसे व्रज्या, पक्ति ( द्रष्टव्य नि० १ १ )। यहाँ **शङ्का** होती है कि व्रज्या, पक्ति में व्रज् तथा पच् धातुएँ हैं, अतः इन्हें आख्यात के अन्तर्गत आना चाहिये। यहाँ ये नाम कैसे हैं? **समाधान** यह है कि ये कृदन्त प्रत्यय से अभिहित भाव द्रव्य के समान होते हैं, अत एव ये नाम हैं। जैसा यास्क ने कहा है 'सभी द्रव्यों का कथन –'यह क्या है' इस सामान्य शब्द से हो जाता है। जैसे—गौः, अश्वः, पुरुषः, हस्ती इत्यादि ( नि० १.१ )। कात्यायन ने चार पद-समुदायों का प्रयोग तो किया है किन्तु उनका लक्षण नहीं दिया है। निरुक्त के भाष्यकार दुर्गाचार्य ने नाम के विषय में इस प्रकार कहा है- 'नाम वे हैं, जो गौणरूप से 'आख्यात' शब्द में झुक जाते हैं अथवा जो अपने आप को आख्यात शब्द के अर्थ में गौणरूप से झुका देते हैं' ( नि० १ १ दुर्गभाष्य )।

धातु के अर्थ को क्रिया कहते हैं। इसी क्रिया के वाचक पद को आख्यात कहते हैं अर्थात् जिस पद के द्वारा वक्ता क्रिया का कथन करता है, वह आख्यात कहलाता है। जैसा यास्क ने कहा है—'भाव (क्रिया) है प्रधान जिसमें वह, आख्यात (कहलाता है)' (नि० १.१)। शौनक का कथन है कि 'आख्यात वह है जिसके द्वारा वक्ता क्रिया का कथन करता है और जो धातु से समन्वित होता है', 'आख्यात क्रियावाचक होता है' (ऋ० प्रा० १२.१९, २५)। ऐसा होता है, यह भाव ( क्रिया ) का सामान्य लक्षण है। यास्क ने कहा है—'होता है, यह भाव का लक्षण है'। जैसे वह है, सोता है, जाता है, बैठा है, इत्यादि' ( नि० १.१ )। दुर्गाचार्य के मत में 'आख्यात वह है जिसके द्वारा स्त्रीलिङ्ग, पुल्लिङ्ग, नपुंसकलिङ्ग रूपी द्रव्य क्रिया की अपेक्षा गौणरूप से प्रकट किये जाते हैं और उनकी अपेक्षा क्रिया प्रधानरूप से व्यक्त की जाती है' ( नि० १.१ दुर्गभाष्य )। 'जहाँ नाम और आख्यात दोनों प्रधान होते हैं, वहाँ भाव की प्रधानता होती है' ऐसा यास्क का कथन है ( नि० १.१ )। इस प्रकार वाक्य में क्रिया ही प्रधान होती है।

जो नाम तथा आख्यात के अर्थ में विशेषता उत्पन्न करते हैं वे 'उपसर्ग' कहलाते हैं। जैसा शौनक ने कहा है—'उपसर्ग ( नाम तथा आख्यात के अर्थ में ) विशेषता ला देते हैं' ( ऋ० प्रा० १२ १५ )। उपसर्ग के विषय में यास्क ने कई आचार्यों का मत प्रस्तुत किया है। शाकटायन के मत में नाम तथा आख्यात के साथ उपसर्ग सार्थक होते हैं, अन्यत्र तो निरर्थक ही होते हैं '( नाम तथा आख्यात से ) अलग हुए उपसर्ग स्वतन्त्र अर्थों को नहीं कहते' ( नि० १.१ )। गार्ग्य के अनुसार स्वतन्त्र उपसर्ग भी सार्थक होते हैं, निरर्थक नहीं—'उपसर्गों के अर्थ अनेक प्रकार के हुआ करते हैं' ( नि० १ १ )। दुर्गाचार्य के मत में 'आख्यात का ग्रहण करके ये उस आख्यात के ही अर्थ में वैशिष्ट्य उत्पन्न कर देते हैं' ( १.१ दुर्गभाष्य )।

शौनक ने प्र, अभि, आ ·· इत्यादि बीस तथा तैत्तिरीयप्रातिशाख्यकार ने आ, प्र, उप इत्यादि दस उपसर्ग माने हैं। यहाँ शङ्का होती है कि वैयाकरणों ने प्र, परा, अप, सम, अनु, अव, निस्, निर्, दुस्, दुर्, वि, आङ्, नि, अधि, अपि, अति, सु, उत्, अभि, प्रति, परि तथा उप इन बाइस उपसर्गों का विशेषरूप से उल्लेख किया है फिर शौनक इत्यादि ने व्यर्थ ही उपसर्गों को कम करके संकुचित क्यों कर दिया है? समाधान यह है कि संज्ञा प्रयोजनवती होती है। सूत्रकार अपनी आवश्यकतानुसार ही

संज्ञाओं का विधान करते हैं। ऋग्वेद में शौनक द्वारा उक्त तथा कृष्ण-यजुर्वेद में तैत्तिरीयप्रातिशाख्य में उक्त उपसर्ग ही प्राप्त होते हैं। इसलिए उन लोगों ने अपने चरण की संहिता में प्राप्त उपसर्गों का ही निर्देश किया है।

निपात, उपमा इत्यादि अनेक प्रकार के अर्थों में प्रयुक्त होते हैं इसलिए निपात कहलाते हैं। जैसा यास्क ने कहा है—'ये अनेक अर्थों में गिरते हैं, इसलिए निपात हैं' ( नि० १.२)।

ये ही पद-समुदाय हैं जिनमें सम्पूर्ण वैदिक तथा लौकिक वाङ्मय प्रतिष्ठित है। इस ग्रन्थ में अथर्वचरण की संहिताओं को आधार बनाकर इन्हीं चार पदसमुदायों के सन्धिविषयक तथा पदपाठविषयक विधान किए गये हैं।

सन्धि-विषयक और पदपाठ-विषयक विधान क्यों किया गया है, यह बतलाया जा रहा है—पदान्त तथा पदादि में सन्धि द्वारा ही संहिता की निष्पत्ति होती है। सन्धि में वर्णों का आगम, लोप, विकार तथा प्रकृति-भाव होता है। ग्रन्थ के तीन अध्यायों में इन परिणामों का विधान किया गया है। आगम जैसे—'सकार बाद में होने पर टकार से बाद में तकार का ( आगम होता है )' ( २.१.८ )। 'शकार, षकार तथा सकार बाद में होने पर ङकार, णकार तथा नकार से बाद में क्रमशः ककार, टकार तथा तकार का ( आगम होता है )' ( २.१.९ ) इत्यादि। लोप जैसे—'( स्वर बाद में होने पर ) स्वर से बाद में पदान्तीय यकार तथा वकार का ( लोप हो जाता है )' ( २.१.२१ )। 'रेफ बाद में होने पर रेफ का ( लोप हो जाता है )' ( २. १. १९ ) इत्यादि। विकार जैसे—'स्वर तथा घोष बाद में होने पर पदान्तीय अपञ्चम स्पर्श का तृतीय स्पर्श ( हो जाता है )' ( २ १ २ )। 'पञ्चम स्पर्श बाद में होने पर अपञ्चम स्पर्श का पञ्चम स्पर्श हो जाता है' ( २.१.५ ) इत्यादि। प्रकृतिभाव जैसे—'पदान्तीय एकार तथा ओकार से बाद में अकार कहीं-कहीं प्रकृतिभाव से रहता है' ( ३.२.२९ )। 'प्रगृह्य ( स्वर ) भी प्रकृतिभाव से रहते हैं' ( ३. २. ४ ) इत्यादि। इन्हीं सन्धिविधानों के अनुसार पदान्त तथा पदादि में संहिता होती है।

संहिता के मन्त्रों के अर्थावबोध के लिए मन्त्रगत पदों के अर्थ का ज्ञान आवश्यक है। पदों के अर्थज्ञान हेतु उनके मूलरूप का जानना अपेक्षित है। पदों का मूलरूप पदपाठ से ही ज्ञात होता है। संहिता में पदसमूह सन्धि

के कारण अपने मूलरूप में नहीं होते। उनमें लोप, आगम तथा विकार के कारण परिवर्तन हुआ रहता है। अत एव संहिता से पदपाठ के नियमों द्वारा ही उनके मूलरूप का ज्ञान होता है। पदपाठविषयक विधान से पदों का मूलरूप, पदों की संदिग्ध विभक्ति, समस्तरूप, उपसर्ग तथा आख्यात, प्रकृति तथा प्रत्यय और प्रगृह्य स्वर इत्यादि बोधगम्य हो जाते हैं। इसके अतिरिक्त पदपाठ से ही पदों के मूलस्वर का ज्ञान होता है। पदों के मूल-स्वर संहिता में पूर्ववर्ती तथा परवर्ती स्वर के प्रभाव से परिवर्तित रहते हैं। पदपाठ से ही उनके मूलस्वर का ज्ञान होता है। मूलस्वर के ज्ञान के बिना पदों के अभीष्ट अर्थ का निर्धारण नहीं हो सकता। जैसा सूत्रकार ने कहा है—'पद ( -पाठ ) का अध्ययन ( संहिता में प्रयुक्त पदों के ) अन्त, पदों के आदि, पद ( के मूलरूप ), (पदों के ) स्वर तथा पदों के अर्थज्ञान के लिए होता है' ( ४.४.७ )। पाणिनि-शिक्षा में भी कहा गया है—

'स्वर तथा वर्ण से हीन मिथ्या-प्रयुक्त मन्त्र अपने ( अभीष्ट ) अर्थ को नहीं कह पाता। वही ( मिथ्या-प्रयुक्त मन्त्र ) वाणीरूपी वज्र होकर यजमान को विनष्ट कर देता है। जिस प्रकार इन्द्रशत्रु = इन्द्र है शत्रु जिसका ऐसा ( वृत्र ) स्वर ( से अशुद्ध मन्त्र के प्रयोग के ) अपराध के कारण मारा गया' ( पा० शि० ५२ )।

इस प्रकार स्पष्ट है कि संहिता के मन्त्रों के सम्यक् अवबोध के लिए उससे सम्बन्धित सन्धिविषयक तथा पदपाठविषयक विधान अपेक्षित हैं। उन्हीं विधानों को यहाँ बतलाया गया है। संहितापाठ तथा पदपाठ की सुरक्षा हेतु क्रमपाठ भी अनुपेक्षणीय है। जैसा सूत्रकार ने कहा है—'क्रम ( -पाठ ) का अध्ययन संहिता ( -पाठ ) तथा पद ( -पाठ ) दोनों की दृढ़ता के लिए होता है' ( ४. ४. ८ )। अतः उससे सम्बन्धित विधानों को भी सूत्रकार ने निर्दिष्ट किया है।

यहाँ सर्वप्रथम ग्रन्थ के प्रतिपाद्य विषय का कथन मङ्गल के लिए किया गया है। ग्रन्थकार अपने ग्रन्थ की निर्विघ्न समाप्ति के लिए मङ्गल का प्रयोग करता है। विषयवस्तु का निर्देशन भी मङ्गल के लिए ही होता है। जैसा कहा गया है—'आशीर्वादात्मक, नमस्क्रियात्मक और विषयवस्तु-निर्देशात्मक—इस प्रकार तीन तरह के मङ्गल होते हैं ।।१।।

**एवमिहेति च विभाषाप्राप्तं सामान्ये ॥ २ ॥**

**सू० अ०** -व्याकरणशास्त्र में प्राप्त विभाषा ( विकल्प ) यहाँ (वेद के इस चरण में ) इस प्रकार है, ( इसके विधान ) की भी ( प्रतिज्ञा की जाती है ) ।

## निर्मलभाष्यम्

सूत्रे प्रयुक्तः चशब्दः पूर्वसूत्रात् प्रातिज्ञमित्यन्वादिशति । सामान्यं व्याकरणशास्त्रम् । विभाषाप्राप्तं विभाषया विकल्पेन प्राप्तं निर्दिष्टम् । **सामान्ये** व्याकरणशास्त्रे **विभाषाप्राप्तं** विकल्पेन प्राप्तं परिणामम् **इह** अथर्वचरणस्य संहितासु **एवमनेन** प्रकारेण विद्यते **इति च** प्रातिज्ञम् । यथा पाणिनिव्याकरणे 'यरोऽनुनासिकेऽनुनासिको वा' ( पा० व्या० ८.४ ४५ ) इत्यनेन पदादौ अनुनासिके परे पदान्तस्याननुनासिकस्य अनुनासिकविषये विकल्पः उक्तः । अत्र अनुनासिकः विकल्पेन भवति । विकल्पाभावे पदादौ अनुनासिके परेऽपि पदान्तस्याननुनासिकस्य तृतीयः । इत्येवं पदादौ अनुनासिके स्पर्शे परे पदान्तस्याननुनासिकस्य स्पर्शस्य तृतीयः, विकल्पेन च अनुनासिकस्पर्शः पञ्चमः भवति । 'प्रत्यये भाषायां नित्यम्' इति वार्तिकानुसारं पदादौ अनुनासिके प्रत्यये परे एव भाषायां नित्यमनुनासिकम् । परञ्च अथर्वचरणस्य संहितासु सर्वत्र नित्यमेव । पदादौ अनुनासिकस्पर्शे परे पदान्तस्याननुनासिकस्पर्शस्य अनुनासिकस्पर्श एव भवति, न त्वत्र विकल्पः । अत्र तु 'उत्तमा उत्तमेषु' ( २.१.५ ) इत्यनेन पदादिषु उत्तमेषु परेषु पदान्तानामनुत्तमानां नित्यमेव अनुनासिकः भवत्येव ॥ २ ॥

## शशिकला

सूत्र में प्रयुक्त च शब्द यहाँ पूर्ववर्ती सूत्र से 'प्रतिज्ञा की जाती है' का अन्वादेश करता है । सामान्य का अर्थ है व्याकरणशास्त्र । विभाषा प्राप्त का अर्थ है—विकल्प से प्राप्त । व्याकरणशास्त्र में विकल्प से प्राप्त परिणाम यहाँ अथर्वचरण की संहिताओं में इस प्रकार है, यह विधान करने की भी प्रतिज्ञा की जाती है । तात्पर्य यह है कि व्याकरणशास्त्र में जिन विकल्पों को कहा गया है, वे विकल्प इस चरण की संहिताओं में इस रूप में प्राप्त होते हैं, यह भी यहाँ बतलाया जायेगा । जैसे-पाणिनि व्याकरण में 'अनुनासिक बाद में होने पर यर् का विकल्प से अनुनासिक होता है' (पा० व्या० ८.४.४५ ) के द्वारा पदादि अनुनासिक बाद में होने पर पदान्त अननुनासिक स्पर्श के अनुनासिक होने के विषय में विकल्प कहा गया है । यहाँ अनुनासिक विकल्प से होता है । विकल्प न होने पर अननुनासिक स्पर्श

का तृतीय स्पर्श ही रहता है। 'प्रत्यय बाद में होने पर भाषा में नित्य अनुनासिक होता है', इस वार्तिक के अनुसार पदादि अनुनासिक प्रत्यय बाद में होने पर ही भाषा में नित्य अनुनासिक प्राप्त होता है किन्तु अथर्वचरण की संहिताओं में पदादि अनुनासिक वाला प्रत्यय बाद में हो या अन्य पदादि अनुनासिक वर्ण, सर्वत्र[१] नित्य ही अनुनासिक स्पर्श बाद में होने पर पदान्त अननुनासिक स्पर्श का अनुनासिक हो जाता है। इस विषय में विकल्प नहीं है। यहाँ तो 'पञ्चम स्पर्श बाद में होने पर अपञ्चम स्पर्श पञ्चम हो जाता है' ( २.१५ ) इस विधान के अनुसार पदादि पञ्चम स्पर्श बाद में होने पर पदान्त अपञ्चम स्पर्श का नित्य अनुनासिक हो जाता है ॥ २ ॥

[ पद्यसंज्ञाविधानम् ]

## पदान्त्यः पद्यः ॥ ३ ॥

सू० अ०—पद के अन्त में विद्यमान ( वर्ण ) 'पद्य' कहलाता है।

### निर्मलभाष्यम्

संज्ञाविधायकं सूत्रमिदम्। तनुपदेन विस्तृतार्थद्योतनाय सूत्रकारैः संज्ञा विहिताः। एकस्मिन्स्थाने विशिष्टार्थं प्रकटयितुं विशिष्टसंज्ञां विधाय अन्यस्मिन्स्थले तदर्थं द्योतनाय तद्विशिष्टसंज्ञां प्रयोज्यते। अनेन लघुसंज्ञाप्रयोगेन ग्रन्थाकारे लघुत्वञ्जायते।

सूत्रकारेणात्र पद्यसंज्ञा विहिता। **पदान्त्यः** पदान्ते विद्यमानो वर्णः **पद्यः** पद्यसंज्ञकः भवति। यथा—'गोधुक्' ( सं० ७.७३.६ ), 'विराट्' ( सं ८ ९.८ ) 'दृशत्' ( सं० २.३१.१ ), 'त्रिष्टुप्' ( सं० ८.९.२० ) इत्यादयः। इत्यत्र पदान्ते विद्यमानः क्रमेण ककारः टकारः तकारः पकारश्च पद्यसंज्ञकः। यत्र पदान्त्यस्यार्थद्योतनमभीष्टं तत्र पद्यसंज्ञा प्रयुक्ता विद्यते। संज्ञायाः प्रयोजनम्—अन्लकारः स्वरः पद्यः' ( ११.४ ) 'पद्यञ्च' ( १.२ १६ ) इत्यादयः।

शौनकेन पद्यसंज्ञायाः विधानन्तु न कृतं तदपि पदान्ते विद्यमानानां वर्णानां निर्देशः कृतः। तन्मते विसर्जनीयादन्या ऊष्माणः, अन्तःस्थाः, सोष्माणश्चवर्गस्य स्पर्शा ऋकारश्च पदान्ते न आयान्ति। यथोक्तमृक्प्राति-

---

१. सर्वत्र का अर्थ है—सभी स्थलों पर। बाद में पदादि प्रत्यय का पञ्चम स्पर्श हो या अन्य पद का। सभी स्थलों पर पूर्ववर्ती अननुनासिक का अनुनासिक हो जाता है।

शाख्ये–'ऊष्मान्तःस्थसोष्मचकारवर्गा नान्तं यान्त्यन्यत्र विसर्जनीयात्' ( ऋ० प्रा० १.२१ )। विधानेनानेन स्पष्टं यत्तदन्याः वर्णाः पदान्ते आयान्ति। एवमेते वर्णाः पदान्त्याः भवन्ति—विसर्जनीय ऋकारव्यतिरिक्तस्वरवर्णाश्च-वर्गादन्याश्च स्पर्शाः। शौनकेन सावग्रहपदस्य पूर्वोत्तरपदनिमित्तं पद्यसंज्ञा प्रयुक्ता। यथा–'अप्रत्याम्नाये पदवच्च पद्यान्' ( ऋ० प्रा० १.६१ ), 'उपोत्तमं नानुदात्तं न पद्यम्' ( ऋ० प्रा० १७४ ) इत्यादयः। इत्यत्र पद्यसंज्ञा सावग्रह-पदस्य पूर्वपदोत्तरपदकृते प्रयुक्ता।

कात्यायनेनापि पदान्तीयाः वर्णा निर्दिष्टाः—'प्रथमोत्तमा पदान्तीया अच्ञौ' 'विसर्जनीयः' 'स्वराश्च ऌकारवर्जम्' ( वा० प्रा० १८५–८७ )।

वस्तुतस्तु संहितापाठपदपाठयोः सम्यगवबोधनाय पदान्ते स्थितानां पदादौ चागतानां वर्णानाञ्ज्ञानमत्यावश्यकम्। यतो हि पदैः संहिताकार्य-समये पदान्ते पदादौ एव सन्धिविषयकानि विकारादिकार्याणि भवन्ति। यथोक्तमृक्प्रातिशाख्ये –'पदान्तादिष्वेव विकारशास्त्रम्' ( ऋ० प्रा० २५ )। न तु पदमध्ये यतो हि प्रातिशाख्यकाराणां मते तु पदाः सिद्धाः। अत एव सूत्रकारेणाप्यत्रानन्तरं सूत्रचतुष्टयेन पदान्त्या वर्णाः निर्दिष्टाः॥ ३॥

## शशिकला

यह पद्य संज्ञा विधायक सूत्र है। सूत्रकारों ने अपने सूत्रग्रन्थ में विस्तृत अर्थ को प्रकट करने के लिए संज्ञाओं का विधान किया है। सूत्रकार ग्रन्थ में अर्थविशेष को प्रस्तुत करने के लिए एक स्थल पर संज्ञा ( पारिभाषिक शब्द ) का विधान कर देते हैं, पुनः उस ग्रन्थ में जहाँ-जहाँ उस अर्थ-विशेष का द्योतन उनको अभीष्ट होता है वहाँ-वहाँ उस संज्ञा का प्रयोग करके उस विशिष्ट अर्थ को प्रदर्शित करते हैं। इससे ग्रन्थ के आकार में लाघवत्व होता है।

सूत्रकार ने इस सूत्र में 'पद्य' संज्ञा का विधान किया है। पद के अन्त में विद्यमान वर्ण 'पद्य' संज्ञक होता है। जैसे 'गोधुक्'[१], 'विराट्'[२], 'दृशत्'[३], 'त्रिष्टुप्'[४] इत्यादि। यहाँ क्रमशः ककार, टकार, तकार तथा

---

१. गो-धुक् ( प० पा० )
२. वि-राट् ( प० पा० )
३. दृशत् ( प० पा० )
४. त्रि-स्तुप् ( प० पा० )

पकार पद के अन्त में विद्यमान हैं, अतः ये 'पद्य' हैं। सूत्रकार ने यहाँ 'पद्य' संज्ञा का विधान कर दिया है। आगे इस ग्रन्थ में जहाँ-जहाँ 'पद के अन्त में विद्यमान' इस अर्थ का द्योतन अभीष्ट है, वहाँ-वहाँ 'पद्य' संज्ञा का प्रयोग करके उक्त अर्थ का द्योतन हुआ है। पद्य संज्ञा के विधान का प्रयोजन—'ऌकार से अन्य स्वरवर्ण पद्य होते हैं' ( १.१.४ ) 'पद्य भी ( पूर्ववर्ती स्वरवर्ण का अङ्ग होता है )' ( १ २.१६ ) इत्यादि। यहाँ 'पद्य' संज्ञा से 'पद के अन्त में विद्यमान' इस अर्थ-विशेष का द्योतन होता है।

शौनक ने ऋ० प्रा० में 'पद्य' संज्ञा का विधान तो नहीं किया है किन्तु पदान्तीय वर्णों का निर्देश किया है। ऋ० प्रा० में पद के अन्त में न आने वाले वर्णों को बतलाया गया है। उसके अनुसार 'विसर्जनीय को छोड़कर अन्य सभी ऊष्म वर्ण, अन्तःस्थ वर्ण, ऋकार सोष्मवर्ण ( वर्गों के द्वितीय, चतुर्थ स्पर्श ) तथा चवर्ग के स्पर्श पद के अन्त में नहीं आते' ( ऋ० प्रा० १२.१ )। इससे स्पष्ट है कि इनसे अन्य वर्ण पदान्तीय होते हैं। वे ये हैं—विसर्जनीय, ऋकार से अन्य स्वर वर्ण, चवर्ग से अन्य वर्गों के प्रथम तथा उत्तम स्पर्श। इस प्रातिशाख्य में पद्य संज्ञा का प्रयोग सावग्रह पद के दोनों पदों के लिए हुआ है। जैसे—'विपरीत विधान न होने पर पद्यों ( सावग्रह-पद के दोनों पदों ) को पद के समान ( समझना चाहिए )' ( ऋ० प्रा० १.६१ ) 'अन्तिम से पूर्ववर्ती ( त्वे ) अनुदात्त अथवा 'पद्य' ( होने पर ) प्रगृह्य नहीं होता है' ( ऋ० प्रा० १.७४ )।

कात्यायन ने भी वा० प्रा० में पदान्तीय वर्णों का निर्देश किया है। उनके अनुसार 'चवर्ग से अन्य वर्गों के प्रथम तथा उत्तम स्पर्श' 'विसर्जनीय' तथा ऌकार से अन्य स्वर वर्ण (पदान्तीय होते हैं)' (वा० प्रा० १.८५–८७)।

वस्तुतः संहितापाठ तथा पदपाठ दोनों के सम्यक् ज्ञान के लिए पद के अन्त तथा आदि में आने वाले वर्णों का बोध होना अत्यावश्यक है, क्योंकि पदपाठ से संहिता करते समय विकारादि सन्धिविषयक कार्य पदान्त तथा पदादि में ही होते हैं। जैसा ऋ० प्रा० में कहा गया है—'पदान्तों और पदादियों में ही विकार-शास्त्र को जानना चाहिए' ( ऋ० प्रा० २.५ )। ये कार्य पद के मध्य में नहीं होते क्योंकि प्रातिशाख्यकार पदों को सिद्ध मानते हैं। इसलिए चतुरध्यायिकाकार ने भी अगले चार सूत्रों (१.४.४–७) में पदान्तीय वर्णों का निर्देश किया है ॥ ३ ॥

[ पदान्त्यवर्णनिर्देशः ]

## अन्लृकारः स्वरः पद्यः ॥ ४ ॥

सू० अ०—लृकार—व्यतिरिक्त ( लृकार से अन्य ) स्वर ( वर्ण ) पद्य ( होते हैं )।

### निर्मलभाष्यम्

के के वर्णाः पदान्त्या इत्यत्र विधीयन्ते। **अन्लृकार** लृकारव्यतिरिक्तः **स्वरः** स्वरवर्णः **पद्यः** पदान्त्यः भवति। यथा—'ब्रह्म' ( सं० १.१९.४ ) 'शाला' ( सं० ९.३.१७ ) 'कुमारी' ( सं० १०.८ २७ ) 'मधु' ( सं० १.३४.२ ) 'इन्द्रवायू' ( सं० ३.२०.६ ) 'वायो' ( सं० २.२०.१ ) 'तौ' ( सं० ३.२४ ७ ) 'अस्यै' ( सं० २.३६.१ ) 'पितृभिः' ( सं० ६.६३.३ ) 'पितृलोकम्' ( सं० १८ ४.६४ ) इत्यत्र अकार आकार ईकार उकार ऊकार ओकार औकार ऐकार ऋकारश्च पद्यः। **ननु** पितृभिः पितृलोकम् इत्यत्र ऋकारस्तु पदमध्ये विद्यमानः न तु पदान्ते तत्कथमस्य पदान्त्यत्वमर्हति ? **उच्यते**—'अप्रत्याम्नाये पदवच्च पद्यान्' ( ऋ० प्रा० १.६१ ) अथवा 'नानापदवदिङ्गचमसङ्ख्याने' ( तै० प्रा० १.४८ ) इत्यनुसारेण सावग्रहपदस्य पूर्वपदं पृथक्पदवद्भवति। 'पितृभिः' 'पितृलोकम्' इत्यत्र 'पितृ' इत्येतत्पदं सावग्रहपदस्य पूर्वपदम्। अतो हि पदमिदं पृथक्पदवद्भवति। अत एवास्य पदस्यान्ते विद्यमानः ऋकारः पदान्त्य एव। अथ वा कात्यायनानुसारं णकार ऋकारश्च अवग्रहे =सावग्रहपदस्य पूर्वपदान्ते आयाति। यथोक्तं—'णर्कारावग्रहे ( वा० प्रा० १.८८ ) इति। शौनकमते तु ऋकारादन्यः स्वरवर्णः पदान्तीयः। यथोक्त-मृक्प्रातिशाख्ये 'ऊष्मान्तःस्थसोष्मचकारवर्गा नान्तं यान्त्यन्यत्र विसर्ज-नीयात्' ( ऋ० प्रा० १२.१ ) इति। कात्यायनस्य मते—'स्वराश्च लृकार-वर्जम्' ( वा० प्रा० १ ८७ ) इति ॥ ४ ॥

### शशिकला

पद के अन्त में कौन-कौन वर्ण आते हैं, उनका निर्देश यहाँ किया गया है। लृकार से अन्य स्वरवर्ण पद के अन्त में आते हैं। जैसे—'ब्रह्म' 'शाला' 'कुमारी' 'मधु' 'इन्द्रवायू' 'वायो' 'तौ' 'अस्यै' 'पितृभिः' 'पितृलोकम्' इत्यादि। यहाँ क्रमशः अकार, आकार, ईकार, उकार, ऊकार, ओकार, औकार, ऐकार तथा ऋकार पदान्तीय हैं। यहाँ शङ्का होती है कि 'पितृभिः' तथा 'पितृलोकम्' में ऋकार तो पद के मध्य में विद्यमान है, अन्त में नहीं फिर

यह पदान्तीय कैसे है ? समाधान यह है कि ( १ ) सावग्रहपद के पूर्व तथा उत्तर पद पृथक् पद के समान होते हैं। जैसा ऋ० प्रा० में कहा गया है—'विपरीत विधान न होने पर पद्यों ( सावग्रह पद के दोनों पदों ) को पद के समान ( समझना चाहिए )' ( ऋ० प्रा० १.६१ )। ऐसा ही तै० प्रा० में भी कहा गया है कि 'विशेष कथन न होने पर इङ्ग्य ( सावग्रहपद का पूर्वपद ) अलग पद के समान ( होता है )' ( तै० प्रा० १.४८ )। इसलिए 'पितृभिः'[1] तथा 'पितृलोकम्'[2] इन सावग्रह पदों में 'पितृ' पूर्वपद है जो पृथक् पद के समान है, अतः ऋकार पितृ पद के अन्त में विद्यमान होने से पदान्तीय है। अथवा [२] कात्यायन के अनुसार 'णकार तथा ऋकार अवग्रह ( सावग्रह पद के पूर्वपद ) के अन्त में आते हैं' ( वा० प्रा० १.८८ ) इससे भी पितृ के ऋकार का पदान्त्यत्व है।

शौनक के मत में ऋकार से अन्य स्वरवर्ण पद के अन्त में आते हैं। जैसा ऋ० प्रा० में कहा गया है—'विसर्जनीय को छोड़कर अन्य ऊष्म ( वर्ण ) अन्तःस्थ ( वर्ण ), ऋकार, सोष्म ( वर्ण ) तथा चवर्ग पद के अन्त में नहीं आते' ( ऋ० प्रा० १२.१ ) इस कथन से स्पष्ट है कि ऋकार से अन्य स्वरवर्ण पद के अन्त में आते हैं।

कात्यायन का भी मत चतुरध्यायिकाकार के समान ही है 'ऌकार को छोड़कर अन्य स्वर वर्ण पदान्तीय होते हैं ( वा० प्रा० १.८७ ) ॥ ४ ॥

## लकारविसर्जनीयौ च ॥ ५ ॥

सू० अ०—लकार और विसर्जनीय भी ( पद्य होते हैं )।

### निर्मलभाष्यम्

च शब्दोऽत्र 'पद्यः' इत्यन्वादिशति। लकारविसर्जनीयौ लकारश्च विसर्जनीयश्च लकारविसर्जनीयौ तावुभावपि पद्यौ पदान्तीयौ स्याताम्। यथा –'बाल् ( सं० १.३.१ ), 'वृक्षः' ( सं० ४ ७.५ ) इत्यादयः। इत्यत्र लकारश्च विसर्जनीयश्च पदान्त्यः। शौनकमते विसर्जनीय एव पदान्त्यः न तु लकारः –'ऊष्मान्तःस्थसोष्मचकारवर्गा नान्तं यान्त्यन्यत्र विसर्जनीयात्' ( ऋ० प्रा० १२.१ ) इत्यत्र विसर्जनीयस्यैव पदान्तत्वं विहितम्। अन्तःस्थ-

१. पितृ-भिः ( प० पा० )
२. पितृ-लोकम् ( प० पा० )

त्वेन लकारस्य पदान्त्यत्वं निषिध्यते। कात्यायनेनापि विसर्जनीयस्यैव पदान्त्यत्वमुक्तम्—'विसर्जनीयः' ( वा० प्रा० १.८६ )। अत्रापि लकारस्य पद्यत्वविधानं न कृतम्। यतो हि ऋग्वेदे शुक्लयजुर्वेदे च लकारस्य पदान्त्यत्वाभावः ॥ ५ ॥

## शशिकला

सूत्र में विद्यमान 'च' पूर्ववर्ती सूत्र से 'पद्य' का अन्वादेश करता है। लकार और विसर्जनीय भी पद्य ( पदान्त्य ) होते हैं। जैसे—'बाल्' 'वृक्षः' इत्यादि। यहाँ पदान्त में स्थित लकार तथा विसर्जनीय पदान्त्य हैं। शौनक के अनुसार भी विसर्जनीय पद के अन्त में आता है किन्तु लकार नहीं। जैसा ऋ० प्रा० में कहा गया है—'विसर्जनीय को छोड़कर अन्य सभी ऊष्म ( वर्ण ), अन्तःस्थ ( वर्ण ) ऋकार, सोष्म ( वर्ण ) और चवर्ग पदों के अन्त में नहीं आते' ( ऋ० प्रा० १२.१ )। इससे स्पष्ट है कि विसर्जनीय पद के अन्त में आता है किन्तु अन्तःस्थ होने से लकार के पदान्तीय होने का निषेध किया गया है। कात्यायन का भी विसर्जनीय के पदान्तीय होने के विषय में यही मत है 'विसर्जनीय . पदान्तीय होता है )' ( वा० प्रा० १.८६ )। उन्होंने भी लकार के पदान्तीय होने का विधान नहीं किया है। इसका कारण यह है कि ऋग्वेद तथा शुक्लयजुर्वेद में लकार के पदान्त में होने का अभाव है ॥ ५ ॥

## स्पर्शाः प्रथमोत्तमाः ॥ ६ ॥

सू० अ०—प्रथम और उत्तम ( स्पर्श पद्य होते हैं )।

## निर्मलभाष्यम्

पञ्चविंशतिः स्पर्शाः पञ्चवर्गेषु विभक्ताः। कवर्गः चवर्गः टवर्गः तवर्गः पवर्गश्चेति। प्रतिवर्गेषु पञ्चसङ्ख्याकाः स्पर्शाः सन्ति। कचटतपाः प्रथमाः खछठथफाः द्वितीया गजडदबाः तृतीयाः घझढधभाश्चतुर्थाः ङञणनमाश्चोत्तमाः पञ्चमा वा। तत्र प्रथमा उत्तमाश्च पद्याः। प्रथमाश्चोत्तमाश्च प्रथमोत्तमाः। स्पर्शानां पञ्चवर्गेषु **प्रथमोत्तमाः** प्रथमा उत्तमाश्च **स्पर्शाः** पदान्तीयाः। प्रथमा यथा—'प्रत्यक्' ( सं० ४.१८.२ ), 'वषट्' ( सं० १११.१ ), 'यत्' ( सं० १.२.३ ), 'त्रिष्टुप्' ( सं० ८.९.२० ) इत्यादयः। उत्तमा यथा—'अर्वाङ्' ( सं० ३.२.३ ) 'ब्रह्मण्वतीम्' ( सं० ६ १०८ २ ), 'अस्मान्' ( सं० १.१.४ ), 'तेषाम्' ( सं० १.१.१ ) इत्यादयः। इत्यत्र

प्रथमः पञ्चमश्च स्पर्शः पदान्तीयः । ब्रह्मण्वतीमित्यत्र सावग्रहपदस्य पूर्व-पदान्ते विद्यमानस्य णकारस्य पदान्त्यत्वं 'अप्रत्याम्नाये पदवच्च पद्यान्' ( ऋ० प्रा० १.६१ ) नानापदवदिङ्गचमसङ्ख्याने' ( तै० प्रा० १.४८ ) इत्यनुसारेणाशङ्कनीयम् । चवर्गस्य प्रथमोत्तमयोः पदान्तीयत्वं न । अत एवैतन्निषेधः 'न चवर्गः' ( १.१.७ ) इत्यत्र विहितः । शौनकेनापि प्रथमोत्त-मयोः स्पर्शयोः चवर्गव्यतिरिक्तयोः पदान्त्यत्वं मतम् —'ऊष्मान्तःस्थसोष्म-चकारवर्गा नान्तं यान्त्यन्यत्र विसर्जनीयात्' ( ऋ० प्रा० १२.१ ) । कात्या-यनमतेऽपि चवर्गादन्ययोः प्रथमोत्तमयोः पदान्तीयत्वं भवति – प्रथमोत्तमाः पदान्तीया अञ्चौ' ( वा० प्रा० १.८५ ) ॥ ६ ॥

## शशिकला

पचीस स्पर्श वर्ण हैं । वे स्पर्श वर्ण कवर्ग, चवर्ग, टवर्ग, तवर्ग तथा पवर्ग इन पाँच वर्गों में विभक्त है । प्रत्येक वर्ग में पाँच-पाँच स्पर्श होते हैं । क च ट त प प्रथम, ख छ ठ थ फ द्वितीय, ग ज ड द ब तृतीय, घ झ ढ ध भ चतुर्थ तथा ङ ञ ण न म उत्तम अथवा पञ्चम स्पर्श कहलाते हैं । उनमें से प्रथम तथा उत्तम स्पर्श पद के अन्त में आते हैं । प्रथम स्पर्श जैसे 'प्रत्यक्' 'वषट्' 'यत्' 'त्रिष्टुप्' इत्यादि । उत्तम स्पर्श जैसे – 'अर्वाङ्' 'ब्रह्मण्वतीम्' 'अस्मान्' 'तेषाम्' इत्यादि । यहाँ प्रथम तथा पञ्चम स्पर्श पदान्तीय हैं । 'ब्रह्मण्वतीम्'[१] में णकार के पदान्तीय होने के विषय में शङ्का नहीं करनी चाहिए ।[२] क्योंकि ऐसा कहा गया है 'विपरीत विधान न होने पर पद्यों को पद के समान जानना चाहिए' ( ऋ० प्रा० १६१ ) तथा 'सावग्रहपद का पूर्वपद विशेष विधान न होने पर पद के समान होता है' ( तै० प्रा० १.४८ ) । चवर्ग का प्रथम और पञ्चम स्पर्श पदान्तीय नहीं होता । इसलिए कहा गया है - 'चवर्गीय वर्ण पदान्त नहीं होते' ( १.१.७ ) । आचार्य शौनक ने ऋ० प्रा० में चवर्ग से अन्य वर्गों के प्रथम तथा उत्तम स्पर्श को पदान्तीय होने का विधान किया है ( ऋ० प्रा० १२.१ ) । कात्यायन मुनि भी ऐसा ही मानते हैं ( वा० प्रा० १.८५ ) ॥ ६ ॥

---

१. ब्रह्मण्-वतीम् ( प० पा० )

२. 'ब्रह्मण्वतीम्' में णकार पद के मध्य में विद्यमान है अतः इसके पदान्तीय होने में सन्देह होता है । इस शङ्का का समाधान यह है कि 'ब्रह्मण्वतीम्' इस सावग्रहपद का पूर्वपद 'ब्रह्मण्' अलग पद के समान है । अतः इस पद के अन्त में विद्यमान होने से णकार पदान्तीय है ।

[ पदान्त्यवर्णस्य निषेधः ]

## न चवर्गः ॥ ७ ॥

**सू० अ०**—चवर्ग ( का वर्ण पद्य) नहीं ( होता )।

### निर्मलभाष्यम्

'स्पर्शाः प्रथमोत्तमाः' ( १.१.६ ) इत्यस्यापवादोऽयम्। **चवर्गः** चवर्गस्य स्पर्शः पदान्तीयः **न** भवति। ध्यातव्यमत्र यत् 'चवर्गः' इत्यनेन चवर्गस्य प्रथमोत्तमौ स्पर्शौ निर्दिष्टौः। यतो हि पूर्वसूत्रे प्रथमोत्तमयोः स्पर्शयोः पदान्त्यत्वं विहितमत एवात्र तयोरेव निषेधः कृतः। शौनकमतेऽपि चवर्गः पदान्त्यः न भवति—'ऊष्मान्तःस्थसोष्मचकारवर्गा नान्त्तं यान्त्यन्यत्र विसर्जनीयात्' ( ऋ० प्रा० १२.१ )। कात्ययनोऽपि चवर्गस्य पदान्त्यत्वं नैव मन्यते —'प्रथमोत्तमाः पदान्तीया अच्ञौ' ( वा० प्रा० १.८५ ) इति ॥ ७ ॥

### शशिकला

यह पूर्ववर्ती विधान 'प्रथम तथा उत्तम स्पर्श पदान्तीय होते हैं' ( १.१.६ ) का अपवाद है। चवर्ग के स्पर्श पदान्तीय नहीं होते। उल्लेखनीय है कि यहाँ चवर्ग से चवर्ग के प्रथम तथा उत्तम स्पर्श का ही ग्रहण होता है क्योंकि इसके पूर्व सूत्र में वर्गों के प्रथम तथा उत्तम स्पर्श के पदान्तीय होने का विधान किया गया है अतः चवर्ग के भी प्रथम तथा उत्तम स्पर्श का पदान्तीयत्व प्राप्त होता है जिसका निषेध यहाँ किया गया है। शौनक ने भी चवर्ग के पदान्तीय न होने का निर्देश ऋ० प्रा० में किया है –'विसर्जनीय से अन्य ऊष्म, अन्तःस्थ, ऋकार तथा चवर्ग के वर्ण पदान्त में नहीं आते' ( ऋ० प्रा० १२.१ )। कात्यायन ने भी वा० प्रा० में चवर्ग के पदान्तीय न होने का निर्देश किया है—'चकार तथा ञकार से अन्य प्रथम तथा उत्तम स्पर्श पदान्तीय होते हैं' ( वा० प्रा० १.८५ ) ॥ ७ ॥

[ तृतीयस्पर्शस्यापदान्त्यत्वकथनम् ]

## प्रथमान्तानि तृतीयान्तानीति शौनकस्य प्रतिज्ञानं न वृत्तिः ॥ ८ ॥

**सू० अ०**—प्रथमान्तः ( पद ) तृतीयान्त होते हैं यह शौनक का ( विधान ) परिज्ञान के लिए है; प्रयोग के लिए नहीं।

## निर्मलभाष्यम्

'स्पर्शाः प्रथमोत्तमाः' ( १.१.६ ) इत्यनेन प्रथमानामुत्तमानाञ्च स्पर्शाणां पदान्तीयत्वमुक्तम् । प्रथमान्तानां स्पर्शानां विषये शौनकेन मतद्वयं निर्दिष्टम्—प्रथमन्तु गार्ग्यस्य मते स्पर्शानां तृतीयाः पदान्ते भवन्ति 'तस्मादन्यमवसाने तृतीयं गार्ग्यं स्पर्शम्' ( ऋ० प्रा० १.१५ ) । द्वितीयन्तु शाकटायनानुसारं प्रथमाः स्पर्शाः पदान्ते भवन्ति—'प्रथमं शाकटायनः' ( ऋ० प्रा० १.१६ ) । अत्र शौनकस्य पदान्तविषये प्रथमानां तृतीयानाञ्च विधानम् प्रतिज्ञानम् अवबोधनार्थं भवति, न तु वृत्तिः- प्रयोगार्थं नैव भवति । अत्र शाकटायनस्यैव मतंमतिसमीचीनं ज्ञायते यतो हि ऋक्प्रातिशाख्ये सन्धिविषयकविधानं प्रथमान्तान् स्पर्शान् अधिकृत्यैव विहितम् । अन्यच्च पदपाठकर्तृणा शाकल्येन पदपाठे पदान्ते प्रथमा एव स्पर्शाः मताः । अत एव तत्र प्रथमाः स्पर्शा एव पदान्ते निर्दिष्टाः । अत्र सूत्रकारस्यापीदमेव मतम् । शौनकेन पदान्तविषये यन्मतद्वयमुक्तम् तत्र तृतीयान्तानि इत्यवबोधनार्थं भवति, न तु प्रयोगार्थम् । प्रयोगे सन्ध्यादिकार्ये तु पदान्ते प्रथमाः स्पर्शा एव अभीष्टाः । अतएव सूत्रकारेणापि प्रथमानां स्पर्शाणामेव पदान्तीयत्वमुक्तम् । सन्ध्यादिकार्येऽपि पदाः प्रथमान्ता इति मत्वा विधानं कृतम् ॥ ८ ॥

## शशिकला

'प्रथम तथा पञ्चम स्पर्श पदान्तीय होते हैं' ( १.१.६ ) द्वारा प्रथम तथा पञ्चम स्पर्श के पदान्तीय होने का विधान किया गया है । प्रथम स्पर्श के पदान्तीय होने के विषय में शौनक ने दो मतों का निर्देश किया है—प्रथम गार्ग्य के मत में 'स्पर्शवर्गों के तृतीय स्पर्श पद के अन्त में आते हैं' ( ऋ० प्रा० १.१५ ) । द्वितीय शाकटायन के अनुसार वर्गों के 'प्रथम स्पर्श पदान्तीय होते हैं' ( ऋ० प्रा० १.१६ ) । यहाँ शौनक द्वारा पदान्तीयत्व के विषय में प्रथम तथा तृतीय स्पर्शों का विधान जानकारी के लिए किया गया है । सन्धि आदि-विषयक प्रयोग के लिए नहीं । यहाँ शाकटायन का प्रथम स्पर्श के पदान्तीय होने का मत अधिक समीचीन प्रतीत होता है क्योंकि ( १ ) ऋ० प्रा० में सन्धि विषयक-विधान प्रथम स्पर्श को पदान्तीय मान कर ही किया गया है (२) ऋग्वेद के पदपाठकार शाकल्य ने प्रथम स्पर्श को ही पद के अन्त में निर्दिष्ट किया है । यहाँ सूत्रकार ने प्रथम स्पर्श को ही पदान्तीय होने पर बल दिया है । शौनक ने प्रथम तथा तृतीय स्पर्श की पदान्तीयता के विषय में जो दो मतों का निर्देश किया है, वह केवल ज्ञान

के लिए है, प्रयोग के लिए नहीं। सन्धि-विषयक आदि प्रयोग में तो प्रथम स्पर्श की ही पदान्तीयता अभीष्ट है। इसीलिए सूत्रकार ने प्रथम स्पर्श को ही पदान्तीय होने का कथन किया है तथा प्रथम स्पर्श को ही पदान्तीय मान कर सन्धिविषयक विधान किया है ॥ ८ ॥

## अधिस्पर्शश्च ॥ ९ ॥

सू० अ० –अधिस्पर्श भी ( परिज्ञान के लिए होता है, प्रयोग के लिए नहीं )।

### निर्मलभाष्यम्

च शब्दोऽत्र 'प्रतिज्ञानं न वृत्तिः' इत्यन्वादिशति। **अधिस्पर्शं च** प्रतिज्ञानम् अवबोधनाय भवति न तु वृत्तिः न प्रयोगार्थम् इत्यर्थः। 'स्वराद्यवयोः पदान्तयोः' ( २.१ २१ ) इत्यनेन स्वरात्पदान्तयोः यवयोः लोपः उक्तः। तत्र शाकटायनस्य मते 'लेशवृत्तिरधिस्पर्शं शाकटायनः' ( २ १.२४ ) इत्यनेन लेशवृत्तिः—लुप्तवदुच्चारणं भवति। तल्लुप्तवदुच्चारणम् अधिस्पर्शसंज्ञकः। अधिस्पर्शं—लेशवृत्तिः, लुप्तवदुच्चारणम्। माचाकीयस्य मते यकारवकारौ अवर्णपूर्वौ उकारौकारपरौ लुप्येते-'उकारौकारपरौ लुप्येते माचाकीयस्य' ( तै० प्रा० १०.२२ )। परश्च वात्सप्रस्य मते तु अवर्णपूर्वौ यवकारौ उकारौकारपरौ लेशः लुप्तवदुच्चारितौ भवतः—'लेशो वात्सप्रस्य' ( तै० प्रा० १०.२३ )। पदान्तयोः स्वराद्यवयोः लुप्तवदुच्चारणं प्रतिज्ञानं भवति, नैव प्रयोगार्थम्। प्रयोगे तु स्वरे परे पदान्तीययोः यकारवकारयोः लोप एव ॥९॥

### शशिकला

सूत्र में प्रयुक्त च शब्द पूर्ववर्ती सूत्र से 'ज्ञान के लिए ( होता है ), प्रयोग के लिए नहीं' का अन्वादेश करता है। अधिस्पर्श भी ज्ञान के लिए होता है, प्रयोग के लिए नहीं—यह अर्थ है। 'स्वर से बाद में पदान्त यकार तथा वकार का लोप हो जाता है' से स्वर से बाद में पदान्त यकार तथा वकार का लोप विहित है 'शाकटायन के मत से स्वर से बाद में पदान्त यकार तथा वकार का लुप्तवदुच्चारण होता है, ( वह लुप्तवदुच्चारण ) अधिस्पर्श (कहलाता है)' के द्वारा अधिस्पर्श का कथन किया गया है। अधिस्पर्श —लेशवृत्ति, लुप्तवदुच्चारण। माचाकीय के मत में 'उकार तथा ओकार बाद में होने पर अवर्ण से परवर्ती पदान्त यकार तथा वकार का लोप हो जाता है' ( तै० प्रा० १०.२२ )। किन्तु वात्सप्र के मत में 'उकार तथा ओकार

बाद में होने पर अवर्ण से परवर्ती यकार तथा ओकार का लुप्तवत्-उच्चारण ( लेश ) होता है' ( तै० प्रा० १०.२३ )। यह यकार तथा वकार का लुप्त-वदुच्चारण विषयक विधान केवल जानकारी के लिए होता है, प्रयोग के लिए नहीं। प्रयोग में तो स्वर बाद में होने पर स्वर से परवर्ती यकार तथा वकार का लोप हो ही जाता है ॥ ९ ॥

[ सोष्मसंज्ञाविधानम् ]

## द्वितीयचतुर्थाः सोष्माणः ॥ १० ॥

**सू० अ०**—( स्पर्श-वर्गों के ) द्वितीय तथा चतुर्थ ( स्पर्श ) सोष्म ( कहलाते हैं )।

### निर्मलभाष्यम्

सोष्मसंज्ञाऽत्र विहिता। **द्वितीयचतुर्थाः** स्पर्शवर्गाणां द्वितीयाः खछठथफाः चतुर्थाः घझढधभाः **सोष्माणः** सोष्मसंज्ञकाः भवन्ति। ऊष्मा वायुः। तेन सः वर्तन्त इति सोष्माणः। **ननु** वायुना एव सर्वे वर्णा उच्चारिताः तत्कथम् एते एव सोष्माणः ? **उच्यते**—अतिशयार्थं वचनम्। सोष्माणः महाप्राणा इत्यर्थः। द्वितीयः प्रथमापेक्षया चतुर्थश्च तृतीयापेक्षया ऊष्माधिक्येन वाय्वाधिक्येन उच्चार्यमाणत्वात् सोष्माणः भवन्ति। अथवा ऊष्मन् ऊष्मवर्णः। स्वस्थानीयेन ऊष्मवर्णेन सह उच्चार्यमाणत्वात् सोष्मन्। एते वर्णाः स्वस्थानीयेन ऊष्मवर्णेन सह उच्चारिताः भवन्ति। तद्यथा—ककारः जिह्वामूलीयेन ᳵकारेण सह उच्चारितः खकारः, गकारश्च घकारः भवति। चकारः शकारेण सह छकारः, जकारश्च झकारः भवति। टकारः षकारेण ठकारः, डकारश्च ढकारः भवति। तकारः सकारेण थकारः, दकारश्च धकारः भवति। पकारः उपध्मानीयेन ᳶपकारेण फकारः, बकारश्च भकारः भवति। द्वितीयानां स्पर्शानामुच्चारणे प्रथमाः स्वस्थानीयोष्मभिः सह उच्चार्यमाणा भवन्ति तथैव चतुर्थानां तृतीयाः उच्चार्यमाणा भवन्ति। संज्ञाया प्रयोजनम्-'सोष्मणि पूर्वस्यानुष्मा' ( १.४.३ ) ॥ १० ॥

### शशिकला

यहाँ सोष्म-संज्ञा का विधान किया गया है। स्पर्शवर्गों के द्वितीय ख छ ठ थ फ तथा चतुर्थ घ झ ढ ध भ -ये दस वर्ण सोष्मसंज्ञक होते हैं। ऊष्मा का अर्थ है-वायु। वायु के साथ उच्चारित होने के कारण ये सोष्म

कहलाते हैं। **शंका** होती है कि सभी वर्णों का उच्चारण वायु से ही होता है फिर इन्हीं वर्णों को क्यों सोष्म कहा जाता है, अन्य को नहीं। **समाधान** यह है कि यहाँ आधिक्य का कथन किया गया है। इनके उच्चारण में अपने पूर्ववर्ती वर्ण की अपेक्षा वायु का आधिक्य होता है. इसलिए ये महाप्राण भी कहलाते हैं। प्रथम स्पर्श की अपेक्षा द्वितीय स्पर्श के उच्चारण में तथा तृतीय स्पर्श की अपेक्षा चतुर्थ स्पर्श के उच्चारण में वायु की अधिकता होती है। अथवा ये वर्ण अपने स्थान वाले ऊष्म वर्ण के साथ उच्चारित होने के कारण सोष्म कहलाते हैं। जैसे कि ककार जिह्वामूलीय (⌣ककार) के साथ उच्चारित होने पर खकार तथा गकार घकार होता है। चकार शकार के साथ उच्चारित होने पर छकार तथा जकार झकार होता है, टकार षकार के साथ उच्चारित होने पर ठकार तथा डकार ढकार होता है। तकार सकार के साथ उच्चारित होने पर थकार तथा दकार धकार होता है। पकार उपध्मानीय ( ⌣पकार ) के साथ उच्चारित होने पर फकार तथा बकार भकार होता है। इस प्रकार द्वितीय स्पर्श के उच्चारण में प्रथम अपने सस्थानीय ऊष्म के साथ उच्चारित होते हैं तथा चतुर्थ में तृतीय। सोष्मसंज्ञा का प्रयोजन—'महाप्राण ( सोष्म ) बाद में होने पर पूर्ववर्ती ( वर्ण ) का अल्पप्राण ( अनूष्म ) हो जाता है' ( १.४.३ ) ॥१०॥

[ अनुनासिकसंज्ञाविधानम् ]

## उत्तमा अनुनासिकाः ॥ ११ ॥

सू० अ०—(स्पर्श वर्गों के) पञ्चम ( स्पर्श ) अनुनासिक (कहलाते हैं)।

### निर्मलभाष्यम्

स्पर्शवर्गाणां पञ्चमाः स्पर्शा उत्तमाः। ङञणनमा उत्तमाः। एते **उत्तमाः** स्पर्शा **अनुनासिका** अनुनासिकसंज्ञकाः भवन्ति। संज्ञायाः प्रयोजनम्— "अनुनासिकानां मुखनासिका" ( १.१ २७ ) 'अनुनासिकश्च' ( १.२ १२ ) इत्यादयः ॥ ११ ॥

### शशिकला

स्पर्श-वर्गों के पञ्चम स्पर्श - ङ ञ ण न तथा म उत्तम स्पर्श हैं। उत्तम स्पर्श अनुनासिक संज्ञक होते हैं। अनुनासिक संज्ञा का प्रयोजन–'अनुनासिक मुख तथा नासिका करण वाले होते हैं' ( १.१.२७ ) 'अनुनासिक भी गुरु होता है' ( १.२.१२ ) इत्यादि ॥ ११ ॥

[ वर्णानां मूलकारणनिरूपणम् ]

**श्वासोऽघोषेष्वनुप्रदानः ॥ १२ ॥**

**सू० अ०**—अघोष ( वर्णों ) ( के उच्चारण ) में 'श्वास' अनुप्रदान होता है।

**निर्मलभाष्यम्**

**अघोषेषु** अघोषवर्णेषु **श्वासः** श्वाससंज्ञकवायुद्रव्यम् **अनुप्रदानः** मूलकारणं भवति। अनुप्रदानः वर्णोच्चारणे मूलकारणम्। यथोक्तं त्रिभाष्यरत्नकारेण —'अनुप्रदीयतेऽनेन वर्ण इति अनुप्रदानं मूलकारणम्। अनुप्रदीयते उपादीयते जन्यत इत्यर्थः' ( तै० प्रा० २.८ त्रि० )। वैदिकाभरणानुसारं—'अनुशब्दः पश्चादर्थे। कोष्ठवायुसमुद्भवात्परं मूर्ध्नि प्रतिघातान्निवृते तस्मिन् कण्ठस्य संवारादयो यथोक्तस्तिस्रोऽवस्था भवन्ति तदा प्रदीयन्ते स्थानेषु निवेश्यन्ते एभिर्वर्णा इत्यनुप्रदानानि' ( तै० प्रा० २.८ वै० )।

यथार्थतः वायुरेव ध्वन्युत्पत्तौ मूलकारणम्। यथोक्तं तैत्तिरीयप्रातिशाख्ये—'वायुशरीरसमीरणात् कण्ठोरसः सन्धाने' ( तै० प्रा० २.१ )। कात्यायनेनाकाशात् वायोरुत्पत्तिः मतः, शब्दश्च तदात्मकः 'वायु खात्' 'शब्दस्तत्' ( वा० प्रा० १.६-७ )।

**ननु** सदैव सर्वव्यापकत्वात्सर्वत्र सर्वदा च ध्वन्योत्पत्तिः भवितव्यः। इत्युच्यते—वेणुशङ्खादिभिः ध्वन्युत्पादककरणैः वायुः ध्वनित्वमाप्नोति। स एव पुरुषप्रयत्नादीनवाप्य वागिति भवति। यथोक्तं कात्यायनेन 'सङ्करोपहितः' 'स सङ्घातादीन् वाक्' ( वा० प्रा० १.८-९ ) इति। यदा वक्त्रीहा भवति तदा एव वायुना वर्णोच्चारणं सम्भवति।

अनुप्रदानादीनां सम्यगवबोधनार्थं वर्णोच्चारणस्य सामान्यप्रक्रियायाः ज्ञानमत्यावश्यकम्। तच्चोक्तम्पाणिनिशिक्षायाम्—

आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्॥
मरुतस्तूरसि चरन् मन्द्रञ्जनयति स्वरम्।
( पा० शि० ६-७ पू० )

एवं ज्ञायते यद् यदा वक्ता वक्तुकामः भवति तदा तस्यान्तःकरणं घटपटादिपदार्थान् बुद्ध्या समेत्य सङ्कलनं कृत्वेत्यर्थः। वक्तुकामनया बुद्धिः चेतः सम्प्रेरयति। मनः जठरानलमभिहन्ति। जठरानलः प्राणाख्यं प्रश्वासवायुं समुत्तेजयति। प्रश्वासवायुः हृदये भ्रमन् मन्द्रं स्वरञ्जनयति इति।

वस्तुतस्तु फुफ्फुसात् ऊर्ध्वं निःसरन् वायुः यदा कण्ठविवरे आयाति तदा तत्रैव वक्त्रीच्छया बाह्यप्रयत्नेन विकृतः भवति। कण्ठविवरे स्वरयन्त्रं भवति। स्वरयन्त्रे च स्वरतन्त्रयः विद्यन्ते। बाह्यप्रयत्नानुसारं स्वरयन्त्रमध्ये स्वरतन्त्रीणामवस्थात्रयञ्जायते। बाह्यप्रयत्नश्च त्रिधा—संवार-विवार-मध्यमाः। प्रयत्नमिदं मुखाद्बहिः स्वरयन्त्रस्थस्वरतन्त्रीषु भवति, अतएव बाह्यप्रयत्नम्। संवारबाह्यप्रयत्नेन स्वरतन्त्रयः प्रस्फुटिता भवन्ति येन कण्ठविवरं संवृतञ्जायते। विवारेण स्वरतन्त्रयः सङ्कुचिताः, यस्मात् कण्ठ-विवरं विवृतं भवति। मध्यमेन स्वरतन्त्रीणामवस्था सामान्या एव, येन कण्ठविवरं न तु संवृतं न च विवृतं प्रत्युत सामान्यमेव भवति। कण्ठस्य संवृतावस्थायां फुफ्फुसादूर्ध्वं गच्छन् प्रश्वासवायुः संघर्षणेन स्वरतन्त्रीन् प्रकम्पयन् निःसरति येन वायुः सघोषः भवति। परञ्च विवृतावस्थायां संघर्षणरहितः सन् निर्बाधगत्या, यस्माद् घोषत्वरहित अघोष एव। सामा-न्यावस्थायां सघोषाघोषत्वरहितः सामान्य एव भवति। यथोक्तं शौनकेन—

वायुः प्राणः कोष्ठ्यमनुप्रदानं कण्ठस्य खे विवृते संवृते वा।
आपद्यते श्वासतां नादतां वा वक्त्रीहायाम्॥
( ऋ० प्रा० १३.१ )

संवृतावस्थायां स्वरयन्त्रादूर्ध्वं निःसृतं वायुरूपद्रव्यं नादसंज्ञकं विवृ-तावस्थायां श्वाससंज्ञकं मध्यमे च हकारसंज्ञकं भवति। यथोक्तम्—'संवृते कण्ठे नादः क्रियते', 'विवृते श्वासः' 'मध्ये हकारः' ता वर्णप्रकृतयः' ( तै० प्रा० २४-७ )। एतान्येव श्वास नाद-हकारसंज्ञकानि वायुद्रव्याणि वर्णो-च्चारणे अनुप्रदानं मूलकारणं भवन्ति।

अघोषः = अघोषसंज्ञकवर्णः। सूत्रकारेण अघोषसंज्ञा प्रयुक्ता। परञ्च तस्या विधानं न कृतम्। शौनकेन हकारव्यतिरिक्तानां शषसः ᳵक ᳶपानां अनुस्वारस्य स्पर्शवर्गाणाञ्च प्रथमद्वितीयस्पर्शयोः अघोषसंज्ञा कृता 'अन्त्याः सप्त तेषामघोषाः' 'वर्गे वर्गे च प्रथमावघोषौ' ( ऋ० प्रा० १.११-१२ )। तैत्तिरीयप्रातिशाख्यकारस्यापीदं मतम्—'ऊष्मविसर्जनीयप्रथमद्वितीया अघोषा' 'न हकारः' ( तै० प्रा० १ १२–१३ )। कात्यायनेनाघोषसंज्ञास्थाने 'जित्' संज्ञा प्रयुक्ता 'द्वौ द्वौ प्रथमौ जित्', 'ऊष्माणश्च हवर्जम्' ( वा० प्रा० १.५०–५१ )।

एवमघोषेषु = अघोषवर्णोच्चारणेषु श्वासः श्वाससंज्ञकं विवारबाह्य-प्रयत्नेन विवृतकण्ठात् निःसृतं वायुद्रव्यम् अनुप्रदानो भवति। शौनकेन

अघोषवर्णानां श्वासः एव प्रकृतिरिति मन्यते—'श्वासोऽघोषाणाम्' ( ऋ० प्रा० १३.४ )। तैत्तिरीयप्रातिख्यकारमतेऽपि अघोषवर्णेषु 'श्वास' एव मूलकारणम्—'अघोषेषु श्वासः' ( तै० प्रा० २.१० ) ॥ १२ ॥

### शशिकला

अघोष वर्णों के उच्चारण में श्वास-संज्ञक वायुद्रव्य मूलकारण ( अनुप्रदान ) होता है। अनुप्रदान वर्णों के उच्चारण में मूलकारण होता है जैसा—त्रिभाष्यरत्न में कहा गया है—'इसके द्वारा वर्ण उत्पन्न होते हैं अतः यह अनुप्रदान = मूलकारण है। अनुप्रदान का अर्थ है—उपादान वाला, उत्पन्न करने वाला' (तै० प्रा० २.८ त्रि०)। वैदिकाभरण के अनुसार—'अनु शब्द का अर्थ है—पश्चात् ( बाद में )। प्रदान का अर्थ है—देना। फेफड़े से निकल कर वायु मूर्धा पर प्रतिघात करता है। कण्ठविवर में संवार, विवार तथा मध्यम तीन अवस्थाएँ होती हैं। ( अनु = ) तत्पश्चात्, प्रदान की जाती है—इनके द्वारा वर्ण स्थानों में रखे जाते हैं, इसलिए 'अनुप्रदान' कहे जाते हैं' ( तै० प्रा० २.८ वै० )।

यथार्थतः वायु ही ध्वनि की उत्पत्ति में मूलकारण है। जैसा कि तै० प्रा० में कहा गया है—'शरीरस्थ वायु गतिशील होने पर कण्ठ और उरस् ( फेफड़े ) के सन्धि-स्थल पर (ध्वनि उत्पन्न करता है)' ( तै० प्रा० २ १)। कात्यायन ने आकाश से वायु की उत्पत्ति माना है तथा उनके अनुसार शब्द वायु के रूप वाले हैं' ( वा० प्रा० १.६-७ )।

यहाँ **शंका** होती है कि वायु सर्वदा सर्वत्र विद्यमान होता है तो सर्वदा सर्वत्र ध्वनि की उत्पत्ति होनी चाहिए। शङ्का का **समाधान** यह है कि हृदयस्थ वायु वेणु, शंख इत्यादि ध्वनि-उत्पादक करणों ( यन्त्रों ) द्वारा ध्वनिरूप को प्राप्त करता है। वही वायु पुरुष-प्रयत्न इत्यादि को प्राप्त करके वाणी हो जाता है। जैसा कहा गया है -'समुचित करणों ( बासुरी, शङ्ख इत्यादि उच्चारणसाधनों ) से प्रेरित होकर वायु ( शब्द हो जाती है)' 'वह ( वायु ) पुरुष-प्रयत्न इत्यादि को प्राप्त करके वाणी ( हो जाता है)' ( वा० प्रा० १.८-९ )। जब वक्ता की बोलने की इच्छा होती है, तभी वर्णों का उच्चारण होता है।

अनुप्रदान इत्यादि के अवबोध के लिए वर्णोच्चारण की सामान्य-प्रक्रिया का ज्ञान आवश्यक है। वह सामान्य-प्रक्रिया पाणिनि-शिक्षा में बतलायी गयी है -

'( वक्ता की ) बोलने की इच्छा होने पर ( उसकी ) आत्मा ( अन्त - करण ) ( घट, पट इत्यादि ) अर्थों को बुद्धि से संयोजित करता है। ( तब उसकी बुद्धि उसके ) मन को ( बोलने के लिए ) प्रेरित करती है। पुनः) मन कायाग्नि ( जठराग्नि ) को धक्का देता है और वह ( अग्नि) शरीरस्थ ( फेफड़े में विद्यमान ) वायु को प्रेरित करता है। ( वह ) वायु उरस् ( फेफड़े में ) विचरण करता हुआ मन्द्र स्वर ( ध्वनि ) को उत्पन्न करता है' ( पा० शि० ६.७ पू० )।

इससे ज्ञात होता है कि जब वक्ता बोलने का इच्छुक होता है तब उसका अन्तःकरण घट-पट इत्यादि पदार्थों को बुद्धि से संपृक्त करता है। बोलने के लिए बुद्धि मन को प्रेरित करती है तथा मन जठराग्नि को। जठराग्नि प्रश्वास ( फेफड़े से निकलती हुई ) वायु को उत्तेजित करती है। तब हृदयस्थ प्रश्वासवायु मन्द्र-ध्वनि को उत्पन्न करता है।

वस्तुतः फेफड़े से ऊपर निकलती हुई प्रश्वास वायु कण्ठविवर में आती है तब वक्ता की इच्छा के अनुरूप बाह्यप्रयत्न द्वारा विकृत होती है। कण्ठविवर के स्वरयन्त्र में स्वरतन्त्रियाँ होती हैं। बाह्यप्रयत्न के अनुसार स्वरयन्त्र में स्वरतन्त्रियों की तीन अवस्थाएँ हो जाती हैं। बाह्यप्रयत्न तीन प्रकार का होता है—संवार, विवार तथा मध्यम। यह प्रयत्न मुख से बाहर स्वरयन्त्र में स्थित स्वरतन्त्रियों में होता है। इसलिए बाह्यप्रयत्न कहलाता है। संवार बाह्यप्रयत्न के कारण स्वरतन्त्रियाँ फैल जाती हैं, जिससे कण्ठ-विवर बन्द हो जाता है। विवार से स्वरतन्त्रियाँ सिकुड़ जाती हैं, जिससे कण्ठविवर खुल जाता है। मध्यम से स्वरतन्त्रियाँ सामान्य अवस्था में रहती हैं जिससे कण्ठविवर न तो बन्द रहता है और न खुला हुआ. प्रत्युत सामान्य अवस्था में रहता है। कण्ठविवर की बन्द अवस्था में फेफड़े से ऊपर निकलता हुआ प्रश्वास वायु स्वरतन्त्रियों में कम्पन करता हुआ संघ-र्षणपूर्वक कण्ठविवर से निकलता है जिससे वायु में सघोषता आ जाती है। कण्ठविवर के खुले रहने पर वायु संघर्षण-रहित निर्बाध गति से बाहर निकलता है इसलिए घोषरहित ( अघोष ) होता है। कण्ठविवर की सामान्य अवस्था में वायु न तो पूर्ण संघर्षण के साथ निकलता है; न तो पूर्ण निर्बाध गति से। अत एव उसमें अल्पमात्रा में सघोषत्व तथा अघोषत्व दोनों विद्यमान होता है। इससे वह सामान्य अवस्था वाला होता है। जैसा शौनक ने कहा है --

'फेफड़े से बाहर निकलता हुआ प्राण वायु ही वर्णों की उत्पत्ति का मूलकारण है। वह ( वक्ता की ) बोलने की इच्छा होने पर कण्ठ-विवर की विवृत अथवा संवृत अवस्था में 'श्वासता' अथवा 'नादता' को प्राप्त होता है' ( ऋ० प्रा० १३ १ )

कण्ठविवर की संवृत अवस्था में स्वरयन्त्र से निकला हुआ वायुरूप-द्रव्य नाद', विवृत अवस्था में 'श्वास' तथा मध्यम अवस्था में 'हकार' अथवा 'श्वासनाद' कहलाता है। जैसा तै० प्रा० में कहा गया है कण्ठ-विवर के बन्द होने पर वायु 'नाद' हो जाता है 'खुला होने पर श्वास' तथा 'मध्यम ( अवस्था ) में हकार ( हो जाता है )' ( तै० प्रा० २.४–७ )।'

( सूत्र में ) अघोष अघोषसंज्ञक वर्णों के लिए प्रयुक्त है। सूत्रकार ने अघोष संज्ञा का प्रयोग तो किया है किन्तु उसका विधान नहीं किया है। शौनक ने 'हकार से अन्य—श, ष, स, विसर्जनीय, जिह्वामूलीय और उप-ध्मानीय-ये ऊष्म तथा प्रत्येक स्पर्श वर्ग के प्रथम तथा द्वितीय स्पर्श क ख च छ ट ठ त थ प फ को अघोष कहा है' ( ऋ० प्रा० १.११-१२ )। तैत्तिरीय-प्रातिशाख्य में भी इन वर्णों को अघोष कहा गया है ( तै० प्रा० १.१२-१३ )। कात्यायन ने अघोष संज्ञा के स्थान पर 'जित्' संज्ञा का प्रयोग किया है। ( वा० प्रा० १.५०-५१ )।

इस प्रकार अघोष वर्णों के उच्चारण में विवार नामक बाह्यप्रयत्न से स्वरतन्त्रियों के सङ्कुचित हो जाने के कारण खुले हुए। कण्ठविवर से विकृत होकर निकला हुआ श्वास' नामक वायुद्रव्य 'मूलकारण' होता है। अघोष वर्णों के 'श्वास' के मूलकारणता के विषय में शौनक तथा तै० प्रा० का भी यही मत है ( ऋ० प्रा० १३.४, तै० प्रा० २.१० ) ॥ १२ ॥

## नादो घोषवत्स्वरेषु ॥ १३ ॥

सू० अ०— घोष तथा स्वर ( वर्णों के उच्चारण ) में नाद ( अनुप्रदान होता है )।

### निर्मलभाष्यम्

**घोषवत्स्वरेषु** घोषवत्सु स्वरेषु च **नादः**[1] नादसंज्ञकं वायुद्रव्यम् अनुप्रदानः भवति। सूत्रकारेण घोषसंज्ञा स्वरसंज्ञा च नोपदिष्टा। तैत्तिरीयप्रातिशा-ख्यानुसारमघोषादन्ये सर्वे व्यञ्जनवर्णा घोषसंज्ञकाः—'व्यञ्जनशेषो घोषवान्'

१. नादसंज्ञा पूर्वसूत्रस्य भाष्ये व्याख्याता।

( तै० प्रा० १.१५ ) । अघोषादन्यानि व्यञ्जनानि सन्ति वर्गाणान्तृतीयाश्च-तुर्था पञ्चमाश्च स्पर्शाः यरलवा अन्तःस्था हकारश्चेति । एतेषां वर्णानां घोषसंज्ञा । कात्यायनेन घोषसंज्ञास्थाने धिसंज्ञा प्रयुक्ता । तस्य मते जित्व्यति-रिक्तवर्णाः = तृतीयचतुर्थोतमाः स्पर्शा अन्तःस्था हकारश्च धिसंज्ञकाः—'धि शेषः' ( वा० प्रा० १.५३ ) इति । शौनकमतानुसारम् अ आ इ ई उ ऊ ऋ ॠ इत्यष्टाक्षराणि समानाक्षराणि ए ऐ ओ औ इत्येतानि सन्ध्यक्षराणि । एते एव स्वराः—'अष्टौ समानाक्षराण्यादितः' 'ततश्चत्वारि सन्ध्यक्षराण्युत्तराणि' 'एते स्वराः' ( ऋ० प्रा० ११-३ ) । इत्यत्र प्रयोजनाभावात् प्लुतस्वराः स्वरवर्णमध्ये न पठिताः परञ्च तेषां स्वरत्वं विद्यत एव । अत एव कात्या-यनेन स्वरान्तर्गतमेते वर्णा निर्दिष्टा—'अ इति आ इति आ३ इति इ इति ई इति ई३ इति उ इति ऊ इति ऊ३ इति ऋ इति ॠ इति ॠ३ इति ऌ इति ॡ इति ॡ३ इति ए इति ए३ इति ऐ इति ऐ३ इति ओ इति ओ३ इति औ इति औ३ इति' 'इति स्वराः' ( वा० प्रा० ८.२ ५-६ ) इति ।

घोषवन्तश्च स्वराश्च घोषवत्स्वराः तेषु घोषवत्स्वरेषु । घोषाणां स्वराणाञ्चोच्चारणे नादः नादसंज्ञकवायुद्रव्यं मूलकारणं भवति । शौनकमते तु हकाराच्चतुर्थस्पर्शेभ्योऽन्येषां सघोषवर्णानामन्तस्थानान्तृतीयोत्तमानां स्पर्शानां स्वराणाञ्च नादः नादसंज्ञकवायुद्रव्यं मूलकारणं भवति । हकारस्य चतुर्थस्पर्शानान्तु श्वासनादौ । यथोक्तमृक्प्रातिशाख्ये 'इतरेषान्तु नादः' 'सोष्मोष्मणां घोषिणां श्वासनादौ' ( ऋ० प्रा० १३.५ ६ ) । अत्र हकार-संज्ञकवायुद्रव्यस्थाने श्वासनादसंज्ञा प्रयुक्ता । तैत्तिरीयप्रातिशाख्यस्यापीदं मतम्—'नादोऽनुप्रदानं स्वरघोषवत्सु' हकारो हचतुर्थेषु' ( तै० प्रा० २.८-९ ) । परञ्च सूत्रकारेण सर्वेषां घोषवर्णानां स्वराणाञ्चोच्चारणे नादसंज्ञकं वायुद्रव्यमेव मूलकारणमुक्तम् ॥ १३ ॥

## शशिकला

सघोष तथा स्वर वर्णों के उच्चारण में 'नाद'[1] नामक वायुद्रव्य मूल-कारण होता है । सूत्रकार ने घोष तथा स्वर संज्ञाओं का निर्देश नहीं किया है । तै० प्रा० के अनुसार अघोष व्यञ्जनों से अन्य व्यञ्जन घोष कहलाते हैं ( तै० प्रा० १ १५ ) । अघोष से अन्य व्यञ्जन ये हैं—वर्गों के तृतीय ग ज ड द ब, चतुर्थ घ झ ढ ध भ, पञ्चम ङ ञ ण न म स्पर्श, य र ल व अन्तःस्थ तथा हकार—ये घोष कहलाते हैं । कात्यायन ने घोष के स्थान

१. 'नाद' द्रव्य के लिए द्रष्टव्य पूर्वसूत्र का भाष्य एवं व्याख्या ।

पर 'धि' संज्ञा का प्रयोग किया है ( वा० प्रा० १.५३ )। शौनक के अनुसार 'अ आ इ ई उ ऊ ऋ ॠ-ये आठ समानाक्षर तथा ए ऐ ओ औ-ये चार सन्ध्यक्षर 'स्वर' कहलाते हैं' ( ऋ० प्रा० १.१-३ )। उन्होंने प्रयोजन के अभाव के कारण प्लुत-स्वरों को स्वरवर्णों के अन्तर्गत समाविष्ट नहीं किया है किन्तु वे भी स्वरवर्ण हैं। इसीलिए कात्यायन ने स्वरवर्णों के अन्तर्गत इन सभी स्वरों का ग्रहण किया है— अ आ आ३, इ ई ई३, उ ऊ ऊ३, ऋ ॠ ॠ३, ऌ ॡ ॡ३, ए ए३, ऐ ऐ३ ओ ओ३, औ औ३ ( वा० प्रा० ८.२, ५-६ )।

घोषवान् तथा स्वर घोषवत्स्वर वर्ण हैं। उन घोष तथा स्वर वर्णों के उच्चारण में नादसंज्ञक वायुद्रव्य मूलकारण होता है। शौनक के मत में हकार तथा स्पर्श-वर्गों के चतुर्थ स्पर्श से अन्य अर्थात् वर्गों के तृतीय, पञ्चम स्पर्श तथा अन्तःस्थ इन सघोष वर्णों तथा स्वरवर्णों के उच्चारण में 'नाद' नामक वायुद्रव्य मूलकारण होता है। हकार और चतुर्थ स्पर्श के उच्चारण में तो 'श्वास नाद' वायुद्रव्य मूलकारण होता है' ( ऋ० प्रा० १३.५-६ )। इस प्रातिशाख्य में हकार संज्ञक वायुद्रव्य के स्थान पर 'श्वासनाद' संज्ञा का प्रयोग हुआ है। तैत्तिरीय प्रातिशाख्य के अनुसार भी 'हकार तथा चतुर्थ स्पर्श से अन्य सघोष व्यञ्जन तथा स्वरवर्णों के उच्चारण में 'नाद' मूलकारण होता है तथा हकार और चतुर्थ स्पर्शों के उचचारण में हकारसंज्ञक वायुद्रव्य अनुप्रदान होता है' (तै० प्रा० २.८-९)। सूत्रकार ने सभी सघोष वर्णों तथा स्वरों के उच्चारण का मूलकारण 'नाद' वायुद्रव्य को ही माना है ॥ १३ ॥

[ उदात्तसंज्ञाविधानम् ]

**समानयमेऽक्षरमुच्चैरुदात्तम् ॥ १४ ॥**

**सू०अ०**—समानस्वर में उच्च ( ध्वनि ) से ( उच्चारित ) अक्षर 'उदात्त' ( कहलाता है )।

**निर्मलभाष्यम्**

यमशब्दः स्वरपर्यायः। यथोक्तं त्रिभाष्यरत्ने 'यमो नाम स्वरः' ( तै० प्रा० १५.९ त्रि० )। वैदिकाभरणानुसारम्—'यमशब्दोऽक्षरगुणभूत उदात्तादिस्वरे वर्तते ( तै० प्रा० १५९ वै० )। समानयमे समानस्वर इत्यर्थः। कोऽपि वक्ता उच्चस्वरेणोच्चारणं करोति कोऽपि नीचस्वरेण।

तस्मिन्नेव उच्चै नीचै स्वरे वा समाने सतीति भावः। तस्मिन् **समानयमे** समानस्वरे समानोच्चारणस्थाने उच्चैः मूर्ध्नि आसन्ने उपरिभागे जातेन प्रयत्नेन उच्चार्यमाणमक्षरम् **उदात्तः** उदात्तगुणकत्वेनोदात्तसंज्ञो भवति। यथा—अकारस्योच्चारणस्थानं कण्ठम्। तत्र अकारस्योच्चारणं चेत् कण्ठस्य उपरि भागे भवेत् तर्हि अकारो उदात्तः भवति।

अक्षरान्तर्गतं के वर्णाः गृह्यन्ते इत्यत्र न निर्दिष्टा। कात्यायनेन अक्षरसंज्ञा विहिता। 'स्वरोऽक्षरम्' 'सहाद्यैर्व्यञ्जनैः' 'उत्तरैश्चावसितैः' ( वा० प्रा० १.९९-१०१ ) इत्यनुसारं स्वरवर्णः, पूर्वव्यञ्जनैः सह स्वरवर्णः, अवसानस्थैः परव्यञ्जनै वा युक्तः स्वरवर्णश्च अक्षरं भवति। अत एव अक्षरे स्वरवर्णस्यैव प्राधान्यम्। अक्षरं स्वरवर्णः इत्याशयः। उदात्तादयः स्वराः स्वरवर्णानामेव धर्मः। स्वरवर्णाः धर्मिणः विद्यन्ते।

शौनकेनापि उदात्तसंज्ञा विहिता। तन्मते आयामेन=उच्चारणावयवानामूर्ध्वंगमनेन उदात्तस्योच्चारणं भवति—

उदात्तश्चानुदात्तश्च स्वरितश्च त्रयः स्वराः।
आयामविश्रम्भाक्षेपैस्त उच्यन्ते॥ (ऋ० प्रा० ३.१) इति।

उवटानुसारम्—'आयामो नाम वायुनिमित्तमूर्ध्वंगमनं गात्राणाम्। तेन य उच्यते स उदात्तः' ( ऋ० प्रा० ३.१ उ० )। तैत्तिरीयप्रातिशाख्ये वाजसनेयिप्रातिशाख्ये च 'उच्चैरुदात्तः' (तै० प्रा० १.३८, वा० प्रा० १.१०८) इत्येवम् उदात्तसंज्ञा उक्ता। तद्व्याख्याने उवटेन 'आयामेन ऊर्ध्वंगमनेन गात्राणां यः स्वरो निष्पद्यते स उदात्तसंज्ञो भवति' इत्युदात्तलक्षणं कृतम्।

यथार्थतः उदात्ताक्षरस्योच्चारणं ध्वन्यारोहेण भवति। स ध्वनि उच्च नीचो वा स्यात्। तस्मिन् उच्चनिम्नध्वनौ समाने सत्युच्चारणस्थाने ऊर्ध्वभागे उदात्तस्योच्चारणं भवति। अस्योच्चारणे उच्चारणावयवाः ऊर्ध्वं कर्षिताः भवन्ति। एवं तस्मिन्नेव समानस्वरे ध्वनेः उच्चत्वञ्जायते। संज्ञायाः प्रयोजनम् -'एकादेश उदात्तेनोदात्तः' ( ३.३.१२ ) 'उदात्तादनुदात्तं स्वर्यते' ( ३.३.१३ ) 'नोदात्तस्वरितपरम्' ( ३.३.१७ ) इत्यादयः॥ १४॥

## शशिकला

यहाँ यम शब्द स्वर का पर्याय है। जैसा कि त्रिभाष्यरत्न में कहा गया है—'यम स्वर का नाम है' ( तै० प्रा० १५.९ त्रि० )। वैदिकाभरण के अनुसार—'यम शब्द अक्षर ( स्वरवर्ण ) का गुण होकर उदात्तादि स्वरों

में होता है' ( तै० प्रा० १५.९ वै० )। 'समानयमे' का अर्थ है समानस्वर में। कोई उच्चारणकर्ता ऊँची ध्वनि में उच्चारण करता है तो कोई नीची ध्वनि में। वक्ता की उस ऊँची अथवा नीची ध्वनि के समान होने पर - यह आशय है। उस समान स्वर में उच्चारण-स्थान पर ऊपर के भाग में किये गये प्रयत्न से उच्चार्यमाण अक्षर उदात्त होता है। जैसे- अकार का उच्चारणस्थान कण्ठ ( कोमलतालु ) है। जब अकार का उच्चारण उस कोमल तालु के ऊपरी भाग से होता है तो वह उदात्त होता है।

कौन-कौन वर्ण अक्षर होते हैं, यह सूत्रकार ने नहीं निर्दिष्ट किया है। कात्यायन के अनुसार—'स्वरवर्ण अक्षर कहलाता है' 'पूर्ववर्ती व्यञ्जन के साथ स्वरवर्ण अक्षर कहलाता है' तथा 'अवसानस्थ परवर्ती व्यञ्जन के साथ भी स्वरवर्ण अक्षर कहलाता है' ( वा० प्रा १.९९-१०१ )। इसके अनुसार केवल स्वर-वर्ण पूर्ववर्ती व्यञ्जन के सहित स्वरवर्ण तथा अवसान में स्थित परवर्ती व्यञ्जन के सहित स्वरवर्ण 'अक्षर' कहलाता है। अक्षर में स्वरवर्ण की ही प्रधानता होती है। 'अक्षर' का अर्थ है स्वरवर्ण। उदात्तादि स्वर स्वरवर्णों के ही धर्म हैं। स्वरवर्ण धर्मी होते हैं।

शौनक ने भी उदात्त संज्ञा का विधान किया है। उनके मत में— 'आयाम से उच्चारित स्वरवर्ण उदात्त कहलाता है' ( ऋ० प्रा० ३.१ )। उबट के अनुसार—'आयाम का अर्थ है वायुद्रव्य को विकृत करने के लिए उच्चारणावयों का ऊर्ध्वगमन। उच्चारणावयवों के ऊर्ध्वगमन से उच्चारित स्वरवर्ण उदात्त कहलाता है' ( ऋ० प्रा० ३.१ उ० )। तै० प्रा० तथा वा० प्रा० में ऊँची ध्वनि से उच्चारित स्वरवर्ण को उदात्त कहा गया है ( तै० प्रा० १.३८; वा० प्रा० १.१०८ )।

यथार्थरूप में उदात्त अक्षर के उच्चारण में ध्वनि का आरोह होता है। वह ध्वनि ऊँची हो या नीची। उस ऊँची अथवा नीची ध्वनि के समान होने पर उच्चारणस्थान के ऊर्ध्वभाग में उदात्त का उच्चारण होता है। उदात्त के उच्चारण में उच्चारणावयव ऊपर की ओर खींच जाते हैं। इस प्रकार ध्वनि में उच्चता हो जाती है। उदात्तसंज्ञा का प्रयोजन ( 'उदात्तादि स्वरों की सन्धि में ) उदात्त के साथ एकादेश उदात्त होता है', 'उदात्त से परवर्ती अनुदात्त स्वरित हो जाता है', 'उदात्त अथवा स्वरित बाद में होने पर ( उदात्त से परवर्ती अनुदात्त स्वरित ) नहीं होता' इत्यादि ॥ १४ ॥

[ अनुदात्तसंज्ञाविधानम् ]

## नीचैरनुदात्तम् ॥ १५ ॥

सू० अ०—( समानस्वर में ) नीच ( ध्वनि ) से ( उच्चारित अक्षर ) अनुदात्त ( कहलाता है )।

### निर्मलभाष्यम्

समानस्वरे नीचैः गात्राणामधोगमनेन यः स्वरः उच्चार्यते सोऽनुदात्तसंज्ञः भवति । यथा – अकारस्योच्चारणं यदा कण्ठस्थाने तस्याधोभागे भवेत् तदा स अनुदात्तः भवति । शौनकमते अनुदात्तस्वरस्योच्चारणं विश्रम्भेन भवति—

उदात्तश्चानुदात्तश्च स्वरितश्च त्रयः स्वराः ।
आयामविश्रम्भाक्षेपैस्त उच्यन्ते ॥
( ऋ० प्रा० ३.१ ) इति ।

उवटानुसारं 'विश्रम्भो नामाधोगमनं गात्राणां वायुनिमित्तम्' ( ऋ० प्रा० ३.१ उ० ) इति । तैत्तिरीयप्रातिशाख्यकारेण कात्यायनेन च, 'नीचैरनुदात्तः' ( तै० प्रा० १.३९, वा० प्रा० १.१०९ ) इति अनुदात्तसंज्ञा विहिता।

अनुदात्तस्योच्चारणं ध्वन्यवरोहेण भवति । अस्योच्चारणकाले उच्चारणावयवानां नीचैः शैथिल्यं जायते । एवं ध्वनेः नीचत्वं भवति । अत एव अस्य अनुदात्तसंज्ञा । संज्ञायाः प्रयोजनम्—'उदात्तादनुदात्तं स्वर्यते' ( ३.३.१३ ) 'स्वरितादनुदात्त उदात्तश्रुतिः ( ३.३.१७ ) इत्यादयः ॥ १५ ॥

### शशिकला

समानस्वर में उच्चारणावयवों के अधोगमन से उच्चारित स्वर 'अनुदात्त' कहलाता है। जैसे—कण्ठ स्थान में उच्चारित होने वाले अकार का उच्चारण जब कण्ठ ( कोमलतालु ) के निचले भाग से होता है तो वह अनुदात्त होता है। शौनक के मत में अनुदात्त का उच्चारण 'विश्रम्भ' से होता है ( ऋ० प्रा० ३.१ )। उवट के अनुसार 'विश्रम्भ का अर्थ है—वायुद्रव्य को विकृत करने के लिए उच्चारणावयवों का अधोगमन' ( ऋ० प्रा० ३.१ उ० )। तै० प्रा० तथा वा० प्रा० में नीची ध्वनि से उच्चारित अक्षर के लिए अनुदात्त संज्ञा का कथन किया गया है ( तै० प्रा० १.३९, वा० प्रा० १.१०९ )।

अनुदात्त के उच्चारण में ध्वनि का अवरोह होता है। इसके उच्चारण के समय उच्चारणावयव नीचे की ओर शिथिल हो जाते हैं। इसलिए इसे अनुदात्त कहा जाता है। अनुदात्त संज्ञा का प्रयोजन—'उदात्त से बाद में अनुदात्त स्वरित हो जाता है', 'स्वरित से बाद में अनुदात्त प्रचय हो जाता है' इत्यादि ॥ १५ ॥

[ स्वरितसंज्ञाविधानम् ]

## आक्षिप्तं स्वरितम् ॥ १६ ॥

**सू० अ०**—( समानस्वर में उच्चारणावयवों के ) तिर्यग्गमन से उच्चारित ( अक्षर ) स्वरित ( कहलाता है )।

### निर्मलभाष्यम्

**आक्षिप्तं** तिर्यग्गमनमुच्चारणावयवानां; तेनोच्चारितम्। यथोक्तमुवटेन 'आक्षेपो नाम तिर्यग्गमनं गात्राणां वायुनिमित्तम्' ( ऋ० प्रा० ३.१ उ० )। समानस्वरे उच्चारणावयवानां तिर्यग्गमनेनोच्चर्यमाणाक्षरं **स्वरितं** स्वरितसंज्ञः भवति। यथा—अकारस्योच्चारणे यदा कण्ठे ऊर्ध्वभागात् प्रारभ्य करणं क्रमशः अधोभागमायाति तदा स स्वरितं भवति। शौनकमतेनाक्षेपैः उच्चारणावयवानां तिर्यग्गमनैरुच्चार्यमाणमक्षरं स्वरित संज्ञः भवति—

उदात्तश्चानुदात्तश्च स्वरितश्च त्रयः स्वराः।
आयामविश्रम्भाक्षेपैस्त उच्यन्ते ॥ (ऋ० प्रा० ३ १ )

कात्यायनेन 'उभयवान्स्वरितः' ( वा प्रा० १.११० ) इत्युक्तम्। उदात्तानुदात्तोभयप्रयत्नेनोच्चार्यः स्वरः स्वरितसंज्ञः। उदात्तस्योर्ध्वगमनमुच्चारणावयवानां प्रयत्नमनुदात्तस्याधोगमनम्। एताभ्यां प्रयत्नाभ्यां समाहारीभूताभ्यामुच्चार्यमाणस्वरः स्वरितसंज्ञो इत्यभिप्रायः। अत एव तैत्तिरीयप्रातिशाख्ये उक्तम् 'समाहारस्स्वरितः' ( तै० प्रा० १.४० ) इति। स्वरिते उदात्तानुदात्तयोः समाहारः भवति। कीदृशः इत्युच्यते स्वरितस्योच्चारणं ध्वन्यारोहावरोहाभ्याञ्जायते। तस्य पूर्वार्धभागो उदात्तमुक्तम् 'स्वरितस्यादितो मात्रार्धमुदात्तम्' ( १ १.१७ ) इति। कात्यायनेनाप्येवमुक्तम् 'तस्यादित उदात्तं स्वरार्धमात्रम्' ( वा० प्रा० १.१२६ ) अत एव परार्धभागमनुदात्तं भवत्येव। शौनकमते तु स्वरितस्य पूर्वार्धमात्र-

मर्धभागं वा उदात्तादुच्चतरं परार्धभागम् अनुदात्तं भवति तच्चानुदात्तमुदात्तवत् श्रूयते—'तस्योदात्ततरोदात्तादर्धमात्रार्धमेव वा' 'अनुदात्तः परः शेषः स उदात्तश्रुतिः' ( ऋ० प्रा० ३.४-५ ) इति। एवमपि स्वरितोच्चारणे उदात्ततरादूर्ध्वादुदात्तमुच्चारणावयवानां तिर्यग्गमनमेव। पक्षे, तस्य पूर्वोदात्तभागस्योच्चारणे उच्चारणावयवानामारोहः परानुदात्तभागस्योच्चारणे तेषामवरोहः। अत एव तस्योच्चारणे उच्चारणावयवानामूर्ध्वान्नीचं तिर्यग्गमनम्। तैत्तिरीयप्रातिशाख्यस्य मते— आदिरस्योदात्तसमश्शेषोऽनुदात्तसम इत्याचार्याः' ( तै० प्रा० १.४६ )। संज्ञायाः प्रयोजनम् —स्वरितस्यादितो मात्रार्धमुदात्तम्' ( १.१.१७ ), 'नोदात्तस्वरितपरम्' ( ३.३.२६ ), 'स्वरितादनुदात्त उदात्तश्रुतिः' ( ३.३.२७ ) इत्यादयः ॥ १६ ॥

## शशिकला

आक्षिप्त का अर्थ है—उच्चारणावयों का तिर्यग्गमन; उच्चारणावयवों के तिर्यग्गमन से उच्चारित अक्षर स्वरित कहलाता है। उवट के अनुसार आक्षेप का अर्थ है—( वायु को विकृत करने के लिए ) उच्चारणावयवों का ( ऊर्ध्वभाग से अधोभाग की ओर ) तिरछे जाना। समानस्वर में उच्चारणावयवों के तिर्यग्गमन से उच्चारित स्वरवर्ण स्वरित होता है। जैसे अकार का उच्चारण स्थान कण्ठ है। जब अकार का उच्चारण कण्ठ के ऊपरी भाग से प्रारम्भ होकर क्रमशः निचले भाग तक समाप्त होता है तो वह स्वरित कहलाता है।

शौनक के मत में भी 'स्वरित का उच्चारण उच्चारणावयवों के आक्षेप से होता है' ( ऋ० प्रा० ३.१ )। कात्यायन के मत से 'स्वरित स्वर ( उदात्त तथा अनुदात्त ) दोनों के गुण वाला होता है' ( वा० प्रा० १.११० )। तात्पर्य यह है कि स्वरित स्वर में उदात्त तथा अनुदात्त दोनों का समाहार होता है। इसीलिए तै० प्रा० में कहा गया है कि 'उदात्त तथा अनुदात्त का समाहार स्वरित कहलाता है' ( तै० प्रा० १.४० )। स्वरित में उदात्त तथा अनुदात्त का कैसा समाहार होता है? क्या दोनों के मध्य से उच्चारित होता है? इस विषय में कहते हैं कि स्वरित का उच्चारण ध्वनि के आरोह तथा अवरोह से होता है। उच्चारण का प्रारम्भ ध्वनि के आरोह से होता है तथा क्रमशः उसमें अवरोह होता जाता है। सूत्रकार के अनुसार 'उस स्वरित का पूवार्धभाग उदात्त होता है' ( १.१.१७ )। कात्यायन का भी यही मत है ( वा० प्रा० १.१२६ )। इससे

स्पष्ट है कि स्वरित का पूर्वार्धभाग उदात्त तथा परार्धभाग अनुदात्त होता है। उसके पूर्वार्धभाग उदात्त के उच्चारण में ध्वनि का आरोह तथा परार्धभाग अनुदात्त में ध्वनि का अवरोह होता है किन्तु शौनक के मत में स्वरित की पूर्वार्धमात्रा अथवा पूर्वार्धभाग उदात्ततर तथा परार्धभाग अनुदात्त होता है। उस अनुदात्त का उच्चारण उदात्त के समान होता है ( ऋ० प्रा० ३.४–५ )। इनके अनुसार स्वरित के पूर्वार्धभाग उदात्ततर से परार्ध उदात्तवत् उच्चारण के समय उच्चारणावयवों का तिर्यग्गमन होता है। तै० प्रा० के अनुसार स्वरित का आदिभाग उदात्त के समान तथा उत्तरभाग अनुदात्त के समान उच्चारित होता है ( तै० प्रा० १.४६ )। स्वरित संज्ञा का प्रयोजन –'स्वरित का आदि से आधा भाग उदात्त होता है', 'उदात्त अथवा स्वरित बाद में होने पर ( उदात्त से बाद वाला ) अनुदात्त ( स्वरित नहीं होता )', स्वरित से परवर्ती अनुदात्त प्रचय ( हो जाता है )' इत्यादि ॥ १६ ॥

[ स्वरितस्वरूपम् ]

## स्वरितस्यादितो मात्रार्धमुदात्तम् ॥ १७ ॥

सू० अ० – स्वरित के आदि में आधी मात्रा उदात्त ( होती है )।

### निर्मलभाष्यम्

**स्वरितस्य** स्वरिताख्यस्य स्वरस्य**आदित** आदौ **मात्रार्ध**मर्धमात्रिकं **उदात्तं** भवति। यथा -- अ॒मा॒वा॒स्या॑' ( सं० ७.७९.२ ), 'क॒न्या॑' ( सं० १.१४.२ ), 'धा॒न्य॑म्' ( सं० ३.२४.२ ), आ॒चा॒र्य॑:' ( सं० ११.५.३ ), 'रा॒ज॒न्य॑:' ( सं० ५.१७.९ ), 'न्यक्' ( सं० ६.९१.२ ), 'क्व॑' ( सं० ९.९.४ ), 'स्व॑' ( सं० २.५.२ ) इत्यादयः। स्वरितस्योच्चारणविषये सामान्यविधानमेतत्। विशेषन्तु 'एकारौकारौ पदान्तौ परतोऽकारं सोऽभिनिहितः' ( ३.३.११ ) इत्यादिषु नवसङ्ख्याकेषु सूत्रेषूक्तम्।

स्वरितस्य परभागविषये सूत्रकारेण विधानं न कृतम्। कात्यायनेन स्वरितस्यादौ उदात्तत्वमुक्तम्—'तस्यादितः उदात्तं स्वरार्धम्' ( वा० प्रा० १.१२६ )। अनेनापि तस्य परार्धभागस्योच्चारणविषयः न विहितः। तैत्तिरीयप्रातिशाख्ये स्वरितस्य पूर्वार्धपरार्धयोः विषये उक्तं परञ्च तत्कथनं किञ्चिद्भिन्नं दृश्यते। तन्मते स्वरितस्य पूर्वार्धभागः उदात्तसमः परार्धभागोऽ-

नुदात्तसमः भवति—'आदिरस्योदात्तसमश्शेषोऽनुदात्तसमः' ( तै० प्रा० १.४६ )। अनेन स्पष्टं यत् तस्य पूर्वार्धभागः उदात्तसमः न तूदात्तः परार्धभागोऽनुदात्तसमो न त्वनुदात्तः। शौनकमते तु तस्य पूर्वार्धभागः उदात्ततरः परार्धभागः अनुदात्तः भवति। परञ्च तस्य अनुदात्तस्य श्रवणमुदात्तवद् भवति—'तस्योदात्ततरोदात्तादर्धमात्रार्धमेव वा', 'अनुदात्तपरः शेषः स उदात्तश्रुतिः' ( ऋ० प्रा० ३.४-५ ) इति। अत्र स्वरिते उदात्ततरानुदात्तयोः मात्राविषयेऽपि विकल्पः। स्वरितस्वरस्य पूर्वार्धभागः उदात्ततरः पूर्वार्धमात्रा वा। परार्धभागः शेषमात्रा वा अनुदात्तः। स्वरिताक्षरं ह्रस्वञ्चेत् तस्य पूर्वार्धमात्रा उदात्ततरा परार्धमात्रा चानुदात्तं भवति। दीर्घञ्चेत् पूर्वा मात्रा उदात्ततरा परा मात्रा अनुदात्तम्। पूर्वार्धमात्रा उदात्ततरा पराध्यर्धमात्रा अनुदातं भवतीति विकल्पः ॥ १७ ॥

## शशिकला

स्वरित की आदि वाली आधी मात्रा उदात्त होती है। जैसे—'अमावास्या', 'कन्या', 'धान्यम्', 'आचार्यः', 'राजन्यः', 'न्यंक्', 'क्व', 'स्व' इत्यादि। स्वरित के उच्चारण के विषय में यह सामान्य नियम है। विशेष विधान तो 'पदान्त एकार अथवा ओकार से परवर्ती अकार का लोप होने पर अभिनिहित स्वरित होता है' ( ३ ३.११ ) इत्यादि नौ सूत्रों में बतलाया गया है।

यहाँ स्वरित के पूर्वार्धमात्रा के उदात्त होने का विधान तो किया गया है किन्तु सूत्रकार ने परभाग के विषय में विधान नहीं किया है। कात्यायन भी इस विषय में मौन हैं। तै० प्रा० में उसके पूर्वार्ध तथा परार्ध दोनों के विषय में विवेचन किया गया है किन्तु उनका कथन कुछ भिन्न है। उनके मत में 'स्वरित का पूर्वार्धभाग उदात्त के समान तथा परार्धभाग अनुदात्त के समान उच्चारित होता है' ( तै० प्रा० १.४६ )। इससे स्पष्ट होता है कि उसका पूर्वार्धभाग उदात्त के समान तथा परार्धभाग अनुदात्त के समान होता है; उदात्त तथा अनुदात्त नहीं। शौनक के मत में 'पूर्वार्ध उदात्ततर तथा परार्ध उदात्त के समान श्रुतिगोचर होता है'। यहाँ स्वरित में उदात्त तथा अनुदात्त की मात्रा के विषय में भी विकल्प है। स्वरित का पूर्वार्धभाग उदात्ततर तथा परार्धभाग अनुदात्त होता है। इस प्रकार यदि स्वरित अक्षर दीर्घ है तो उसकी पूर्वार्ध एक मात्रा उदात्ततर तथा परार्ध एक मात्रा अनुदात्त होती है। यदि ह्रस्व है तो उसकी पूर्वार्धमात्रा

उदात्ततर तथा परार्धमात्रा अनुदात्त होती है। कतिपय आचार्यों के अनुसार स्वरित स्वर की पूर्वार्ध मात्रा ही उदात्ततर होती है, शेष परवर्ती भाग अनुदात्त होता है। इस प्रकार स्वरित ह्रस्व हो या दीर्घ, उसकी पूर्ववर्ती आधी मात्रा उदात्ततर होती है। ह्रस्व की परवर्ती आधी मात्रा तथा दीर्घ की परवर्ती डेढ़ मात्रा अनुदात्त होती है ॥ १७ ॥

[ वर्णानां करणनिरूपणम् ]

## मुखे विशेषाः करणस्य ॥ १८ ॥

सू० अ०—( वर्णों के उच्चारण में ) मुख में करण ( सचल मुखस्थोच्चारणावयव ) के विशेष ( अनेक प्रकार ) होते हैं।

### निर्मलभाष्यम्

वर्णोच्चारणे **मुखे** मुखगुहायां स्थाने **करणस्य** सचलमुखावयवस्य **विशेषाः** विविधाः प्रकाराः भवन्ति। कण्ठादयः स्थानानि। यथोक्तमथर्ववेदीयायां शिक्षायाम्—

'अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा।
जिह्वामूलञ्च दन्ताश्च नासिकोष्ठौ च तालु च ॥'
( मा० शि० ६८ ) इति

जिह्वाग्रादयः करणानि। 'संवारविवार'—बाह्यप्रयत्नद्वारा कण्ठविवरस्य स्वरयन्त्रे स्वरतन्त्रीभिः द्विधा विकृतं वायुद्रव्यं मुखविवरे आयाति। तत्र स्पृष्टाद्याभ्यन्तरप्रयत्नद्वारा स्थाने करणेन विविधरूपेण विकृतं भूत्वा विविधान् वर्णानुत्पादयति। मुखविवरे स्थानानि करणानि चोच्चारणाङ्गानि। करणान्याभ्यन्तरप्रयत्नद्वारा विविधरूपेण स्थानं स्पृश्योपसंहृत्य वा नादश्वासाख्यवायुद्रव्यं विकुर्वन्ति येन विविधवर्णानामुच्चारणञ्जायते।

तैत्तिरीयप्रातिशाख्ये स्थानकरणयोः लक्षणं कृतम्—'स्वराणां यत्रोपसंहारस्तत् स्थानम्', 'अन्येषां तु यत्र स्पर्शनं तत्स्थानानि' ( तै० प्रा० २.३१, ३३ )। माहिषेयमते 'यस्मिन्तिष्ठन्ति इति स्थानानि' ( तै० प्रा० २३.४ मा० ) इति। तत्रैव करणस्यापि लक्षणमुक्तम्—'यदुपसंहरति तत्करणम्' 'येन स्पर्शयति तत्करणम्' ( तै० प्रा० २.३२, ३४ ) इति। पूर्वभाष्यकारेण स्थानकरणयोः लक्षणविषये प्रश्नं कृत्वा तल्लक्षणं दत्तम्—'किं पुनः स्थानं, किं करणम्।······यदुपक्रमते तत्स्थानम्। येनोपक्रमते

तत्करणम्' ( १.१.१८ ह्विटनीमहाभागस्य व्याख्यायामुद्धृतम् )। स्थानन्तु मुखस्थाचलोच्चारणावयवः यत्र करणं स्पृष्टाद्याभ्यन्तरप्रयत्नद्वारा विविधप्रकारेण वायुद्रव्यं विकृत्य वर्णोच्चारणे स्वयोगं ददाति। करणन्तु मुखस्थचलोच्चारणावयवः यदाभ्यन्तरप्रयत्नद्वारा विविधप्रकारेण स्थाने वायुद्रव्यं विकरोति।

करणशब्द अर्थद्वये प्रयुक्तः—आभ्यन्तरप्रयत्नार्थं मुखस्थसचलोच्चारणावयवार्थं च। शौनकेन करणशब्दः आभ्यन्तरप्रयत्नार्थे प्रयुक्तः—'तद्विशेषः करणम्' ( ऋ० प्रा० १३.८ )। अत्र करणशब्दो आभ्यन्तरप्रयत्नपर्यायः। यथोक्तमुवटेन—'करणं प्रदानमित्यर्थान्तरमाहुः' ( ऋ० प्रा० १३.८ उ० )। प्रदानमाभ्यन्तरप्रयत्नम्। कात्यायनेन करणशब्दः मुखस्थसचलोच्चारणावयवार्थं प्रयुक्तः—'दन्त्या जिह्वाग्रकरणाः' ( वा० प्रा० १.७६ )। सूत्रकारेणापि करणशब्द अर्थद्वये प्रयुक्तः। 'स्पृष्टः स्पर्शानां करणम्' ( १.१.२९ ) इत्यत्र करणशब्दः आभ्यन्तरप्रयत्नार्थं प्रयुक्तः। परञ्च सूत्रेऽस्मिन् करणं मुखस्थसचलोच्चारणावयवस्य पर्यायः। कानि करणानीति 'कठ्यानामधरकण्ठः' ( १.१.१९ ) इत्यादिना विधीयन्ते ॥११॥

## शशिकला

वर्णों के उच्चारण में मुखविवर में स्थान पर करण के कार्य करने के अनेक प्रकार होते हैं। 'कण्ठ' इत्यादि स्थान हैं। जैसा कि अथर्ववेदीय शिक्षा में कहा गया है—'उरस्, कण्ठ, शिर ( मूर्धा ), जिह्वामूल, दन्त, तालु, नासिका और ओष्ठ—ये आठ ( वर्णों के उच्चारण में ) स्थान हैं' ( मा० शि० ६८ )। जिह्वाग्र इत्यादि करण हैं। संवार तथा विवार—इन दो बाह्यप्रयत्नों द्वारा कण्ठ-विवर के स्वरयन्त्र में स्वरतन्त्रियों द्वारा क्रमशः नाद तथा श्वास रूप में विकृत वायुद्रव्य मुखविवर में आता है। वहाँ स्पृष्ट इत्यादि आभ्यन्तरप्रयत्न द्वारा स्थान पर करण से विभिन्न रूपों में विकृत होकर विभिन्न वर्णों को उत्पन्न करता है। मुखविवर में स्थान तथा करण उच्चारणावयव होते हैं। करण विभिन्न आभ्यन्तरप्रयत्न द्वारा विविधरूप से स्थान पर स्पर्श करके या उपसंहार करके (समीप में आकर) नाद तथा श्वास नामक वायुद्रव्य को विकृत करता है जिससे विविध वर्णों का उच्चारण होता है।

तै० प्रा० में स्थान तथा करण का लक्षण प्रस्तुत किया गया है। उसके अनुसार 'स्वरवर्णों के उच्चारण में जहाँ उपसंहार होता है, वह स्थान है,'

तथा 'व्यञ्जनवर्णों के उच्चारण में जहाँ स्पर्श होता है, वह स्थान है' ( तै० प्रा० २.३१, ३३ )। माहिषेय के मत में 'जहाँ वर्ण स्थित होता है वह स्थान है' ( तै० प्रा० २३.४ मा० )। वहाँ करण का भी लक्षण दिया गया है—'( स्वरवर्णों के उच्चारण में ) जिसके द्वारा उपसंहार होता है वह वह करण है' तथा 'व्यञ्जन वर्णों के उच्चारण में जिसके द्वारा स्पर्श किया जाता है, वह करण है' ( तै० प्रा० २.३२, ३४ )। पूर्वभाष्यकार ने स्थान तथा करण के लक्षण के विषय में प्रश्न करके उनका लक्षण प्रस्तुत किया है। उनके अनुसार 'जहाँ उपक्रमण किया जाता है, वह स्थान है तथा जिसके द्वारा उपक्रमण किया जाता है वह करण है'। इस प्रकार स्थान मुख में स्थित वह स्थिर अङ्ग है जहाँ 'करण' स्पृष्ट इत्यादि आभ्यन्तर प्रयत्न द्वारा विविध प्रकार से वायुद्रव्य को विकृत करके वर्णोच्चारण में सहयोग करता है तथा करण मुखस्थ वह सचल अङ्ग है जो आभ्यन्तरप्रयत्न द्वारा विविध प्रकार से वायुद्रव्य को स्थान पर विकृत करता है।

करण शब्द का प्रयोग दो अर्थों में होता है—(१) आभ्यन्तरप्रयत्न के लिए तथा (२) मुख में स्थित सचल उच्चारणावयव के लिए। शौनक ने करण शब्द का प्रयोग आभ्यन्तरप्रयत्न के लिए किया है—'इन वर्णों की एक विशेषता करण ( आभ्यन्तरप्रयत्न ) है' ( ऋ० प्रा० १३.८ ) यहाँ करण शब्द आभ्यन्तरप्रयत्न का पर्याय है। जैसा कि उवट ने कहा है कि 'करण शब्द प्रदान का अर्थान्तर है' ( ऋ० प्रा० १३.८ उ० )। प्रदान का अर्थ है—आभ्यन्तरप्रयत्न। कात्यायन ने 'करण' शब्द का प्रयोग मुख में स्थित सचल उच्चारणावयव के लिए किया है—"दन्त्य वर्णों में जिह्वाग्र करण होता है' ( वा० प्रा० १.७६ )। सूत्रकार ने 'करण' शब्द का प्रयोग दोनों अर्थों में किया है—,स्पर्श वर्णों का करण स्पृष्ट है' ( १.१.२९ ) यहाँ करण शब्द आभ्यन्तरप्रयत्न के लिए प्रयुक्त है किन्तु इस सूत्र ( १.१.१८ ) में प्रयुक्त करण शब्द मुख में स्थित सचल उच्चारणावयव का पर्यायवाची है। कौन कौन करण हैं, इसका विधान 'कण्ठ्य वर्णों का अधरकण्ठ करण होता है' ( १.१.१९ ) इत्यादि आगे के सूत्रों में प्रस्तुत किया जायेगा ॥१८॥

**कण्ठ्यानामधरकण्ठः ॥ १९ ॥**

**सू० अ०**—कण्ठ्य ( वर्णों ) का ( करण ) अधरकण्ठ है।

**निर्मलभाष्यम्**

कण्ठे भवः कण्ठ्यः। **कण्ठ्यानां** कण्ठस्थाने उच्चार्यमाणानां वर्णानां करणमधरकण्ठः भवति। कण्ठः कोमलतालुः। के के वर्णाः कण्ठ्या

इति सूत्रकारेण नोपदिष्टाः। शौनकमते ह्रस्वदीर्घप्लुताश्च अकारवर्णाः हकारः विसर्जनीयश्च कण्ठ्याः–'कण्ठ्योऽकारः' 'प्रथमपञ्चमौ च द्वा ऊष्मणाम्' ( ऋ० प्रा० १.३८, ३९ )। केषाञ्चिदाचार्याणां मते हकारविसर्जनीयौ उरःस्थाने उच्चार्यमाणौ स्तः—"केचिदेता उरस्यौ" ( ऋ० प्रा० १.४० )। कात्यायनानुसारन्तु त्रिधा अकारवर्णाः हकारः विसर्जनीयश्च कण्ठे उच्चारिताः "अहविसर्जनीयाः कण्ठे" ( वा० प्रा० १.७१ )। परञ्च तन्मते एषां वर्णानां करणं हनुमध्यं विद्यते–"कण्ठ्या मध्येन" ( वा० प्रा० १.८४ )। तैत्तिरीयप्रातिशाख्ये हकारविसर्जनीययोरेव कण्ठस्थानत्वमुक्तम् 'कण्ठस्थानौ हकारविसर्जनीयौ' ( तै० प्रा० २.४६ । एकेषामाचार्याणां मते हकारो उदयस्वरादिसस्थानो विसर्जनीयश्च पूर्वस्वरस्यान्तस्य सस्थानः— उदयस्वरादिसस्थानो हकार एकेषाम्' 'पूर्वान्तसस्थानो विसर्जनीयः' ( तै० प्रा० २.४७-४८ )। अकारस्य स्थानन्तु हनुः करणञ्च ओष्ठौ विहितम्– 'अवर्णे नात्युपसंहृतमोष्ठहनु नातिव्यस्तम्" ( तै० प्रा० २.१२ )। उल्लेखनीयमत्र यद् वर्णानामुच्चारणस्थानकरणविषये आचार्याः नैकमताः। यतो हि वेदानां पृथक्-पृथक्-चरणेषु तेषामुच्चारणें पृथक्त्वं भवति।

पूर्वभाष्यकारेण कण्ठ्ये त्रिधा अवर्णाः हकारविसर्जनीयौ च गृहीताः ( द्रष्टव्या १ १.१९ ह्विटनी-व्याख्या )। एवं हि त्रिधा अवर्णाः हकारविसर्जनीयौ च कण्ठ्याः। एतेषामुच्चारणे अधरकण्ठः करणं भवति॥ १९॥

## शशिकला

कण्ठ में होने वाला कण्ठ्य, उन कण्ठ्य = कण्ठस्थान में उच्चारित होने वाले, वर्णों का करण अधरकण्ठ होता है। कण्ठ का अर्थ हैं कोमलतालु। कौन-कौन वर्ण कण्ठस्थान में उच्चारित होते हैं, इसका उपदेश सूत्रकार ने नहीं किया है। शौनक के मत में ह्रस्व, दीर्घ तथा प्लुत– ये तीनों अकार, हकार और विसर्जनीय--कण्ठ्य हैं ( ऋ० प्रा० १.३८-३९ )। कतिपय आचार्यों के मत में 'हकार और विसर्जनीय उरस् स्थान में उच्चारित होते हैं' ( ऋ० प्रा० १.४० )। कात्यायन के अनुसार ह्रस्व, दीर्घ तथा प्लुत ये तीन प्रकार के अकार, हकार तथा विसर्जनीय कण्ठ्य हैं ( वा०प्रा० १.७१ ) किन्तु उनके मत में इनका करण हनुमंध्य है ( वा० प्रा० १.८४ )। तै० प्रा० में हकार तथा विसर्जनीय को कण्ठस्थानीय बतलाया गया है ( तै० प्रा० २.४६ )। किन्तु कतिपय आचार्यों के मत में हकार अपने परवर्ती स्वर के आदि के समान स्थान वाला तथा विसर्जनीय अपने पूर्ववर्ती

स्वर के अन्त के समान स्थान वाला होता है ( तै० प्रा० २.४७-४८ )। इसमें अकार का उच्चारण स्थान हनु और करण ओष्ठ बतलाया गया है ( तै० प्रा० २.१२ )। यहाँ यह उल्लेखनीय है कि वर्णों के उच्चारण स्थान के विषय में आचार्यों में मत-साम्य नहीं है। इसका कारण यह है कि पृथक्-पृथक् वेदों के चरणों में उनकी उच्चारण प्रक्रिया भिन्न होती हैं।

पूर्वभाष्यकार के अनुसार ह्रस्व, दीर्घ तथा प्लुत—तीनों अवर्ण, हकार और विसर्जनीय—ये वर्ण कण्ठस्थानीय हैं। इस प्रकार ह्रस्व, दीर्घ, प्लुत—ये तीनों अकार, हकार तथा विसर्जनीय अथर्ववेद में कण्ठस्थान से उच्चरित होते हैं। अतः इनके उच्चारण में अधरकण्ठ करण तथा ऊर्ध्वकण्ठ स्थान होता है ॥ १९ ॥

## जिह्वामूलीयानां हनुमूलम् ॥ २० ॥

**सू० अ०**—जिह्वामूलीय ( वर्णों ) का ( करण ) हनुमूल है।

### निर्मलभाष्यम्

जिह्वायाः मूलं जिह्वामूलम्। **जिह्वामूलीयानां** जिह्वामूलस्थाने उच्चार्यमाणा वर्णा जिह्वामूलीयाः, तेषामुच्चारणे **हनुमूलं** करणं भवति। हन्वोः मूलं हनुमूलम्। जिह्वामूलीयानां वर्णानां कथनं सूत्रकारेण न कृतम्। शौनकमते ह्रस्वदीर्घप्लुता ऋकारा ऌकाराश्च विसर्जनीयः स्पर्शवर्गाणां प्रथमः कवर्गश्च जिह्वामूलीयः—'ऋकारल्काराथ षष्ठ ऊष्मा जिह्वामूलीयाः प्रथमश्च वर्गः' ( ऋ० प्रा० १.४१ )। तैत्तिरीयप्रातिशाख्ये जिह्वामूलीयस्थाने हनुमूलीयसंज्ञा प्रयुक्ताः—'हनुमूले जिह्वामूलेन कवर्गे स्पर्शयति' 'स्पर्शस्थानेषूष्माण आनुपूर्व्येण' ( तै० प्रा० २.३५, ४० )। अनेन कवर्गस्य जिह्वामूलीयस्य च हनुमूलस्थानत्वं स्पष्टम्। एवं ज्ञायते यद् हनुमूलं स्थानं जिह्वामूलञ्च करणम्। परञ्च एषां वर्णानां कृते जिह्वामूलीयसंज्ञा एव प्रयुक्ता। अत एव तेषां जिह्वामूलस्थानत्वं स्पष्टमेव। अस्य मते तु ऋकारल्कारयोरुच्चारणं बर्स्वस्थाने भवति करणञ्च जिह्वाग्रम्—'उपसंहृततरे च जिह्वाग्रमृकारर्कारल्कारेषु बर्स्वेषूपसंहरति' ( तै० प्रा० २.१८ )। कात्यायनानुसारं त्रिधा ऋकाराः ≍ क इति जिह्वामूलीयः कवर्गश्चेत्येते वर्णा जिह्वामूले उच्चारिता भवन्ति—'ऋ ≍ कौ जिह्वामूले' ( वा० प्रा० १.६५ ) इति। तत्र जिह्वामूलीयानां करणं हनुमूलमुक्तम्—'जिह्वामूलीयानुस्वारा हनुमूलेन' ( वा० प्रा० १.८३ )। एषां वर्णानामुच्चारणस्थानकरणविषये यन्मतवैषम्यं तत् पृथक्पृथग्-वेदचरणेषु उच्चारणस्य भिन्नत्वम्।

पूर्वभाष्यकारेण ह्रस्वदीर्घप्लुता ऋवर्णाः कवर्गः जिह्वामूलीयश्च जिह्वामूले उच्चारिता इत्युक्तम् ( द्रष्टव्या १.१.२० ह्विटनीव्याख्या )। अत्र जिह्वामूलीयवर्णः कखयोः पूर्वस्य विसर्जनीयस्याभिधानः। एवम् ऋकार-कवर्गजिह्वामूलीयवर्णानां हनुमूलं करणम् ॥ २० ॥

**शशिकला**

जिह्वा का मूल (जड़) जिह्वामूल हैं। जिह्वामूलस्थान में उच्चारित होने वाले वर्ण जिह्वामूलीय हैं। उन जिह्वामूल स्थान में उच्चारित वर्णों में हनुमूल करण होता है। हनु ( जबड़े ) का मूल हनुमूल है। जिह्वामूलीय वर्णों का कथन सूत्रकार ने नहीं किया है। शौनक के मत में ह्रस्व, दीर्घ तथा प्लुत—ये तीन ऋकार तथा ऌकार, विसर्जनीय, कवर्ग के स्पर्श तथा जिह्वामूलीय ( ककार तथा खकार से पूर्ववर्ती विसर्जनीय ) जिह्वामूल स्थान में उच्चारित होते हैं' ( ऋ० प्रा० १४१ )। तै० प्रा० में जिह्वा-मूलीय के स्थान पर हनुमूलीय का प्रयोग हुआ है—'कवर्ग ( के उच्चारण ) में हनुमूल पर जिह्वामूल से स्पर्श होता है' 'ऊष्म वर्ण क्रमशः स्पर्श-स्थानों पर उच्चारित होते हैं। इससे कवर्ग तथा जिह्वामूलीय का हनुमूल स्थान में उच्चारण होना स्पष्ट है। इस प्रकार तै० प्रा० के अनुसार हनुमूल स्थान तथा जिह्वामूल करण है किन्तु इन वर्णों के लिए जिह्वामूलीय संज्ञा ही प्रसिद्ध है, हनुमूलीय नहीं। वर्णों की यह संज्ञा उनके उच्चारण-स्थान के ही आधार पर होती है, करण के आधार पर नहीं। अतः इन वर्णों का जिह्वामूल स्थान होना ही तर्कसङ्गत है। इसके अनुसार ऋकार तथा ऌकार का स्थान बर्स्व तथा करण जिह्वाग्र है ( तै० प्रा० २.१८ )। कात्यायन के अनुसार ह्रस्व, दीर्घ, प्लुत ऋकार, जिह्वामूलीय तथा कवर्ग का उच्चारण स्थान जिह्वामूल तथा करण हनुमूल है ( वा० प्रा० १६५, ८३ )। इन वर्णों के उच्चारण स्थान तथा करण के विषय में मत-वैषम्य का कारण अलग-अलग वेदों के चरणों में उच्चारण-प्रक्रिया की भिन्नता है।

पूर्वभाष्यकार के अनुसार ह्रस्व. दीर्घ तथा प्लुत ऋकार, जिह्वा-मूलीय तथा कवर्ग का उच्चारण-स्थान जिह्वामूल है अतः प्रस्तुत विधान के अनुसार इनका करण हनुमूल है ॥ २० ॥

## तालव्यानां मध्यजिह्वम् ॥ २१ ॥

सू० अ०—तालव्य ( वर्णों ) का ( करण ) जिह्वा-मध्य ( होता है )।

## निर्मलभाष्यम्

तालौ भवः तालव्यः। **तालव्यानां** तालुस्थाने उच्चार्यमाणाः ये वर्णाः तेषामुच्चारणे **मध्यजिह्वं** करणम्। मध्यं जिह्वं मध्यजिह्वम्, जिह्वायाः मध्यमित्यर्थः। अत्र तालव्यवर्णाः न निर्दिष्टाः। ऋक्प्रातिशाख्यानुसारम् इवर्णः, एकारः ऐकारः यकारः चवर्गः शकारश्च तालव्यः—'तालव्यावेकार-चकारवर्गाविकारैकारौ यकारः शकारः' ( ऋ० प्रा० १.४२ )। तैत्तिरीय-प्रातिशाख्ये अप्येवमेवोक्तम्—'तालौ जिह्वामध्यमिवर्णे' 'एकारे च' 'तालौ जिह्वामध्येन चवर्गे' 'स्पर्शस्थानेषूष्माण आनुपूर्व्येण' ( तै० प्रा० २.२२-२३, ३६, ४४ )। अस्य मते तु ऐकारस्य द्विस्थानत्वं द्विकरणत्वञ्चोक्तम्—'अकारार्धमैकारौकारयोरादिः' ( तै० प्रा० २.२६ )। कात्यायनेन 'इचशेया तालौ' ( वा० प्रा० १ ६६ ) इत्युक्तम्। अस्य मते तालव्यानां वर्णानां जिह्वामध्यकरणत्वं मतम्-'तालव्याः जिह्वामध्येन' ( वा० प्रा० १.८४ )।

पूर्वभाष्यकारस्यापीदं मतं—'तालु एयशचवर्गाणाम् इवर्णस्य च भाष्यते' ( द्रष्टव्या १.१.२१ ह्विटनी-व्याख्या )। एवं एकारस्य यकारस्य शकारस्य चवर्गस्य इकारस्य च जिह्वायाः मध्यभागः करणं भवति ॥ २१ ॥

## शशिकला

तालु में होने वाला तालव्य। तालव्य का अर्थ है—तालु स्थान में उच्चारित वर्ण। उन वर्णों के उच्चारण में जिह्वा का मध्यभाग करण होता है। सूत्रकार ने तालव्यवर्णों का निर्देश नहीं किया है किन्तु ऋ० प्रा० के अनुसार ह्रस्व, दीर्घ तथा प्लुत इकार, दीर्घ तथा प्लुत एकार, दीर्घ तथा प्लुत ऐकार, चवर्ग वाले स्पर्श, यकार और शकार तालव्य है ( ऋ० प्रा० १.४२ )। तै० प्रा० के अनुसार 'इकार ( के उच्चारण ) में तालु पर जिह्वा के मध्य से उपसंहार होता है' 'एकार के उच्चारण में भी ( तालु पर जिह्वा-मध्य से उपसंहार होता है )' चवर्ग ( के उच्चारण ) में तालु पर जिह्वा-मध्य से स्पर्श होता है' 'ऊष्म क्रमानुसार स्पर्श-स्थान से उच्चारित होते हैं' ( तै० प्रा० २.२२-२३, ३६, ४४ )। इस प्रकार इकार, एकार, चवर्ग, यकार तथा शकार का उच्चारण स्थान तालु है। इसके अनुसार ऐकार दो स्थानों तथा दो करणों वाला होता है ( तै० प्रा० २.२६ )। कात्यायन के अनुसार इकार चवर्ग शकार, एकार, यकार का उच्चारण स्थान तालु तथा करण जिह्वामध्य है। ( वा० प्रा० १.६६ )।

पूर्वभाष्यकार ने एकार, यकार, शकार, चवर्ग तथा इकार को तालु-स्थानीय कहा है। इस प्रकार एकार, यकार शकार चवर्ग तथा इकार का करण जिह्वा-मध्य है ॥ २१ ॥

## मूर्धन्यानां जिह्वाग्रं प्रतिवेष्टितम् ॥ २२ ॥

**सू० अ०**—मूर्धन्य ( वर्णों ) का ( करण ) प्रतिवेष्टित ( पीछे की ओर मुड़ी हुई ) जिह्वा का अग्र भाग है।

### निर्मलभाष्यम्

मूर्ध्नि भव मूर्धन्यः। **मूर्धन्यानां** मूर्ध्नि उच्चार्यमाणा ये वर्णाः तेषामुच्चारणे **प्रतिवेष्टितमावेष्टितं** जिह्वाग्रं करणं भवति। मूर्धन् शिरः। **ननु** शिरःस्थाने वर्णानामुच्चारणं कथं सम्भवेत्। उच्चारणन्तु मुखविवरे भवति। **उच्यते**—सत्यमिदम्। मूर्धन् शिरः, ऊर्ध्वप्रदेशः मुखविवरे इति। ताल्वोः सर्वोपरिभागः मूर्धशब्देनोक्तः।

मूर्धन्यानां वर्णानां विधातमत्र नास्ति। ऋक्प्रातिशाख्ये षकारः टवर्गस्य वर्णाः मूर्धन्या—'मूर्धन्यौ षटकारवर्गौ' ( ऋ० प्रा० १.४३ )। तैत्ति-रीयप्रातिशाख्यमते—'जिह्वाग्रेण प्रतिवेष्ट्य मूर्धनि टवर्गे'' स्पर्शस्थानेषूष्माण आनुपूर्व्येण' ( तै० प्रा० २.३७. ४४ ) इति। कत्यायनमतेऽपि षकारटवर्गयो उच्चारणं मूर्धनि भवति—षटौ मूर्धनि' 'मूर्धन्याः प्रतिवेष्टयाग्रम्' ( वा० प्रा० १.६७, ७८ इति। एवं षकारस्य टवर्गस्य वर्णानाञ्चोच्चारणे आवेष्टितम् जिह्वाग्रं करणं भवति। सूत्रकारमते तु टवर्गस्य एव करणं प्रतिवेष्टित-जिह्वाग्रं भवति। षकारस्य उच्चारणे तु जिह्वायाः विशेषप्रकारं यदग्रे सूत्रे विहितम् ॥ २२ ॥

### शशिकला

मूर्धा पर होने वाला मूर्धन्य है। मूर्धन्य—मूर्धा पर उच्चारित होने वाला वर्ण। उन वर्णों के उच्चारण में पीछे की ओर मुड़ा हुआ जिह्वा का अग्रभाग करण होता है। मूर्धा का अर्थ है—शिर। यहाँ शङ्का होती है कि शिर स्थान पर वर्णों का उच्चारण कैसे होता है? उच्चारण तो मुख-विवर में होता है, शिर में नहीं। समाधान यह है कि मूर्धा का अर्थ है—शिर अर्थात् मुखविवर में स्थित ऊर्ध्वप्रदेश। तालु का सबसे ऊपर वाला भाग मूर्धा कहलाता है।

मूर्धन्य संज्ञा का प्रयोग तो यहाँ किया गया है किन्तु कौन-कौन वर्ण मूर्धन्य हैं, इसका निर्देश सूत्रकार ने नहीं किया है। ऋ० प्रा० के अनुसार षकार, टवर्ग वाले वर्ण मूर्धन्य हैं ( ऋ० प्रा० १.४३ )। तै० प्रा० का भी मूर्धन्य वर्णों के विषय में यही मत है। इसमें मूर्धन्य वर्णों का करण प्रति-वेष्टित जिह्वाग्र बतलाया गया है ( तै० प्रा० २.३७, ४४ )। कात्यायन ने षकार तथा टवर्ग को मूर्धन्य तथा उनका करण प्रतिवेष्टित जिह्वाग्र कहा है ( वा० प्रा० १.६७, ७८ )। सूत्रकार के मत में टवर्ग वाले वर्णों का ही करण प्रतिवेष्टित जिह्वाग्र होना है। षकार के उच्चारण में तो जिह्वा का अगला भाग विशेष प्रकार का हो जाता है जिसका विधान अगले सूत्र में किया गया है ॥ २२ ॥

## षकारस्य द्रोणिका ॥ २३ ॥

**सू० अ०**—षकार ( के उच्चारण में ) द्रोणिका ( दोनें के आकार वाली ) जिह्वा का अग्र करण होता है।

### निर्मलभाष्यम्

**द्रोणिका** द्रोणाकारा जिह्वा। तस्याग्रेण षकारस्य उच्चारणे मूर्ध्नि स्पर्शनं भवति। एवं **षकारस्य** द्रोणाकारजिह्वायाः अग्रं करणं भवति ॥२३॥

### शशिकला

द्रोणिका का अर्थ है दोने के आकार वाली जिह्वा। षकार के उच्चारण में जिह्वा को दोने के आकार का बनाकर उसके अग्रभाग से मूर्धा पर स्पर्श किया जाता है। इस प्रकार षकार के उच्चारण के समय दोने के आकार वाली जिह्वा का अगला भाग करण होता है ॥ २३ ॥

## दन्त्यानां जिह्वाग्रं प्रस्तीर्णम् ॥ २४ ॥

**सू० अ०**-- दन्त्य ( वर्णों ) के ( उच्चारण में ) फैला हुआ जिह्वाग्र ( करण होता है )।

### निर्मलभाष्यम्

दन्ते भवः दन्त्यः। **दन्त्यानां** दन्तस्थाने उच्चारितवर्णानां **प्रस्तीर्णं** विस्तृतं **जिह्वाग्रं** करणं भवति। सूत्रकारेण दन्त्याः वर्णाः न निर्दिष्टाः। शौनकमते तवर्गः सकारः रेफः लकारश्च दन्तमूलीयः —'दन्तमूलीयः तकार-

वर्गः' 'सकाररेफलकाराश्च' ( ऋ० प्रा० १.४४-४५ )। एकेषामाचार्याणां मते तु रेफः बर्स्व्यं भवति –"रेफं बर्स्व्यमेके" ( ऋ० प्रा० १.४६ )। तैत्तिरीयप्रातिशाख्यमते तु तवर्गः सकारश्च दन्तमूलीयः जिह्वाग्रं च करणम् – 'जिह्वाग्रेण तवर्गे दन्तमूलेषु' 'स्पर्शस्थानेषूष्माण आनुपूर्व्येण' ( तै० प्रा० २.३८ ४४ )। रेफस्योच्चारणे प्रत्यग्दन्तमूलं स्थानं जिह्वाग्रमध्यञ्च करणम्। लकारोच्चारणे दन्तमूलं स्थानं करणञ्च जिह्वाग्रमध्यम् भवति–'रेफे जिह्वामध्येन प्रत्यग्दन्तमूलेभ्यः' 'दन्तमूलेषु च लकारे' ( तै० प्रा० २.४१-४२ )। कात्यायनानुसारम् ऌकारः लकारः सकारः तवर्गश्च दन्तस्थानीयः करणञ्च जिह्वाग्रम्–'ऌलसिता दन्ते' 'दन्त्या जिह्वाग्रकरणाः' (वा० प्रा० १.६९, ७६)। पूर्वभाष्यकारमते लकारः सकारः तवर्गश्च दन्त्यः—'दन्ताः लसतवर्गाणाम्' ( ११.२४ ह्विटनीव्याख्यायाम् )। एवं लकारः सकारः तवर्गश्च दन्त्याः। एषामुच्चारणे प्रस्तीर्णं जिह्वाग्रं करणं भवति ॥ २४ ॥

**शशिकला**

दन्त में होने वाला दन्त्य। दन्त्य = दन्त स्थान पर उच्चारित होने वाले, वर्णों के उच्चारण में जिह्वाग्र करण होता है। सूत्रकार ने दन्त्य वर्णों का निर्देश नहीं किया है। शौनक के मत में तवर्ग, सकार, रेफ तथा लकार दन्तमूल स्थान पर उच्चारित होते हैं ( ऋ० प्रा० १४४–४५ )। कुछ आचार्यों के अनुसार रेफ का उच्चारण स्थान बर्स्व है ( ऋ० प्रा० १.४६ )। तै० प्रा० के अनुसार तवर्ग के वर्ण तथा सकार दन्तमूलीय हैं तथा उनका करण जिह्वाग्र है ( तै० प्रा० २ ३८, ४४ )। रेफ के उच्चारण में प्रत्यग्दन्तमूल स्थान तथा जिह्वाग्रमध्य करण होता है ( तै० प्रा० २.४१ )। लकार के उच्चारण में दन्तमूल स्थान तथा जिह्वाग्र करण होता है (तै० प्रा० २.४२)। कात्यायन के अनुसार ऌकार, लकार, सकार तथा तवर्ग दन्तस्थान वाले होते हैं तथा इनका करण जिह्वाग्र होता है ( वा० प्रा० १.६९,७६ )। पूर्वभाष्यकार के मत में लकार, सकार तथा तवर्ग का उच्चारणस्थान दन्त है। इस प्रकार उनके उच्चारण में फैली हुई जिह्वा का अग्रभाग करण होता है ॥ २४ ॥

**ओष्ठ्यानामधरौष्ठम् ॥ २५ ॥**

सू० अ०—ओष्ठ्य ( वर्णों ) के ( उच्चारण में ) निचला ओष्ठ ( करण होता है )।

## निर्मलभाष्यम्

**ओष्ठ्यानामोष्ठस्थाने** उच्चारितानां वर्णानाम**धरौष्ठं** करणं भवति। अत्र ऊर्ध्वोष्ठम् स्थानमधरौष्ठं करणम्। ओष्ठ्यसंज्ञात्र न विहिता। शौनक-मते ह्रस्वदीर्घप्लुताः उवर्णाः पवर्गस्य वर्णा वकार उपध्मानीय ओकारौ-कारौ च ओष्ठ्याः—'शेष ओष्ठ्योऽपवाद्य नासिक्यान्' ( ऋ० प्रा० १.४७ )। तैत्तिरीयप्रातिशाख्यानुसारम् 'ओष्ठाभ्यां पवर्गे' ( तै० प्रा० २.३९ ) इति। पवर्गस्य ओष्ठ्यत्वमुक्तम्। ओकारस्योच्चारणे हनू उत्तरोष्ठश्च स्थानम् अधरोष्ठश्च करणम्—'ओकारे च' 'औष्ठौ च उपसंहृततरौ' ( तै० प्रा० २।३–१४ )। उवर्णोच्चारणे ओष्ठयो उपसंहारः समीपागमनं भवति—'ओष्ठोपसंहार उवर्णे' ( तै० प्रा० २ ३४ )। एवम् ऊर्ध्वोष्ठं स्थानमधरोष्ठश्च करणम्। अस्य मते तु वकारोच्चारणे अधरोष्ठान्ताभ्यां ऊर्ध्वदन्तोपरि स्पर्शनं भवति—'ओष्ठान्ताभ्यां दन्तैर्वकारे' ( तै० प्रा० २.४३ )। एवं वकारे दन्तस्थानम्। वकारोत्पत्तौ स्वभावतः अधरोष्ठस्याभ्यन्तरो भागः करणं भवति। 'स्पर्शस्थानेषूष्माण आनुपूर्व्येण' ( तै० प्रा० १ ४४ ) इति। उपध्मानीय उत्तरोष्ठस्थानेऽधरोष्ठकरणेन उच्चारितः। उपध्मानीयः पकारफकारयोः पूर्वः विसर्जनीय एव। अत्र औकारस्य द्विस्थानीयत्वं द्विकरणत्वञ्च विहितम्—'अकारार्धमैकारौकारयोरादिः' ( तै० प्रा० २.२६ )। कात्यायनेनापि औकारस्य केवलमोष्ठस्थानीयत्वं न स्वीकृतम्। तन्मते ह्रस्वदीर्घप्लुताः उवर्णा वकार ओकार उपध्मानीयः पवर्गश्च इत्येते वर्णाः ओष्ठे जायन्ते—'उवो ≍ प्पा ओष्ठे' ( वा० प्रा० १ ७० ) इति। ओष्ठ्य-वर्णानामुच्चारणे अधरोष्ठमेव करणम्–'समानस्थानकरणा नासिक्यौष्ठ्याः' ( वा० प्रा० १ ८० )। अस्य मते ओष्ठ्ये सत्यपि वकारः दन्ताग्रैः उच्चार्यते 'वो दन्ताग्रैः' ( वा० प्रा० १ ८१ ) इति।

पूर्वभाष्यकारेण सामान्यावस्थायां ओकारौकारौ पवर्गस्य स्पर्शा उपध्मानीयः ह्रस्वदीर्घप्लुता उवर्णाश्च ओष्ठे जायन्त इत्युक्तम्। ( द्रष्टव्या १.१.२५ ह्विटनी व्याख्या )। वकारस्योल्लेखः नात्र विद्यते। अत एव तस्यो-च्चारणस्थानविषये संशयः भवति। परञ्च वकारस्यापि स्थानमोष्ठमेव विद्यते। पाण्डुलिपिकारस्य प्रमादेन वकारस्य कथनमत्र नोपलभ्यते। एवं ह्रस्वदीर्घ-प्लुता उवर्णा ओकार औकारः पवर्गस्पर्शा वकार उपध्मानीयश्च ओष्ठस्था-नीयाः। एषामुच्चारणेऽधरोष्ठं करणम्॥ २५॥

## शशिकला

ओष्ठ्य अर्थात् ओष्ठस्थान पर उच्चारित होने वाले वर्णों में नीचे वाला ओष्ठ करण होता है। इन वर्णों के उच्चारण में ऊपर वाला ओष्ठ स्थान तथा नीचे वाला ओष्ठ करण होता है। ओष्ठ्य वर्णों का निर्देश सूत्रकार ने नहीं किया है। शौनक के मत में ह्रस्व-दीर्घ-प्लुत उवर्ण, पवर्ग, वकार, उपध्मानीय, ओकार और औकार ओष्ठ्य हैं ( ऋ० प्रा० १.४७ )। तै० प्रा० के अनुसार पवर्ग ओष्ठ्य है ( तै० प्रा० २.३९ )। ओकार के उच्चारण में हनु तथा ऊपर वाला ओष्ठ स्थान और अधरोष्ठ करण होता है ( तै० प्रा० २.१३, १४ )। उवर्ण के उच्चारण में ओष्ठों का उपसंहार होता है ( तै० प्रा० २.३४ )। इसके मत में वकार के उच्चारण में नीचे वाले ओष्ठ के दोनों अन्तिम भागों का दाँतों पर स्पर्श होता है ( तै० प्रा० २.४३ )। इस प्रकार वकार के उच्चारण में स्वभावतः निचले ओष्ठ के भीतर के अन्तिम भाग करण होते हैं। उपध्मानीय के उच्चारण में ऊपर वाला ओष्ठ स्थान तथा निचला ओष्ठ करण होता है ( तै० प्रा० १.४४ )। उपध्मानीय पकार तथा फकार से पूर्ववर्ती विसर्जनीय होता है। यहाँ औकार के दो स्थान—कण्ठ तथा हनु और करण निचला ओष्ठ बतलाया गया है ( तै० प्रा० २.२६ )। कात्यायन के मत में ह्रस्व दीर्घ प्लुत तीनों उवर्ण, वकार, ओकार, उपध्मानीय तथा पवर्ग के वर्ण ओष्ठ स्थान से उच्चारित होते हैं तथा उनका करण निचला ओष्ठ होता है ( वा० प्रा० १.८० )। इनके मत में ओष्ठ्य होते हुए भी वकार का करण दाँतों का अगला भाग होता है ( वा० प्रा० १.८१ )।

पूर्वभाष्यकार के अनुसार सामान्य अवस्था में ओकार, औकार, पवर्ग के स्पर्श, उपध्मानीय, ह्रस्व दीर्घ प्लुत उवर्ण ओष्ठ स्थान से उच्चारित होते हैं। भाष्य में वकार का उल्लेख नहीं हुआ है। वहाँ वकार का उल्लेख अवश्य हुआ होगा किन्तु भाष्य के पाण्डुलिपिकर्त्ता के प्रमाद से वह छूट गया है—ऐसा प्रतीत होता है। इस प्रकार ह्रस्व दीर्घ प्लुत उवर्ण ओकार, औकार, पवर्गीय स्पर्श, वकार तथा उपध्मानीय ओष्ठस्थानीय हैं, अतः इनके उच्चारण में नीचे वाला ओष्ठ करण होता है ॥ २५ ॥

## नासिक्यानां नासिका ॥ २६ ॥

**सू० अ०**—नासिक्य ( वर्णों ) के ( उच्चारण में ) नासिका ( करण होता है )।

## निर्मलभाष्यम्

**नासिक्यानां** नासिकास्थाने उच्चारितवर्णानां **नासिका** करणं भवति। यमानुस्वारनासिक्याः नासिकास्थानाः। कुं खुं गुं घुं इति चत्वारो यमाः। अं इति अनुस्वारः। हुं इति नासिक्यवर्णविशेषः। एतेषामुच्चारणे नासिका करणं भवति। यथोक्तं कात्यायनेन—यमानुस्वारनासिक्यानां नासिके' 'समानस्थानकरणा नासिक्यौष्ठ्याः' ( वा० प्रा० १.७४, ८० )। यमा अनुस्वार नासिक्यवर्णश्च नासिकास्थाने उच्चारिताः। तैत्तिरीय-प्रातिशाख्यकारमते नासिक्यवर्णाः नासिकास्थानीयाः—'नासिक्या नासिका-स्थानाः' ( तै० प्रा० २.४९ )। नासिक्यवर्णानामुच्चारणस्थानविषयेऽत्र विकल्पो उक्तः—'मुखनासिक्या वा' ( तै० प्रा० २.५० )। अत्र पक्षद्वयस्य योग्यतया व्यवस्था आश्रयितव्या। स्पर्शेभ्यः परे प्रथमादिव्यपदेशभाजो मुखनासिक्याः। हकारात्परस्तु नासिकामात्रस्थानम्। एतेषां नासिक्याना-मुच्चारणे वर्गवत्स्थानं भवति—'वर्गवच्चैषु' ( तै० प्रा० २.५१ )। वस्तु-तस्तु यमानामनुस्वारस्य चोच्चारणे नासिकया सह मुखस्याधि योगदानम्। अतएव एषामुच्चारणे नासिकया सह पूर्वस्पर्शस्य स्थानं करणं च प्रयुज्यते। हकारात् परे नासिक्यध्वनि एव। सः तु नासिके जायमानः शुद्धनासिक्यम्। अत एव तस्योच्चारणे एव नासिका स्थानं च करणं च भवति। अन्येषा-मुच्चारणे नासिकया सह मुखस्थस्थानकरणयोः उपयोगं भवति ॥ २६ ॥

## शशिकला

नासिका स्थान में उच्चारित वर्णों का नासिका करण होता है। यम, अनुस्वार तथा नासिक्य ( वर्ण-विशेष ) ये नासिकास्थानीय वर्ण हैं। कुं खुं गुं तथा घुं—ये चार यम हैं। अं यह अनुस्वार है। हुं यह नासिक्य वर्णविशेष है। इनके उच्चारण में नासिका करण होता है। जैसा कात्यायन ने कहा है—यम, अनुस्वार तथा नासिक्य का उच्चारणस्थान नासिका है' 'नासिक्य और ओष्ठ्य समान स्थान तथा करण वाले होते हैं'। तै० प्रा० के अनुसार नासिक्य वर्णों का उच्चारणस्थान नासिका है। वहाँ इस विषय में विकल्प भी प्रस्तुत किया गया है कि मुख तथा नासिका दोनों नासिक्य वर्णों के उच्चारणस्थान हैं। यहाँ नासिक्य के उच्चारण में दोनों पक्षों की व्यवस्था योग्यता के अनुसार समझनी चाहिए। स्पर्शों से बाद में नासिक्य का मुख तथा नासिका दोनों से उच्चारण होता है। हकार से बाद में केवल नासिका से होता है। नासिक्यों के उच्चारण में नासिका के साथ

पूर्ववर्ती स्पर्श के समान भी स्थान होता है। जैसा कहा गया है—'इन नासिक्यों के उच्चारण में वर्ग के अनुसार स्थान होता है' ( तै० प्रा० २.५१ )। वस्तुतः यम वर्णों के उच्चारण में नासिका के साथ ही मुख का भी योगदान होता है। इसलिए इनके उच्चारण में नासिका के साथ पूर्ववर्ती स्पर्श का मुखस्थ स्थान तथा करण प्रयोग में आता है। हकार से बाद में नासिक्य का शुद्ध नासिक्य होने के कारण केवल नासिका से उच्चारण होता है। इसलिए इसके उच्चारण में केवल नासिका ही स्थान तथा करण होता है जब कि अन्य के उच्चारण में नासिका के साथ ही मुखस्थ स्थान तथा करण उपयोग में आते हैं ॥ २६ ॥

## अनुनासिकानां मुखनासिका ॥ २७ ॥

सू० अ०—अनुनासिकों के ( उच्चारण में ) मुख और नासिका ( करण होता है )।

### निर्मलभाष्यम्

मुखञ्च नासिका च मुखनासिका। 'उत्तमा अनुनासिकाः' (१.१.११) इत्युक्तम्। ङञणनमा उत्तमाः। अनुनासिकानाम् उच्चारणे **मुखनासिका** करणं भवति। यथार्थतः अनुनासिकवर्णानामुच्चारणसमये संवाराख्यबाह्यप्रयत्नेन कण्ठविवरस्य स्वरयन्त्रे स्वरतन्त्रीभिः घर्षणेन विकृतं नादसंज्ञं वायुद्रव्यं मुखविवरनासिकाभ्यां निःसरति। मुखविवरे स्थाने करणस्य स्पर्शेन विकृतं भवति। ङकारस्योच्चारणे जिह्वामूले हनुमूलेन, ञकारोच्चारणे तालौ जिह्वामध्येन, णकारस्योच्चारणे मूर्ध्नि प्रतिवेष्टितजिह्वाग्रेण, नकारोच्चारणे दन्तोपरि प्रस्तीर्णजिह्वाग्रेण, मकारोच्चारणे उत्तरोष्ठे अधरोष्ठेन स्पर्शं भवति। तथा च नासिकया तत्रानुनासिकत्वञ्जायते। एवम् एषामुच्चारणे मुखस्थहनुमूलादिकरणं नासिके नासिकाकरणं च कार्यं करोति। अत एव अनुनासिकानामुच्चारणे मुखस्थकरणं नासिका च द्वे करणे भवतः। अत एवोक्तं शौनकेन—'रक्तो वचनो मुखनासिकाभ्याम्' ( ऋ० प्रा० १३.२० )। कात्यायनेनाप्युक्तम्—'मुखनासिकाकरणोऽनुनासिकः' ( वा० प्रा० १.७५ )। मुखनासिकाभ्यामुच्चारणादेव एते अनुनासिकाः ॥ २७ ॥

### शशिकला

मुख और नासिका = मुखनासिका। 'स्पर्श-वर्गों के उत्तम ( स्पर्श ) अनुनासिक ( कहलाते हैं )' ( १.१.११ ) यह कहा जा चुका है। ङ ञ ण न

म—ये उत्तम स्पर्श हैं। इनके उच्चारण में मुख और नासिका दोनों करण होते हैं। यथार्थतः अनुनासिक वर्णों के उच्चारण के समय संवार नामक बाह्यप्रयत्न द्वारा कण्ठविवर के स्वरयन्त्र में स्वरतन्त्रियों के साथ संघर्षण से विकृत होकर प्राप्त नाद नामक वायुद्रव्य मुखविवर तथा नासिकाविवर-दोनों से निकलता है। मुखविवर में स्थान तथा करण के स्पर्श द्वारा विकृत होता है। ङकार के उच्चारण में जिह्वामूल पर हनुमूल से, ञकार के उच्चारण में तालु पर जिह्वामध्य से, णकार के उच्चारण में मूर्धा पर प्रतिवेष्टित जिह्वाग्र से, नकार के उच्चारण में दाँतों पर प्रस्तीर्ण जिह्वाग्र से तथा मकार के उच्चारण में ऊपर वाले ओष्ठ पर निचले ओष्ठ से स्पर्श होता है तथा नासिका से निकलने वाली वायु से उनमें आनुनासिक्य उत्पन्न होता है। इस प्रकार इनके उच्चारण में मुख में हनुमूलादि तथा नासिका में नासिका करण होता है। अतएव अनुनासिकों के उच्चारण में मुखस्थ तथा नासिकास्थ दो करण होते हैं। इसलिए ऋ० प्रा० में कहा गया है— रक्त का उच्चारण मुख और नासिका दोनों से होता हैं' ( ऋ० प्रा० १३.३० )। कात्यायन ने भी कहा है - अनुनासिक मुख तथा नासिका दोनों करण वाले होते हैं' ( वा० प्रा० १.७५ )। मुख तथा नासिका से उच्चारित होने के कारण ही ये अनुनासिक कहलाते हैं ॥ २७ ॥

## रेफस्य दन्तमूलानि ॥ २८ ॥

**सू० अ०**—रेफ के ( उच्चारण में ) दन्तमूल ( करण होते हैं )।

### निर्मलभाष्यम्

**रेफस्योच्चारणे दन्तमूलानि** करणानि भवन्ति। अस्योच्चारणस्थानं किमिति सूत्रकारेण न निर्दिष्टम्। शौनकमते रेफो दन्तमूलीयः —'सकाररेफलकाराश्च' ( ऋ० प्रा० १.४५ )। एकेषामाचार्याणां मते रेफस्योच्चारणं बर्स्वस्थाने भवति—'रेफं बर्स्व्यमेके' ( ऋ० प्रा० १.४६ )। बर्स्वः दन्तमूलादुपरिष्टादुच्छूनं स्थानम्। तैत्तिरीयप्रातिशाख्यकारमते प्रत्यग्दन्तमूलं स्थानं जिह्वाग्रमध्यञ्चकरणम्—'रेफे जिह्वाग्रमध्येन प्रत्यग्दन्तमूलेभ्यः' ( तै० प्रा० २.४१ )। कात्यायनेन रेफस्य स्थानं दन्तमूलं करणञ्च जिह्वाग्रं स्वीकृतम्—'रो दन्तमूले' 'रश्च' ( वा० प्रा० १.६८, ७७ )। एवं रेफस्योच्चारणस्थानकरणविषये आचार्याणां मतसाम्यं नास्ति। यथोक्तं पूर्वभाष्यकारेण—

हनुमूलेषु रेफस्य दन्तमूलेषु वा पुनः।
प्रत्यग्वा दन्तमूलेभ्यो मूर्धन्य इति चापरे ॥
( द्रष्टव्या १.१.२८ ह्विटनीव्याख्या )

चरणभेदः शाखाभेदो वात्र कारणम्। सूत्रकारमते अथर्वचरणस्य संहितासु रेफस्योच्चारणं दन्तमूलकरणेन भवति ॥ २८ ॥

**शशिकला**

रेफ के उच्चारण में दन्तमूल करण होते हैं। इसके उच्चारणस्थान का निर्देश सूत्रकार ने नहीं किया है। शौनक के मत में रेफ दन्तमूल स्थान पर उच्चारित होता है ( ऋ० प्रा० १.४५ )। शौनक ने यह भी विधान किया है कि कतिपय आचार्यों के अनुसार रेफ का उच्चारणस्थान बर्स्व है ( ऋ० प्रा० १.४६ )। तै० प्रा० के अनुसार रेफ का उच्चारणस्थान प्रत्यग्-दन्तमूल तथा करण जिह्वामध्य है ( तै० प्रा० २.४१ )। कात्यायन के अनुसार रेफ का स्थान दन्तमूल तथा करण जिह्वाग्र है ( वा० प्रा० १.६८, ७७ )। इस प्रकार रेफ के उच्चारणस्थान तथा करण के विषय में आचार्यों के मतों में साम्य नहीं है जैसा पूर्वभाष्यकार ने कहा है—'रेफ का उच्चारण हनुमूल स्थान पर होता है अथवा दन्तमूल स्थान पर। कतिपय आचार्य इसका उच्चारणस्थान प्रत्यग्दन्तमूल मानते हैं तथा अन्य आचार्य रेफ को मूर्धन्य स्वीकारते हैं। रेफ के उच्चारणस्थान में यह अनेकरूपता चरण-भेद के कारण है। सूत्रकार के अनुसार अथर्वचरण में रेफ का उच्चारण दन्तमूल करण से किया जाता है ॥ २८ ॥

[ आभ्यन्तरप्रयत्नविधानम् ]

## स्पृष्टं स्पर्शानां करणम् ॥ २९ ॥

**सू० अ०** –स्पर्श ( वर्णों ) का आभ्यन्तरप्रयत्न 'स्पृष्ट' (होता है)।

**निर्मलभाष्यम्**

कादयो मावसानाः **स्पर्शवर्णाः**। एतेषां स्पर्शानाम् उच्चारणे स्पृष्टं नाम **करण**माभ्यन्तरप्रयत्नं भवति। अत्र करणशब्दः[1] आभ्यन्तरप्रयत्न-पर्यायः। प्रयत्नं द्विधा—बाह्यमाभ्यन्तरञ्चेति। बाह्यप्रयत्नं मुखात् बहिः

---

१. १.१.१८ भाष्ये द्रष्टव्यम्।

कण्ठविवरस्थस्वरयन्त्रस्य स्वरतन्त्रीषु भवति। अत एव 'बाह्यप्रयत्नम्' इत्यनेन ख्यापितः अपरन्तु मुखाभ्यन्तरे भवति अत एवाभ्यन्तरप्रयत्नमुच्यते। मुखाभ्यन्तरत्वात् मुखप्रयत्नमास्यप्रयत्नमित्यप्युच्यते।

वस्तुतस्तु श्वासनादाख्यं वायुद्रव्यं मुखे आभ्यन्तरप्रयत्नेन स्थाने करणप्रक्रियया विकृत्य वर्णानुत्पादयति। आभ्यन्तरप्रयत्नं चतुर्धा सूत्रकारेण निर्दिष्टम्—स्पृष्टमीषत्स्पृष्टं विवृतं संवृतञ्चेति। अथर्ववेदीयशिक्षायामपि चतुर्विधमाभ्यन्तरप्रयत्नमित्युक्तम्—

वर्णानां तु प्रयोगेषु करणं स्याच्चतुर्विधम्।
संवृतं विवृतञ्चैव स्पृष्टमस्पृष्टमेव च ॥ ( मा० शि० ७९ )

अनेनैवाभ्यन्तरप्रयत्नेन स्थाने करणं विविधप्रकारेण वायुद्रव्यं विकरोति। स्पृष्टनामाभ्यन्तरप्रयत्नेन करणं स्थाने स्पर्शयति। स्पर्शदशायां वायुद्रव्यस्य स्थानेऽवरोधो जायते। स्पर्शानन्तरं स्थानात् करणस्य विमोक्षः। येन वायुद्रव्यं मुखाद् वहिः निःसरति। अवरोधानन्तरं वायुद्रव्यस्य निःसरणकाले एव स्पर्शवर्णः श्रुतिगोचरः भवति। स्थानकरणयोः स्पर्शेन जायमानत्वादेव एषां वर्णानां स्पर्श इति अन्वर्थसंज्ञा। शौनकानुसारेण स्पर्शानामाभ्यन्तरप्रयत्नमस्थितं स्पृष्टम्—'स्पृष्टमस्थितम्' ( ऋ० प्रा० १३.९ )। तैत्तिरीयप्रातिशाख्ये स्पृष्टाख्याभ्यन्तरप्रयत्नस्योल्लेखं तु न कृतं परञ्च स्पर्शोच्चारणे स्थाने करणेन स्पर्शनस्य विधानं कृतम्—'हनुमूले जिह्वामूलेन कवर्गं स्पर्शयति' ( तै० प्रा० २.३३, ३४ )। शिक्षायामपि एवमेवोक्तम् —'स्पर्शानां करणं स्पृष्टम्' ( मा० शि० ७० ) ॥ २९ ॥

## शशिकला

ककार से मकार तक स्पर्श वर्ण हैं। इन वर्णों के उच्चारण में 'स्पृष्ट' नामक आभ्यन्तरप्रयत्न होता है। यहाँ करण का प्रयोग आभ्यन्तरप्रयत्न के अर्थ में किया गया है[1]। प्रयत्न दो प्रकार का होता है बाह्यप्रयत्न तथा आभ्यन्तरप्रयत्न। बाह्यप्रयत्न मुख से बाहर कण्ठविवर में स्थित स्वरयन्त्र के स्वरतन्त्रियों में होता है। मुख से बाहर होने के कारण यह बाह्यप्रयत्न कहलाता है। दूसरे को मुख के भीतर होने के कारण आभ्यन्तरप्रयत्न कहा जाता है। मुख के भीतर होने के कारण इसे मुखप्रयत्न तथा आस्यप्रयत्न भी कहते हैं।

---

१. १.१.१८ की व्याख्या द्रष्टव्य।

वस्तुतः 'श्वास' तथा 'नाद' संज्ञक वायुद्रव्य मुख में आभ्यन्तरप्रयत्न द्वारा स्थान पर करण की प्रक्रिया से विकृत होकर वर्णों को उत्पन्न करता है। सूत्रकार ने चार आभ्यन्तरप्रयत्नों का निर्देश किया है · स्पृष्ट, ईषत्स्पृष्ट, विवृत तथा संवृत। अथर्ववेदीयशिक्षा में भी चार आभ्यन्तरप्रयत्न कहे गये हैं -'वर्णों के उच्चारण में चार प्रकार के आभ्यन्तरप्रयत्न होते हैं · संवृत, विवृत स्पृष्ट तथा अस्पृष्ट'।

इन्हीं आभ्यन्तरप्रयत्नों द्वारा करण स्थान पर विविध प्रकार से वायुद्रव्यों को विकृत करता है। स्पृष्ट नामक आभ्यन्तरप्रयत्न से करण स्थान पर स्पर्श करता है जिससे स्पर्श की दशा में वायुद्रव्य का स्थान पर अवरोध हो जाता है। स्पर्श के बाद स्थान से करण का अलगाव हो जाता है जिससे वायुद्रव्य बाहर निकलता है। अवरोध के बाद वायुद्रव्य के बाहर निकलने के समय ही स्पर्शवर्ण कर्णगोचर होते हैं। स्थान तथा करण के स्पर्श से उच्चारित होने के कारण ही ये वर्ण स्पर्श कहलाते हैं।

ऋ० प्रा० में स्पर्श वर्णों का आभ्यन्तरप्रयत्न सक्रिय स्पृष्ट कहा गया है ( ऋ० प्रा० १३.९ )। तै० प्रा० में स्पृष्ट संज्ञा का प्रयोग तो नहीं किया गया है किन्तु स्पर्शवर्णों के उच्चारण में स्थान पर करण से स्पर्श होने का उल्लेख हुआ है ( तै० प्रा० २.३३, ३४ इत्यादि )। वा० प्रा० में आभ्यन्तर प्रयत्न का निर्देश नहीं हुआ है। शिक्षा में भी स्पर्शवर्णों का आभ्यन्तर प्रयत्न स्पृष्ट बतलाया गया है ॥ २९ ॥

## ईषत्स्पृष्टमन्तःस्थानाम् ॥ ३० ॥

सू० अ०—अन्तःस्थ ( वर्णों ) का ( आभ्यन्तर प्रयत्न ) ईषत्स्पृष्ट ( होता है )।

### निर्मलभाष्यम्

**अन्तःस्थानाम्** अन्तःस्थवर्णानामाभ्यन्तरप्रयत्नमीषत्स्पृष्टं भवति। यरलवा अन्तःस्थाः। वर्णमालायां स्पर्शोष्मणयोरन्तरे विद्यमानत्वादेते वर्णा अन्तःस्थाः। स्पर्शस्वरयोः मध्याभ्यन्तरप्रयत्नेन जायमानत्वाद् वा। स्पर्शानामुच्चारणे स्थाने करणे न स्पर्शं भवति। स्वरवर्णस्योच्चारणे स्थाने करणस्योपसंहारः भवति येन मुखविवरं विवृतमेव। परञ्च एतेषां वर्णानामुच्चारणे पूर्णरूपेण न तयोः स्पर्शनं, न तु विवृतं प्रत्युत ईषत्स्पर्शमेव।

अनयोः स्पर्शस्वरवर्णयोः अन्तःस्थाभ्यन्तरप्रयत्नेन जायमानत्वादिमे वर्णा अन्तःस्था उच्यन्ते। अस्मादेव कारणादेते वर्णा अर्धस्वरा इत्यपि ख्याताः। अथवा एषामुच्चारणे करणस्य मध्यभागः स्थाने स्पृशति। मध्ये अन्तः-स्पर्शत्वादेते अन्तःस्थाः। ननु एकस्मिन्नेव काले करणेन स्थाने उपसंहारः स्पर्शनश्च कथं सम्भवेत्। येन मुखविवरस्य संवृतं विवृतश्चावस्था एकस्मिन् काले न भवति। मुखविवरं एकस्मिन्काले संवृतं वा विवृतं वा भवितुमर्हति। उच्यते—स्थाने करणस्य ईषत्स्पर्शेन मुखविवरस्य स्थानकरणयोः मध्यभागे स्पर्शनं येन संवृतम् अन्तयोश्च विवृतमेव। न तु पूर्णरूपेण विवृतं संवृतं वा।

शौनकेन ईषत्स्पृष्टार्थे दुःस्पृष्टशब्दः प्रयुक्तः—'दुःस्पृष्टं तु प्राग्घकाराच्चतुर्णाम्' ( ऋ० प्रा० १३.१० )। तैत्तिरीयप्रातिशाख्ये ईषत्पृष्टाभ्यन्तर-प्रयत्नस्य प्रयोगं तु न कृतं परञ्च अन्तःस्थोच्चारणे स्थाने करणस्य मध्येन स्पर्शनं विहितम्—'तालौ जिह्वामध्यान्ताभ्यां यकारे' 'रेफे जिह्वाग्रमध्येन प्रत्यग्दन्तमूलेभ्यः', 'दन्तमूलेषु लकारे' ( तै० प्रा० २.४०–४२ )। शिक्षायाम् 'अस्पृष्टं' नाम प्रयुक्तं – 'स्पर्शानां करणं स्पृष्टमस्पृष्टमन्तःस्थानाम्' ( मा० शि० ७० पू० ) इति ॥ ३० ॥

## शशिकला

अन्तःस्थ वर्णों का आभ्यन्तरप्रयत्न ईषत्स्पृष्ट होता है। य र ल व ये चार अन्तःस्थ हैं। वर्णमाला में ये वर्ण स्पर्श तथा ऊष्म वर्णों के मध्य में पठित हैं इसलिए अन्तःस्थ कहलाते हैं अथवा स्वर तथा स्पर्श वर्णों के बीच वाले आभ्यन्तरप्रयत्न से उच्चारित होने के कारण ये अन्तःस्थ कहलाते हैं। स्वरवर्णों के उच्चारण में स्थान पर करण का उपसंहार ( समीपागमन ) होता है जिससे मुखविवर खुला रहता है तथा स्पर्शवर्णों के उच्चारण में स्थान पर करण का स्पर्श हो जाता है जिससे मुखविवर बन्द हो जाता है। किन्तु अन्तःस्थवर्णों के उच्चारण में स्थान पर करण का उपसंहार नहीं होता है जिससे मुखविवर न तो पूर्णरूपेण खुला ही रहता है और न तो पूर्णस्पर्श होने से मुखविवर पूर्णरूपेण बन्द ही रहता है प्रत्युत ईषत्स्पृष्ट ( थोड़ा-सा स्पर्श ) होने से मुखविवर थोड़ा खुला तथा थोड़ा बन्द रहता है। इन स्वर तथा स्पर्श वर्णों के मध्य वाले आभ्यन्तर-प्रयत्न-ईषत्स्पृष्ट से उत्पन्न होने के कारण ये अन्तःस्थ कहलाते हैं। इसी कारण से ये 'अर्धस्वर' भी कहे जाते हैं। इनके उच्चारण में करण का मध्यभाग स्थान पर स्पर्श करता है। मध्य में स्पर्श होने से ये अन्तःस्थ

कहलाते हैं। यहाँ शङ्का होती है कि एक ही समय स्थान पर करण के उपसंहार से मुखविवर का खुला रहना तथा स्पर्श से बन्द रहना—दोनों कैसे सम्भव है। या तो उपसंहार से मुखविवर खुला रह सकता है या तो स्पर्श से बन्द। दोनों क्रियाएँ साथ नहीं हो सकती। समाधान यह है कि स्थान पर करण के द्वारा थोड़ा-सा स्पर्श से मुखविवर में स्थान तथा करण का मध्य भाग बन्द हो जाता है तथा दोनों ओर खुला रहता है। उस समय मुखविवर न तो पूर्णरूपेण खुला रहता है और न पूर्णरूप से बन्द।

शौनक ने 'ईषत्स्पृष्ट' के स्थान पर 'दुःस्पृष्ट' संज्ञा का प्रयोग किया है ( ऋ० प्रा० १३.१० )। तै० प्रा० में ईषत्स्पृष्ट संज्ञा का प्रयोग तो नहीं हुआ है किन्तु अन्तःस्थवर्णों के उच्चारण में स्थान पर करण के मध्य-भाग से स्पर्श होने का विधान किया गया है ( तै० प्रा० २.४०-४२ )। शिक्षा में अन्तःस्थवर्णों का आभ्यन्तरप्रयत्न अस्पृष्ट बतलाया गया है ॥ ३० ॥

## ऊष्मणां विवृतश्च ॥ ३१ ॥

सू० अ०—ऊष्म ( वर्णों ) का ( आभ्यन्तरप्रयत्न ईषत्स्पृष्ट ) 'विवृत' ( होता है )।

### निर्मलभाष्यम्

चशब्दः पूर्वसूत्राद् ईषत्स्पृष्टमन्वादिशति। **ऊष्मणाम्** ऊष्मवर्णानामुच्चारणे ईषत्स्पृष्टं **विवृतमाभ्यन्तरप्रयत्नं** भवति। एषां वर्णानामुच्चारणे करणस्यान्तभागाभ्यां स्थाने ईषत्स्पर्शनं मध्ये तु विवृतमेव। यथोक्तं—'करणमध्यं तु विवृतम्' ( तै० प्रा० २.४५ )। शौनकमते तु ऊष्मणां प्रयोगे अस्पृष्टं प्रयत्नं भवति—'स्वरानुस्वारोष्मणामस्पृष्टं स्थितम्' ( ऋ० प्रा० १३.११ )।

ऊष्मणां प्रयोगे मुखविवरस्थस्थाने करणस्य ईषत्स्पर्शेन मध्ये विवृतं भवति येन वायुः संघर्षेण निस्सरति। अत एव एतेषां 'संघर्षीध्वनिः' इत्यपि संज्ञा।

ऊष्मवर्णानां निर्देशः सूत्रकारेण नात्र कृतः। शौनकमते ह, श, ष स, अः, ≍क, ≍प, अं इत्येतेऽष्टा वर्णा ऊष्माणः—'उत्तरेऽष्टा ऊष्माणः' ( ऋ० प्रा० १.१० )। तैत्तिरीयप्रातिशाख्ये ≍क श ष स ≍प ह एते षड्वर्णा ऊष्माणः 'परे षडूष्माणः' ( तै० प्रा० १.९ ) प्रोक्ताः। कात्यायना-

नुसारं ष श स ह् इत्येते ऊष्माणः—'अथोष्माणः' 'शिति षिति सिति हिति' ( वा० प्रा० ८१६-१७ )। सूत्रकारेण के वर्णा ऊष्मान्तर्गते स्वीकृता इत्यस्पष्टम् । परञ्चात्र षडूष्माणः ग्रहीतव्याः ।। ३१ ।।

### शशिकला

सूत्र में प्रयुक्त च शब्द पूर्ववर्ती सूत्र से ईषत्स्पृष्ट का अन्वादेश करता है। ऊष्मवर्णों के उच्चारण में 'ईषत्स्पृष्ट विवृत' आभ्यन्तरप्रयत्न होता है। इनके उच्चारण में स्थान पर करण के अन्तिम दोनों भागों ( किनारों ) से थोड़ा स्पर्श होता है तथा मध्य में 'विवृत' रहता है। जैसा कि कहा गया है 'ऊष्मवर्णों के उच्चारण में करण के मध्य में खुला रहता है' ( तै० प्रा० २.४५ )। शौनक के मत में इनके उच्चारण में अस्पृष्ट' आभ्यन्तर प्रयत्न होता है ( ऋ० प्रा० १३.११ )।

ऊष्मवर्णों के उच्चारण में मुखविवर में स्थान पर करण के थोड़ा सा स्पर्श से मध्य में खुला रहता है जिससे वायुद्रव्य संघर्षण के साथ बाहर निकलता रहता है। इसलिए इन्हें संघर्षी—ध्वनि भी कहा जाता है।

सूत्रकार ने ऊष्मवर्णों का निर्देश नहीं किया है। शौनक के मत में ह, श, ष, स. अः ≍क, ≍प तथा अं ये आठ ऊष्म हैं ( ऋ० प्रा० १ १० )। तै० प्रा० में ≍क, श, ष स; ≍प तथा हकार ये छः ऊष्म बतलाए गये हैं ( तै० प्रा० १.९ )। कात्यायन के अनुसार श ष, स, ह— ये चार ऊष्म वर्ण हैं। सूत्रकार ने ऊष्म वर्ण के अन्तर्गत किन-किन वर्णों को स्वीकार किया है—निर्देश के अभाव में यह निश्चित रूप से नहीं कहा जा सकता। किन्तु यहाँ छ ऊष्म वर्णों का ग्रहण करना चाहिए ।। ३१ ।।

## स्वराणाञ्च ।। ३२ ।।

**सू० अ०**—स्वर ( वर्णों ) का भी ( आभ्यन्तरप्रयत्न 'विवृत' होता है )।

### निर्मलभाष्यम्

चशब्दः पूर्वसूत्राद् विवृतमित्यन्वादिशति। अकारादयः स्वराः। एतेषां वर्णानामुच्चारणे विवृतमाभ्यन्तरप्रयत्नं भवति। एषां प्रयोगे ईषन्मात्रमपि स्थाने करणेन स्पर्शनं न जायते प्रत्युत उपसंहारः समीपागमनमेव भवति। यथोक्तं –'स्वराणां यत्रोपसंहारस्तत्स्थानम्' 'यदुपसंहरति तत्करणम्'

( तै० प्रा० २.३१-३२ )। एवं स्पष्टं यत् स्वरवर्णानामुच्चारणे स्थाने करणस्य समीपागमनमेव, न तु स्पर्शनं यस्माद् मुखविवरं विवृतं जायते। शौनकमते स्वराणाम् अनुस्वारस्य ऊष्मणां च स्थितमस्पृष्टमाभ्यन्तरप्रयत्नं भवति –'स्वरानुस्वारोष्मणामस्पृष्टं स्थितम्' ( ऋ० प्रा० १३.११ )। ध्वनिवैज्ञानिकदृष्ट्या तैत्तिरीयप्रातिशाख्यमतं अतिमहत्त्वपूर्णम्। यतो हि सर्वेषां वर्णानामुच्चारणे स्थानकरणयोः योगदानं भवत्येव। अत एव एते निष्क्रिये न विद्येते ॥ ३२ ॥

### शशिकला

सूत्र में प्रयुक्त च शब्द पूर्ववर्ती सूत्र से 'विवृत' का अन्वादेश करता है। अकार इत्यादि स्वरवर्ण हैं। इन वर्णों के उच्चारण में 'विवृत' नामक आभ्यन्तरप्रयत्न होता है। इनके उच्चारण में थोड़ा-सा भी स्थान पर करण से स्पर्श नहीं होता प्रत्युत स्थान पर करण के द्वारा उपसंहार ( समीप में जाना ) होता है। जैसा कि कहा गया है—'स्वरों के उच्चारण में जहाँ उपसंहार होता है, वह स्थान कहलाता है' 'जिसके द्वारा उपसंहार होता है, वह करण कहलाता है' ( तै० प्रा० २.३१-३२ )। इससे स्पष्ट है कि स्वरों के उच्चारण में करण स्थान के समीप जाता है किन्तु उसका स्पर्श नहीं करता जिससे मुखविवर खुला ही रहता है। शौनक के मत में स्वरों का आभ्यन्तरप्रयत्न अस्पृष्ट ( स्पर्श न किया हुआ ) होता है तथा स्थान और करण स्थित ( निष्क्रिय ) रहते हैं। इसमें तै० प्रा० का मत ध्वनिवैज्ञानिक दृष्टि से अधिक महत्त्वपूर्ण है क्योंकि प्रत्येक वर्ण के उच्चारण में स्थान तथा करण का योगदान रहता है, वे निष्क्रिय नहीं होते ॥ ३२ ॥

## एके स्पृष्टम् ॥ ३३ ॥

**सू० अ०**—कतिपय ( आचार्य ) ( स्वरवर्णों का आभ्यन्तरप्रयत्न ) स्पृष्ट ( मानते हैं )।

### निर्मलभाष्यम्

**एके** आचार्याः स्वरवर्णानामुच्चारणे **स्पृष्टमा**भ्यन्तर प्रयत्नं स्वीकुर्वन्ति। परञ्च ध्वनिवैज्ञानिकदृष्टया मतमिदमनिष्टम्। सूत्रकारेण एकेषामाचार्याणां मतख्यापनाय विधानमिदं विहितम्। मतमिदमनभीष्टम् ॥ ३३ ॥

### शशिकला

कुछ आचार्य स्वरवर्णों के उच्चारण में स्पृष्ट को आभ्यन्तरप्रयत्न मानते हैं। किन्तु ध्वनिवैज्ञानिक दृष्टि से यह मत अभीष्ट नहीं है। सूत्रकार ने कतिपय आचार्यों के मत को प्रस्तुत करने के लिए यह विधान किया है। यह मत अभीष्ट नहीं है ॥ ३३ ॥

## एकारौकारयोर्विवृततमम् ॥ ३४ ॥

**सू० अ०**—एकार और ओकार (के उच्चारण) में विवृततम (आभ्यन्तरप्रयत्न होता है)।

### निर्मलभाष्यम्

'स्वराणाञ्च' (१.१ ३२) इति स्वरवर्णानां विवृतमाभ्यन्तरप्रयत्न-मुक्तम्। अत्र तेषु स्वरवर्णेषु एकारस्य ओकारस्य चाभ्यन्तरप्रयत्ने वैशिष्टयं निर्दिशति। अनयोरुच्चारणे विवृततममाभ्यन्तरप्रयत्नं भवति।

### शशिकला

'स्वर (वर्णों) का आभ्यन्तरप्रयत्न विवृत होता है' (१.१.३२) के द्वारा स्वरों का आभ्यन्तरप्रयत्न विवृत बतलाया गया है। उन स्वरवर्णों में से एकार तथा ओकार के आभ्यन्तरप्रयत्न की विशेषता को यहाँ बतलाया गया है। इन एकार तथा ओकार के उच्चारण में विवृततम आभ्यन्तरप्रयत्न होता है ॥ ३४ ॥

## ततोऽप्याकारस्य ॥ ३५ ॥

**सू० अ०** -आकार (के उच्चारण) में उस (विवृततम) से भी अधिक (विवृत) (आभ्यन्तरप्रयत्न होता है)।

### निर्मलभाष्यम्

**आकारस्योच्चारणे ततः** तस्माद्विवृततमादपि अधिकं विवृतमाभ्य-न्तरप्रयत्नं भवति। अस्य प्रयोगे मुखविवरं सर्वाधिकं विवृतं जायते ॥३५॥

### शशिकला

अकार के उच्चारण में उस विवृतम से भी अधिक विवृत आभ्यन्तर-प्रयत्न होता है। इसके उच्चारण में मुखविवर सर्वाधिक खुला रहता है ॥ ३५ ॥

## संवृतोऽकारः ॥ ३६ ॥

**सू० अ०—**अकार 'संवृत' ( नामक आभ्यन्तरप्रयत्न से उच्चारित होता है )।

### निर्मलभाष्यम्

संवृते आभ्यन्तरप्रयत्ने मुखविवरं स्वाभाविकावस्थायां विद्यते। अकारस्य आभ्यन्तरप्रयत्नं संवृतमेव। अस्योच्चारणे मुखविवरस्य सामान्यावस्थायां विद्यमाने उपरि कोमलतालौ अधरकोमलतालुनोपसंहारः क्रियते ॥ ३६ ॥

### शशिकला

संवृत आभ्यन्तरप्रयत्न में मुखविवर अपनी स्वाभाविक अवस्था में रहता है। अकार का आभ्यन्तरप्रयत्न संवृत होता है। इसके उच्चारण में मुखविवर की सामान्य अवस्था में ऊपर वाले कोमलतालु पर निचले कोमलतालु से उपसंहार किया जाता है ॥ ३६ ॥

[ ऋवर्णस्य स्वरूपम् ]

## संस्पृष्टरेफमृवर्णम् ॥ ३७ ॥

**सू० अ०—**ऋवर्ण रेफ से संस्पृष्ट ( मिला हुआ ) होता है।

### निर्मलभाष्यम्

**ऋवर्णं** ऋकार-ॠकार-ऋ३काराश्च **संस्पृष्टरेफं** रेफेन संस्पृष्टं संश्लिष्टं भवति। ऋवर्णस्य स्वरूपमत्र निर्दिष्टम्। ऋवर्णस्य पूर्वं मात्रार्धं रेफं परार्धं च स्वरम्। यथोक्तं शिक्षायाम्—'ऋवर्णं रेफसंयुक्तं स्वरितं स्यादनन्तरम्' ( मा० शि० १२७ पू० )। शौनकमतेऽपि—

'रेफोऽस्त्यृकारे च परस्य चार्धं
पूर्वे ह्रसीयांस्तु न वेतरस्मात्।
मध्ये सः' ( ऋ० प्रा० १३.३४ )

ऋकारर्कारयोः रेफस्यांशं भवति। ऋकारस्य पूर्वार्धे रेफः ऋकारस्य मध्ये। ॠकारस्य रेफः ऋकारस्य रेफादल्पतरः तत्समो वा। कात्यायनेन ऋवर्णे रेफस्य संश्लेषत्वं मतम्—'ऋलृवर्णे रेफलकारौ संश्लिष्टावश्रुति-

धरावेकवर्णौ ( वा० प्रा० ४.१४८ )। एवम् ऋकारे च ऌकारे च यथासङ्ख्यं रेफलकारौ संश्लिष्टौ। परश्च तस्योच्चारणम् अकारश्रुत्या एकवर्णवद् भवति। कियत्मात्रं रेफं संश्लिष्टम्? ऋकारे पूर्वांशमणुमात्रमकार मध्ये मात्रार्धं रेफमन्ते च अणुमात्रमकारः। यथोक्तमुवटेन 'ऋकारे ऌकारे च यथासङ्ख्यं रेफलकारौ कण्ठ्याणमात्रयोर्मध्येऽर्धमात्रिकौ' ( वा० प्रा० ४. १४८ उ० ) इति। कण्ठ्य अकारः।

तैत्तिरीयप्रातिशाख्ये ऋवर्णस्योच्चारणप्रक्रिया विहिता—'उपसंहृततरे च जिह्वाग्रमृकारर्कारल्कारेषु बर्स्वेषूपसंहरति ( तै० प्रा० २.१८ )। इत्यत्र चशब्दः पूर्वसूत्राद्धन्योरन्वादेशकः। ऋवर्णस्य प्रयोगे हनूपसंहृततरे भवतः—'अवर्णेनात्युपसंहृतमोष्ठहनू नातिव्यस्तम्' ( तै० प्रा० २.१२ ) इत्यनुसारं हनू अवर्णस्योच्चारणस्थानमोष्ठं च करणम्। 'रेफे जिह्वाग्रमध्येन प्रत्यग्दन्तमूलेभ्यः' ( तै० प्रा० २ ४१ ) इत्यनुसारं प्रत्यग्दन्तमूलं बर्स्वं रेफस्योच्चारणस्थानं जिह्वाग्रमध्यश्च करणम्। एवमपि स्पष्टमिदम् यद् ऋवर्णे रेफाकारयोः संश्लेषः। किं ह्रस्वदीर्घप्लुतेषु त्रिषु ऋवर्णेषु रेफाकारयोः संश्लेषस्यायमेवानुपातः? नेत्युच्यते। ह्रस्वऋकारे एव। दीर्घप्लुतयोः विधानं 'दीर्घप्लुतयोः पूर्वा मात्रा' ( १.१ ३८ ) इत्यनेन अग्रे उक्तम्॥ ३७॥

## शशिकला

ऋवर्ण अर्थात् ऋकार, ॠकार तथा ऋ३कार रेफ से संश्लिष्ट होते हैं। यहाँ ऋवर्ण के स्वरूप का निर्देश किया गया है। ऋवर्ण की पूर्ववर्ती आधी मात्रा रेफ तथा परवर्ती आधी मात्रा स्वर की होती है। जैसा शिक्षा में कहा गया है—'ऋवर्ण में ( पूर्वार्ध ) रेफसंयुक्त होता है तथा बाद में स्वर होता है' ( मा० शि० १२७ पू० )। शौनक के अनुसार 'ऋकार में रेफ होता है। ऋकार में परवर्ती ( स्वर वर्ण ) होता है तथा ( ॠकार के ) पूर्वार्द्ध में रेफ होता है। ( ॠकार का रेफ ) अन्य ऋकार के रेफ ) से अल्पतर ( होता है )' 'अथवा समान होता है। वह ( ऋकार का रेफ ) ( ऋकार के ) मध्य में ( होता है )' ( ऋ० प्रा० १३ ३४ )। इससे ज्ञात होता है कि ऋकार तथा ॠकार दोनों में संश्लिष्ट होता है किन्तु ॠकार का रेफ पूर्वार्ध में होता है जबकि ऋकार का रेफ मध्य में होता है। ॠकार का रेफ ऋकार के रेफ से अल्पतर अथवा उसके समान ही होता है।

कात्यायन के अनुसार भी ऋवर्ण में रेफ संश्लिष्ट होता है—'ऋवर्ण और ऌवर्ण में क्रमशः रेफ तथा लकार संलिष्ट होते हैं तथा उनका उच्चारण अकार के उच्चारण के समान एकवर्ण वाला होता है' ( वा० प्रा० ४ १४८ )। ऋवर्ण में रेफ तथा स्वर के संश्लेष के विषय में उवट का कथन ध्यातव्य है जो उचित भी है—'ऋकार तथा ऌकार में पूर्ववर्ती तथा परवर्ती अणुमात्रिक कण्ठ्य के मध्य में आधी मात्रा क्रमशः रेफ तथा लकार की होती है' ( वा० प्रा० ४.१४८ उ० )। अकार कण्ठ्य है। इससे स्पष्ट है कि ऋकार में पूर्ववर्ती तथा परवर्ती अणु मात्रा अकार तथा मध्य में आधी मात्रा रेफ होता है। ऋकार में रेफ तथा अकार के संश्लेष का यही अनुपात होता है। इसमें पूर्ववर्ती तथा परवर्ती अणु मात्रा अकार और मध्य में आधी मात्रा रेफ होता है।

तै० प्रा० में ऋवर्ण के उच्चारण की प्रक्रिया बतलाते हुए कहा गया है कि 'ऋकार तथा ऌकार के उच्चारण में दोनों हनु अत्यधिक समीप में आ जाते हैं तथा जिह्वा का अगला भाग मसूड़ों पर उपसंहार करता है' ( तै० प्रा० २.१८ )। इस प्रकार ऋवर्ण के उच्चारण में दोनों हनु उपसंहृततर हो जाते हैं। तै० प्रा० के अनुसार हनु अवर्ण का उच्चारणस्थान तथा ओष्ठ करण है। रेफ के उच्चारण में जिह्वा के मध्य से प्रत्यग्दन्तमूल पर स्पर्श किया जाता है ( तै० प्रा० २.४१ )। इस प्रकार स्पष्ट है कि ऋकार के उच्चारण में अवर्ण तथा रेफ का संश्लेष होता है क्योंकि इसके उच्चारण में अकार तथा रेफ दोनों के स्थान और करण का उपयोग होता है। ह्रस्व दीर्घ तथा प्लुत तीनों ऋवर्ण के उच्चारण में अकार तथा रेफ के संश्लेष का अनुपात यही नहीं होता। यह अनुपात केवल ऋकार में होता है। दीर्घ तथा प्लुत में रेफ तथा अकार के संश्लेष का विधान परवर्ती सूत्र में किया गया है ॥ ३७ ॥

## दीर्घप्लुतयोः पूर्वा मात्रा ॥ ३८ ॥

सू० अ०—दीर्घ और प्लुत ( ऋवर्ण ) में ( रेफ ) पूर्ववर्ती (एक) मात्रा ( संश्लिष्ट होता है )।

### निर्मलभाष्यम्

**दीर्घप्लुतयोः** ऋवर्णयोः ॠकारे ऋ३कारे च **पूर्वा** एकमात्रा रेफं परार्धभागश्च अकारो भवति। ॠकारे पूर्वः एकमात्रिकरेफः परः च

कण्ठ्यो अकारः ॠ३कारे च पूर्वः एकमात्रिक रेफः परः द्विमात्रिक अकारश्च। **ननु** अकारस्तु मात्राकालः कथं तस्य द्विमात्राकालत्वमुक्तम्। **उच्यते**—स्वराणां काले आधिक्यश्च जायते। अत एवाकारस्य द्विमात्राकालत्वं भवत्येव ॥ ३८ ॥

**शशिकला**

दीर्घ तथा प्लुत ऋवर्ण=ॠकार तथा ॠ३कार में पूर्ववर्ती एकमात्रा रेफ तथा परवर्ती भाग अकार का होता है। ॠकार में पूर्ववर्ती एकमात्रा रेफ तथा परवर्ती एकमात्रा आकार की होती है। ॠ३कार में पूर्ववर्ती एक मात्रा रेफ तथा परवर्ती दो मात्रा अकार की होती है। यहाँ **शंका** होती है कि अकार का उच्चारणकाल तो एक ही मात्रा होता है फिर यहाँ वह दो मात्राकाल वाला कैसे कहा गया है? **समाधान** यह है कि स्वरों का उच्चारण अधिक काल से भी होता है। इसलिए अकार का उच्चारण दो मात्रा में भी हो सकता है ॥ ३८ ॥

[ ऌवर्णस्य स्वरूपम् ]

## सलकारम् ऌवर्णम् ॥ ३९ ॥

**सू० अ०**– ऌवर्ण लकार से ( संश्लिष्ट होता है )।

**निर्मलभाष्यम्**

**ॡवर्णं सलकारं** लकारेण संश्लिष्टं भवति। ऋकारवद् ऌकारे पूर्वार्धमात्रिकः लकारःपरार्धमात्रिकः कण्ठ्योकारः। ॡकारे ॡ३कारे च पूर्वा एकमात्रा लकारः परा च अनुक्रमात् एकमात्रा द्विमात्रा च कण्ठ्यो अकारः भवति ॥ ३९ ॥

**शशिकला**

**ॡवर्ण** में लकार संश्लिष्ट होता है। ऋकार के समान ऌकार में पूर्ववर्ती अर्धमात्रिक रेफ तथा परवर्ती अर्धमात्रिक लकार होता है। ॡकार और ॡ३कार में पूर्ववर्ती एकमात्रा लकार तथा परवर्ती क्रमशः एक तथा दो मात्रा कण्ठ्य अकार होता है ॥ ३९ ॥

[ सन्ध्यक्षराणां स्वरूपम् ]

## सन्ध्यक्षराणि संस्पृष्टवर्णान्येकवर्णवद्वृत्तिः ॥ ४० ॥

**सू० अ०**—सन्ध्यक्षर ( स्वर ) संश्लिष्ट वर्ण हैं और उनका प्रयोग ( उच्चारण ) एकवर्ण के समान होता है।

### निर्मलभाष्यम्

अत्र सन्ध्यक्षराणां स्वरूपमुक्तम्। **संध्यक्षराणि** सन्ध्यक्षरस्वराः **संस्पृष्टवर्णानि** द्वाभ्यां समानाक्षरस्वरवर्णाभ्यां संश्लिष्टानि भवन्ति। तेषां सन्ध्यक्षराणाम् **एकवर्णवद् वृत्तिः** उच्चारणं भवति। स्वरवर्णा द्विधा—समानाक्षराणि सन्ध्यक्षराणि च। समानाक्षराणामुच्चारणं सर्वांशे समरूपेण भवति। एषामुच्चारणे एकरूपत्वं जायते। परञ्च सन्ध्यक्षराणामुच्चारणे न एवम्। सन्ध्यक्षराणि द्वयोः समानाक्षरयोः सन्धिना जायन्ते। यथोक्तं शौनकेन—

सन्ध्यानि सन्ध्यक्षराण्याहुरेके
द्विस्थानतैतेषु तथोभयेषु ॥ ( ऋ० प्रा० १३.३८ )

ए ऐ ओ औ इत्येतानि सन्ध्यक्षराणि। एते वर्णा द्वयोः समानाक्षरयोः सम्मेलनेन जायन्ते। एकारे ऐकारे पूर्वः कण्ठ्यः अकारः परे इवर्णश्च ओकारे औकारे च पूर्वः कण्ठ्यः परे उवर्णश्च संश्लिष्टः। द्विस्वरसंश्लेषेण जायमानेऽपि एकवर्णवद्वृत्तिः एकवर्णवद् उच्चारणं भवति। कथं सर्वेषां सन्ध्यक्षराणामेवमेव। नेत्युच्यते—'नैकारौकारयोः स्थानविधौ' ( १.१.४१ ) इति। ऐकारस्य औकारस्य च स्थानविषये एकवर्णवदुच्चारणं न भवति। एवं स्पष्टं यद् एकारस्य ओकारस्य च एकवर्णवत् समानाक्षरवदुच्चारणम् भवति।

ध्वनिवैज्ञानिकदृष्ट्या एकारे अकारेकारयोः ओकारे च अकारोकारयोः संश्लेषः। पूर्वकाले एवमेव एतयोरुच्चारणमपि आसीत्। परकाले दुग्धजलयोरिव एतयोः संश्लेषः संजातः येन एकवर्णवदुच्चारणं जातम्। अत एव प्रातिशाख्येषु अनयोरुच्चारणे एकस्यैव स्थानस्य उल्लेखं कृतम्। शौनकमते एकारस्योच्चारणं तालौ—'तालव्यविकारचकारवर्गाविकारैकारौ यकारः शकारः' ( ऋ० प्रा० १.४२ )। तैत्तिरीयप्रातिशाख्यानुसारमपि एकारस्योच्चारणं तालौ भवति—'तालौ जिह्वामध्यमिवर्णे' 'एकारे च' ( तै० प्रा० २.२२-२३ )। कात्यायनमतेऽपि एवमेव—'इचशेया तालौ' ( वा० प्रा०

१.६६ )। ओकारस्योच्चारणं ओष्ठे स्थाने भवति। यथोक्तम्—'शेष ओष्ठ्योऽपवाद्य नासिक्यान्' ( ऋ० प्रा० १.४७ )। परञ्च तैत्तिरीयप्रातिशाख्ये ओकारस्योच्चारणे अकारेण सहैव ओष्ठस्थानत्वमपि निर्दिष्टम्—'ओकारे च' 'ओष्ठौ च उपसंहृततरौ' ( तै० प्रा० २.१३-१४ )। कात्यायनेन ओकारस्य ओष्ठस्थानत्वमेवोक्तम्—'उवोऽपपा ओष्ठे' ( वा० प्रा० १.७० ) इति। एवम् एकारौकारौ समानाक्षरौ संश्लेषेण जायमानौ। एकारस्य ओकारस्य च एकवर्णवदुच्चारणं भवति॥ ४०॥

### शशिकला

यहाँ सन्ध्यक्षरों के स्वरूप को वतलाया गया है। सन्ध्यक्षर स्वर में दो स्वर ( समानाक्षर ) संश्लिष्ट होते हैं तथा उनका उच्चारण एकवर्ण के समान होता है। स्वरवर्ण दो प्रकार के होते हैं समानाक्षर तथा सन्ध्यक्षर। समानाक्षरों का उच्चारण सर्वांश में समान रूप से होता है। इनके उच्चारण में एकरूपता होती है। किन्तु सन्ध्यक्षरों के उच्चारण में ऐसा नहीं होता। सन्ध्यक्षर दो समानाक्षरों की सन्धि ( मेल ) से उत्पन्न होते हैं। जैसा शौनक ने कहा है—'कतिपय ( आचार्य ) सन्ध्यक्षरों को सन्धि से उत्पन्न कहते हैं। तदनुसार इनमें द्विस्थानता होती है प्रत्येक का उच्चारण दो-दो स्थानों से होता है' ( ऋ० प्रा० १३.३८ )।

ए, ऐ, ओ, तथा औ—ये चार सन्ध्यक्षर हैं। ये वर्ण दो समानाक्षरों के मेल से उत्पन्न होते हं। एकार तथा ऐकार में पूर्ववर्ती कण्ठ्य अकार तथा परवर्ती इवर्ण संश्लिष्ट होता है और ओकार तथा औकार में पूर्ववर्ती अकार तथा परवर्ती उवर्ण होता है। दो स्वरवर्णों के संश्लेष से उत्पन्न होने पर भी इनका उच्चारण एकवर्ण के समान होता है। क्या सभी सन्ध्यक्षरों का उच्चारण एकवर्ण के समान होता है ? इस विषय में कहते हैं—नहीं। ऐसा नहीं होता—'ऐकार तथा औकार के स्थान के विषय में एकवर्ण के समान नहीं होता' ( १.१.४१ )। इससे स्पष्ट है कि एकार तथा ओकार का ही एकवर्ण अर्थात् समानाक्षर के समान उच्चारण होता है।

ध्वनिविज्ञान की दृष्टि से एकार में अकार तथा इकार और ओकार में अकार तथा उकार का संश्लेष होता है। पूर्ववर्ती-काल में इनका उच्चारण भी इसी प्रकार से होता था। परवर्ती काल में दुग्ध और जल के समान इनमें स्वरों का संश्लेष हो गया, जिससे एकवर्ण के समान इनका

उच्चारण होने लगा। इसी कारण प्रातिशाख्य-ग्रन्थों में इनके उच्चारण में एक ही स्थान का उल्लेख किया गया है। शौनक के मत में एकार का उच्चारण तालु स्थान में होता है। तै० प्रा० तथा कात्यायन का भी यही मत है। शौनक के मत में ओकार का उच्चारण स्थान ओष्ठ है। किन्तु तै० प्रा० के अनुसार ओकार अकारके साथ ओ'ठ स्थान पर उच्चारित होता है। कात्यायन ने ओकार का स्थान केवल ओष्ठ बतलाया है।

इस प्रकार स्पष्ट है कि सन्ध्यक्षर ए तथा ओ दो स्वरों क्रमशः अ इ तथा अ उ के संश्लेष से निष्पन्न होते हैं और उनका उच्चारण एकवर्ण के समान है ॥ ४० ॥

## नैकारौकारयोः स्थानविधौ ॥ ४१ ॥

सू० अ०—ऐकार तथा औकार का (उच्चारण) स्थान के विषय में (एकवर्ण के समांन) नहीं (होता)।

### निर्मलभाष्यम्

सन्ध्यक्षराणामेकवर्णवद्वृत्तिरुक्तः। तच्चैकवर्णवदुच्चारणं **स्थानविधौ** स्थानविषये **ऐकारौकारयोः** ऐकारस्य औकारस्य नैव च भवति। ऐकारे पूर्वः कण्ठ्यः अकारः पर इवर्णः संश्लिष्टः। अत एवैतस्योच्चारणं स्थानद्वये कण्ठे तालौ च पृथग्रूपेण भवति। एवं चौकारे पूर्वः अकारः परः उवर्णश्च संश्लिष्टः। अत एव तस्योच्चारणं कण्ठे ओष्ठे च स्थानद्वये भवति। अत एव शौनकेनाप्युक्तं यद् ऐकारे पूर्वः अर्धभागः मात्राकालो अकारः परार्धभागः मात्राकालो इकारः, औकारे च पूर्वार्धभागः मात्राकालो अकारः परश्चार्धभागः मात्राकालो उकारः। अत एव एतौ द्वौ पूर्वसन्ध्यक्षरस्वरयोः पृथग्रूपेण श्रूयेते—

'सन्ध्येष्वकारोऽर्धमिकार उत्तरं
युजोरुकार इति शाकटायनः।'
'मात्रासंसर्गादवरे पृथक्श्रुतिः॥'
(ऋ० प्रा० १३.३९-४०)

कात्यायनस्यापीदमेव मतम्—'ऐकारौकारयोः कण्ठ्या पूर्वा मात्रा ताल्वोष्ठयोरुत्तरा' (वा० प्रा० १.७३)। तैत्तिरीयप्रातिशाख्यानुसारम् एकारे आदिपूर्वार्धमात्रा अकारस्य पराध्यर्धमात्रा इकारस्य भवति एवं

चौकारेऽपि आदौ पूर्वार्धमात्रा अकारस्य पराध्यर्धमात्रा उकारस्य भवति—"अकारार्धमैकारौकारयोरादिः' 'इकारोऽध्यर्धः पूर्वस्य शेषः' 'उकारस्तूत्तरस्य' ( तै० प्रा० २.२६. २८-२९ )।

ध्वनिवैज्ञानिकदृष्ट्या तैत्तिरीयप्रातिशाख्यमतमतिसमीचीनम्। ध्वनि-वैज्ञानिकानां मते ऐकारे अई औकारे च अऊ संश्लिष्टौ। द्विमात्रिके ऐकारे पूर्वस्य अकारस्य अर्धमात्रा परस्य ईकारस्य अध्यर्धमात्रा औकारे च पूर्वस्य अकारस्य अर्धमात्रा परस्य उकारस्य अध्यर्धमात्रा इत्येव समीचीनम्, न तु अर्धभागः। अनेनैव संश्लेषेण एकवर्णवद् उच्चारणं न भवति। उल्लेखनीय-मत्र यद् अधुना एतयोरपि उच्चारणं एकवर्णवदेव भवति॥ ४१॥

॥ इति श्रीमत्पण्डितदशरथपाठकसूनुना डा० जमुनापाठकेन कृते निर्मलभाष्ये चतुरध्यायिकायाः प्रथमाध्यायस्य प्रथमः पादः॥ १॥

## शशिकला

सन्ध्यक्षरों का एकवर्ण के समान उच्चारण बतलाया गया है। किन्तु ऐकार तथा औकार का स्थान के विषय में एकवर्ण के समान उच्चा-रण नहीं होता। ऐकार में पूर्ववर्तीभाग अकार तथा परवर्ती भाग इवर्ण होता है। अतः इसका उच्चारण कण्ठ तथा तालु—इन दो स्थानों से होता है। औकार में पूर्ववर्ती भाग अकार तथा परवर्ती भाग ऊवर्ण होता है अतः इसका उच्चारण कण्ठ तथा ओष्ठ—इन दो स्थानों से होता है। शौनक ने कहा भी है—ऐकार में पूर्ववर्ती आधा भाग अकार तथा परवर्ती आधा भाग इकार होता है तथा औकार में पूर्ववर्ती आधा भाग अकार तथा परवर्ती आधा भाग उकार होता है। इसीलिए ये दोनों अपने पूर्ववर्ती सन्ध्यक्षरों से पृथक् श्रुतिगोचर होते हैं। तैत्तिरीयप्रातिशाख्य में पूर्ववर्ती तथा परवर्ती संश्लिष्ट स्वरों की मात्रा के विषय में शौनक के मत से भिन्न विधान हुआ है। इसके अनुसार ऐकार में पूर्ववर्ती अकार की आधी मात्रा तथा परवर्ती इकार डेढ़ ( १॥ ) मात्रा तथा औकार में भी पूर्ववर्ती अकार की आधी मात्रा तथा परवर्ती उकार की डेढ़ ( १॥ ) मात्रा होती है।

ध्वनिवैज्ञानिक दृष्टि से तै० प्रा० का मत अधिक समीचीन है। ध्वनिवैज्ञानिकों के अनुसार ऐकार में अकार तथा ईकार का और औकार में अकार तथा ऊकार का संश्लेष होता है। इस प्रकार दो मात्रिक एकार में आधी मात्रा पूर्ववर्ती ह्रस्व अकार तथा डेढ़ (१।।) मात्रा परवर्ती दीर्घ ईकार और औकार में आधी मात्रा पूर्ववर्ती ह्रस्व अकार तथा डेढ़ (१।।) मात्रा परवर्ती ऊकार की होती है यह कथन अधिक युक्तिसंगत है, न कि दोनों भाग का आधा-आधा होना। इसी संश्लेष के कारण इनका एकवर्ण के समान उच्चारण नहीं होता। यहाँ उल्लेखनीय है कि सम्प्रति इन दोनों का भी उच्चारण एकवर्ण के समान ही होता है।। ४१ ।।

।। चतुरध्यायिका के प्रथम अध्याय के प्रथमपाद की डा० जमुनापाठक-कृत 'शशिकला' व्याख्या समाप्त ।। १ ।।

# अथ द्वितीयः पादः

[ अभिनिष्ठानसंज्ञा-विधानम् ]

## विसर्जनीयोऽभिनिष्ठानः ॥ १ ॥

सू० अ०—विसर्जनीय अभिनिष्ठान ( कहलाता है )।

### निर्मलभाष्यम्

अभिनिष्ठानसंज्ञा विहितात्र। **विसर्जनीयो अभिनिष्ठानः** अभिनिष्ठानसंज्ञो भवति। यथा—'वः' ( सं० १.५.२ ) 'याः' ( सं० १.६.४ ) 'अग्निः' ( सं० १.७.४ ) 'वृक्षः' ( सं० ४.७.५ ) इत्यादयः। **ननु** प्रयोजनवती संज्ञा विहिता। अस्याः संज्ञाया प्रयोजनं नास्ति किमर्थं सूत्रकारेण संज्ञा एषा विहिता। **उच्यते**—यासां संज्ञानां शास्त्रे प्रयोगो नोपलभ्यते ताः संज्ञाः शिष्यसंव्यवहाराय पूर्वाचार्येण कृता इति बोधव्याः। शिष्या आभिः संव्यवहरेयुरिति। अथ वा अत्र पूर्वाचार्याणामनुकथनं मङ्गलार्थं पूर्वाचार्यशास्त्रकीर्तिरक्षणार्थं वा। यद्वा यथा एते वर्णाः नित्या एवमेव संज्ञा अपि नित्या एव। अत्र तु संज्ञायाः प्रयोजनमेव --'स्वरपरा अभिनिष्ठानपरा व्यञ्जनपराः ( १.४.१७ ) इति ॥ १ ॥

### शशिकला

यहाँ अभिनिष्ठान संज्ञा का विधान किया गया है। विसर्जनीय अभिनिष्ठान संज्ञक होता है। जैसे—'वाः' 'याः' 'अग्निः' 'वृक्षः' इत्यादि। यहाँ शङ्का होती है कि संज्ञा का विधान प्रयोजन के लिए होता है। यहाँ सूत्रकार ने प्रयोजन न होने पर भी इस संज्ञा का विधान निरर्थक ही क्यों किया है ? समाधान यह है कि जिन संज्ञाओं का प्रयोग शास्त्र में नहीं प्राप्त होता, उसका विधान पूर्ववर्ती आचार्यों द्वारा की गई संज्ञाओं के ज्ञान के लिए होता है जिससे शिष्यगण उनको व्यवहार में लाएँ। अथवा पूर्ववर्ती आचार्यों द्वारा कथन की गई संज्ञाएँ मङ्गलार्थक होती हैं अथवा पूर्ववर्ती आचार्यों द्वारा विरचित शास्त्र के यश की सुरक्षा-हेतु उनका विधान होता

है। अथवा जिस प्रकार ये वर्ण नित्य हैं, उसी प्रकार ये संज्ञाएँ भी नित्य हैं अतः उनका विधान किया गया है। यहाँ तो अभिनिष्ठान संज्ञा का प्रयोजन है ही 'स्वरपर, अभिनिष्ठानपर तथा व्यञ्जनपर प्लुत होते हैं' ॥ १॥

[ अभिनिधानसंज्ञा-विधानम् ]

**व्यञ्जनविधारणमभिनिधानः पीडितः सन्नतरो हीनश्वासनादः ॥ २ ॥**

**सू० अ०**—( संयोग में ) व्यञ्जन का अवरोध ( विधारण ) अभिनिधान ( कहलाता है )। (वह अभिनिधान) दबा हुआ ( पीडित ) दुर्बलतर ( सन्नतर ) तथा अल्प श्वास-नाद वाला ( होता है )।

## निर्मलभाष्यम्

अभिनिधानसंज्ञा विहिताऽत्र। संयोगे **व्यञ्जनविधारणं** व्यञ्जनस्य विधारणम् अवरोधो अभिनिधान उच्यते। स अभिनिधानः **पीडितः** पीडनयुक्तः पीडनेनोच्चारितः इत्यर्थः, **सन्नतरः** दुर्बलतरः, **हीनश्वासनादः** हीनो अल्पः श्वासः नादः यत्र तादृशश्च भवति। अभिनिधानः संयोगे भवति। संयोगे संयुक्तव्यञ्जानामुच्चारणं कालाव्यवहितेन भवति। येन पूर्वव्यञ्जनस्य पूर्णोच्चारणं न जायते। यतो हि प्रथमव्यञ्जनस्योच्चारणार्थं यदा स्थाने करणेन स्पर्शं जायते तदनन्तरमेव परव्यञ्जनस्याप्युच्चारणार्थं स्थाने करणेन स्पर्शं भवति, अत एव स्थानकरणविमोक्षाभावात् प्रथमव्यञ्जनस्य पूर्णोच्चारणार्थं प्रयासो एव क्रियते। तत्र प्रथमव्यञ्जनस्य परेण व्यञ्जनेन सावरोधं पृथगुच्चारणं कर्त्तव्यम्। पृथगुच्चारणेन संयोगो विच्छिन्नो जायते। अतएव शौनकेन अभिनिधानस्य कृते विच्छेदसंज्ञाऽपि प्रयुक्ता-'विच्छेदात् स्पर्शोष्मपराच्च घोषिणः' (ऋ० प्रा० ६.४५)। तत्र प्रथमव्यञ्जनोच्चारणानन्तरं कालस्य व्यवधानो जायते। व्यवधानेऽपि पीडनयुक्तः दुर्बलतरः अल्पश्वासनादयुक्तः च ध्वनिः जायते। यः पीडनत्वेन हीनश्वासनादत्वेन चास्पष्टं भवति। सः एवावरोधकाले पीडनादिगुणयुक्तः अस्पष्टः ध्वनि अभिनिधानसंज्ञया ख्यापितः।

ननु श्वासनामकवायुद्रव्यस्य कृते स्वरतन्त्रीषु विवारबाह्यप्रयत्नः तथा च नादनामकवायुद्रव्यस्य कृते संवारबाह्यप्रयत्नः क्रियते। अभिनिधाने कथं श्वासनादयोः अल्पत्वं सहैव जायते। द्वयोः प्रयत्नयोः सहैव कर्त्तव्या-

भावात् । उच्यते—यस्य वर्णस्य अभिनिधानः भवति सः श्वासेन जायमानः नादेन वा । यदि अभिनिधीयमानो वर्णो अघोषः तर्हि तस्याभिनिधाने श्वासस्याल्पत्वं, घोषः चेत् तस्याभिनिधाने नादस्याल्पत्वमिति ।

अभिनिधानः संयोगे पूर्वव्यञ्जनस्योच्चारणवैशिष्ट्यम् । व्यञ्जनानामुच्चारणे स्वरयन्त्रे स्वरतन्त्रीभिः विकृतः वायुः मुखं प्राप्य तत्र स्थाने करणस्य स्पर्शेनावरुद्धो भवति । अवरोधानन्तरं स्थानात् करणस्य विमोक्षेण मुखाद् वायोः निस्सरणकाले व्यञ्जनं पूर्णरूपेण श्रुतिगोचरं जायते । परञ्च संयोगे एवं न । प्रथमव्यञ्जनस्यावरोधकाले एव परवर्तिव्यञ्जनस्योच्चारणार्थं स्थाने करणेन स्पर्शं भवति येन प्रथमव्यञ्जनं पूर्णश्रुतिगोचरं न जायते स्थानकरणविमोक्षाभावात् । अत एव तत्र पूर्वव्यञ्जनस्य पूर्णोच्चारणार्थम् अभिनिधानं क्रियते । संज्ञायाः प्रयोजनम्—'स्पर्शस्य स्पर्शेऽभिनिधानः' (१ २.३ ) इत्यादि ॥ २ ॥

**शशिकला**

यहाँ अभिनिधान संज्ञा का विधान किया गया है । संयोग में व्यञ्जन का अवरोध अभिनिधान कहलाता है । वह अभिनिधान दबा हुआ, दुर्बलतर तथा अल्प श्वास-नाद वाला होता है । अभिनिधान संयोग में होता है । संयोग में संयुक्तव्यञ्जनों का उच्चारण अव्यवहित-काल वाला होता है[1] जिससे संयोग के प्रथम व्यञ्जन का पूर्ण उच्चारण नहीं हो पाता क्योंकि पूर्वव्यञ्जन के उच्चारण के लिए जब स्थान पर करण से स्पर्श होता है, तदनन्तर ही परवर्ती व्यञ्जन के उच्चारण के लिए स्थान पर करण से स्पर्श हो जाता है । अत एव स्थान से करण का पृथक्करण न होने से पूर्ववर्ती व्यञ्जन का पूर्ण उच्चारण सम्भव नहीं हो पाता । अभिनिधान द्वारा प्रथम व्यञ्जन के पूर्ण उच्चारण के लिए प्रयास किया जाता है । अत एव वहाँ पूर्ववर्ती व्यञ्जन का परवर्ती व्यञ्जन से अवरोध द्वारा पृथक् उच्चारण करना चाहिए । इस पृथक् उच्चारण से संयोग विच्छिन्न हो जाता है । इसीलिए शौनक ने अभिनिधान के लिए 'विच्छेद' संज्ञा का भी प्रयोग किया

---

१. संयोग में पूर्ववर्ती व्यञ्जन के बाद ही परवर्ती व्यञ्जन का उच्चारण होता है । उन दोनों में उच्चारण-काल का व्यवधान नहीं होता । उच्चारण-काल का व्यवधान होने पर संहिता बाधित हो जाती है । अतः उच्चारण-काल के व्यवधान के बिना ही पूर्ववर्ती तथा परवर्ती व्यञ्जनों का उच्चारण होता है ।

है। अभिनिधान में प्रथम व्यञ्जन के उच्चारण के बाद काल का व्यवधान हो जाता है। उस व्यवधान के समय भी दबी हुई, दुर्बलतर तथा अल्प श्वासनाद वाली ध्वनि होती है। वह ध्वनि दबी हुई, दुर्बलतर तथा अल्प श्वास-नाद वाली होने के कारण अस्पष्ट होती है। वही अवरुद्ध, दबी हुई, दुर्बलतर तथा अल्पश्वासनाद गुण वाली ध्वनि अभिनिधान संज्ञा से अभिहित की जाती है।

यहाँ **शंका** होती है कि श्वास' नामक वायुद्रव्य के लिए स्वरतन्त्रियों में 'विवार' तथा 'नाद' नामक वायुद्रव्य के लिए 'संवार' नामक बाह्यप्रयत्न किया जाता है। अभिनिधान में 'श्वास' तथा 'नाद' का अल्पत्व कैसे एक साथ ही होता है क्योंकि इन दोनों बाह्यप्रयत्नों को एक साथ नहीं किया जा सकता। **समाधान** यह है कि जिस वर्ण का अभिनिधान होता है, वह या तो 'श्वास' नामक वायुद्रव्य से उत्पन्न होता है या 'नाद' नामक वायु-द्रव्य से। यदि वह वर्ण 'अघोष' है तो उसका अभिनिधान होने पर 'श्वास' की अल्पता होती है और वह यदि 'सघोष' है तो उसका अभिनिधान होने पर 'नाद' की अल्पता होती है।

अभिनिधान संयोग में पूर्ववर्ती व्यञ्जन का उच्चारण-वैशिष्टय है। व्यञ्जनवर्णों के उच्चारण में स्वरयन्त्र में स्वरतन्त्रियों द्वारा विकृत वायुद्रव्य मुखविवर में आता है और वहाँ स्थान पर करण के स्पर्श द्वारा अवरुद्ध होता है। अवरोध के पश्चात् स्थान से करण के अलग होने पर मुख से वायु के निकलने के समय व्यञ्जनवर्ण पूर्णरूप से श्रुतिगोचर होता है। परन्तु संयोग में ऐसा नहीं होता पूर्ववर्ती व्यञ्जन के उच्चारण में हुए वायु के अवरोध के समय ही परवर्ती व्यञ्जन के उच्चारण के लिए स्थान पर करण से स्पर्श हो जाता है जिससे स्थान से करण का अलगाव न होने से पूर्ववर्ती व्यञ्जन पूर्णतः श्रुतिगोचर नहीं होता। इसीलिए वहाँ ( संयोग में ) पूर्ववर्ती व्यञ्जन के पूर्ण उच्चारण के लिए अभिनिधान किया जाता है। अभिनिधान संज्ञा का प्रयोजन—'स्पर्श बाद में होने पर स्पर्श का अभिनिधान' ( होता है ) ( १.२.३ ) इत्यादि ॥ २ ॥

[ अभिनिधानस्थल-निर्देशम् ]

## स्पर्शस्य स्पर्शेऽभिनिधानः ॥ ३ ॥

**सू० अ०**—स्पर्श बाद में होने पर स्पर्श का अभिनिधान ( होता है )।

## निर्मलभाष्यम्

**स्पर्शे** परे सति **स्पर्शस्य अभिनिधानः** भवति। उल्लेखनीयमत्र यद्वर्ग-विपर्यये स्पर्शसंयोगे पूर्वेण स्फोटनः भवति। यथोक्तं सूत्रकारेण—'वर्गविपर्यये स्फोटनः पूर्वेण चेद्विरामः' ( २.१.३८ )। अत एवात्र वर्गक्रमेण संयोगे एव अभिनिधानः। अपरञ्च पञ्चमे स्पर्शे परे सति अपञ्चमात्स्पर्शात् यमस्यागम भवति, न तु अभिनिधानः। इत्येवं स्पष्टं यद् वर्गक्रमेण संयोगेषु अपञ्चमे स्पर्शे परे स्पर्शस्य अभिनिधानः भवति। यथा—'मरुद्भिः' ( सं० २.२९.४ ) पक्तौदनस्य ( सं० ११.१.१७ ) इत्यादयः ॥ ३ ॥

## शशिकला

स्पर्श बाद में होने पर स्पर्श का अभिनिधान होता है। यहाँ यह ध्यातव्य है कि वर्गविपर्यय क्रम से स्पर्श वर्णों का संयोग होने पर पूर्ववर्ती स्पर्श से स्फोटन होता है। जैसा सूत्रकार ने कहा है—'वर्गविपर्यय वाले ( संयोग ) में पूर्ववर्ती ( स्पर्श ) से स्फोटन होता है' ( २.१.३८ )। अत एव यहाँ वर्गक्रम से संयोग होने पर ही अभिनिधान होता है। पञ्चम स्पर्श बाद में होने पर अपञ्चम स्पर्श से बाद में यम का आगम होता है. अभि-निधान नहीं। इससे स्पष्ट है कि वर्गक्रम से संयोग में अपञ्चम स्पर्श बाद में होने पर स्पर्श का अभिनिधान होता है। जैसे—'मरुद्भिः'[1] 'पक्तौदनस्य'[2] इत्यादि ॥ ३ ॥

## पदान्तावग्रहयोश्च ॥ ४ ॥

**सू० अ०**—पदान्त तथा अवग्रह में ( विद्यमान स्पर्श का ) भी ( अभिनिधान होता है )।

## निर्मलभाष्यम्

**चशब्दः** 'स्पर्शस्य' इत्यन्वादिशति। **पदान्तावग्रहयोः** पदान्ते विद्यमानस्य अवग्रहे च सावग्रहपदस्य पूर्वपदान्ते विद्यमानस्य स्पर्शस्य अभि-निधानः भवति। पदान्ते यथा—'गोधुक्' ( सं० ७.७३ ६ ) 'विराट्' ( सं० ८.९.८ ) 'दृशत्' ( सं० २.३१.१ ) 'त्रिष्टुप्' ( सं० ८.९.२० ) इत्यादिषु

---

१. मरुत्–भिः ( प० पा० )

२. पक्त–ओदनस्य ( प० पा० )

पदान्तीयस्य स्पर्शस्याभिनिधानः। अवग्रहे यथा—'मधुमत्तरः' ( सं० १ ३४.४ ) 'भगवत्तमः' ( सं० २ ९.२ ) इत्यादिषु अवग्रहान्तस्य स्पर्शस्याभिनिधानः ॥ ४ ॥

### शशिकला

सूत्र में प्रयुक्त च शब्द पूर्ववर्ती सूत्र से 'स्पर्श का' इसका अन्वादेश करता है। पद के अन्त में विद्यमान तथा सावग्रहपद के पूर्वपद ( अवग्रह ) के अन्त में विद्यमान स्पर्श का अभिनिधान होता है। पदान्त में जैसे—'गोधुक्'[१] 'विराट्'[२] 'दृशत्'[३] 'त्रिष्टुप्'[४] इत्यादि में पदान्त स्पर्श का अभिनिधान होता है। अवग्रह के अन्त में विद्यमान जैसे—'मधुमत्तरः'[५] 'भगवत्तमः'[६] इत्यादि में अवग्रह के अन्त में विद्यमान स्पर्श का अभिनिधान होता है ॥ ४ ॥

## लकारस्योष्मसु ॥ ५ ॥

सू० अ० – ऊष्म ( वर्ण ) बाद में होने पर लकार का ( अभिनिधान होता है )।

### निर्मलभाष्यम्

**ऊष्मसु** ऊष्मवर्णेषु शषसहेषु परेषु **लकारस्य** अभिनिधानः भवति। यथा –'शतवल्शा विरोह' ( सं० ६.३०.२ ) 'स गमिष्यति बल्हिकान्' ( सं० ५.२२.९ ) 'विहल्हो नाम' ( सं० ६ १६.२ ) इत्यत्र ऊष्मसु परेषु लकारस्याभिनिधानः।

शौनकेन ऊष्मसु परेषु लकारस्याभिनिधानविषये शाकलस्य मतमुद्धृतम् —'लकारः ऊष्मस्वपि शाकलेन' ( ऋ० प्रा० ६.२० )। परञ्च शौनकमते तु स्पर्शे एव रेफव्यतिरिक्तस्यान्तःस्थवर्णस्याभिनिधानः—'अभिनिधानं

---

१. गो–धुक् ( प० पा० )
२. वि–राट् ( प० पा० )
३. दृशत् ( प० पा० )
४. त्रिः–स्तुप् ( प० पा० )
५. मधुमत्–तरः ( प० पा० )
६. भगवत्–तमः ( प० पा० )

कृतसंहितानां स्पर्शान्तःस्थानामपवाद्य रेफं स्पर्शोदयानाम्' ( ऋ० प्रा० ६.१७ )। अस्य मते व्यञ्जने परे रेफात् स्वरभक्तिः—'रेफात् स्वरोपहिताद् व्यञ्जनोदयादृकारवर्णास्वरभक्तिरुत्तरा' (ऋ० प्रा० ६.४६) । स्पर्शेषु ऊष्मसु वा परेषु घोषवर्णस्याभिनिधानादपि स्वरभक्तिः भवति—'विच्छेदात्स्पर्शोष्म-पराच्च घोषिणः' ( ऋ० प्रा० ६.४७ )। एवं घोषवर्णस्य लकारस्य च ऊष्मपरेषु अभिनिधानादपि स्वरभक्तिविधानम् । अत्र भाष्यकारेणोवटेन 'शतवल्शः' इत्युदाहरणमपि प्रस्तुतम् । एवं स्पष्टं यत् शौनकस्य मते ऊष्मसु परेषु लकारस्य अभिनिधानानन्तरं स्वरभक्तिः जायते । कात्यायनानुसारमपि ऊष्मसु परेषु लकाराद् ऌकारसदृशी स्वरभक्तिः भवति – 'रलावृऌवर्णाभ्या-मूष्मणि स्वरोदये सर्वत्र' ( वा० प्रा० ४.१७ ) ।

परञ्च सूत्रकारेण ऊष्मसु परेषु लकारस्याभिनिधानः विहितः, न तु स्वरभक्तिः । यतो हि अथर्वचरणस्य संहितासु अभिनिधानः एव उच्चारितः भवति ।। ५ ।।

### शशिकला

ऊष्मवर्ण ( शकार, षकार. सकार तथा हकार ) बाद में होने पर लकार का अभिनिधान होता है । जैसे शतवल्शा विरोह' 'स गमिष्यति बल्हिकान्' 'विहल्हो' । यहाँ ऊष्मवर्ण बाद में होने पर लकार का अभि-निधान होता है ।

शौनक ने ऊष्म वर्ण बाद में होने पर लकार के अभिनिधान के विषय में शाकल का मत उद्धृत किया है—'ऊष्म वर्ण बाद में होने पर शाकल के अनुसार लकार (का अभिनिधान होता है)' (ऋ० प्रा० ६.२०) । किन्तु शौनक के मत में स्पर्श बाद में होने पर रेफ से अन्य अन्तःस्थ वर्णों का अभिनिधान होता है ( ऋ० प्रा० ६.१७ )। इनके मत में व्यञ्जन बाद में होने पर रेफ से परे स्वरभक्ति होती है ( ऋ० प्रा० ६.४६ )। स्पर्श अथवा ऊष्म बाद में होने पर सघोष-वर्णों के अभिनिधान के बाद स्वरभक्ति होती है ( ऋ० प्रा० ६.४७ )। इस प्रकार सघोष वर्ण तथा लकार का ऊष्मवर्ण बाद में होने पर अभिनिधान के पश्चात् स्वरभक्ति का विधान हुआ है। यहाँ भाष्यकार उवट ने 'शतवल्शः' यह उदाहरण भी प्रस्तुत किया है। कात्यायन के मतानुसार ऊष्मवर्ण बाद में होने पर लकार से बाद में ऌकार-सदृश स्वरभक्ति होती है ( वा० प्रा० ४.१७ ) ।

किन्तु सूत्रकार ने ऊष्मवर्ण बाद में होने पर लकार के अभिनिधान का विधान किया है, स्वरभक्ति का नहीं। क्योंकि अथर्वचरण की संहिताओं में अभिनिधान ही उच्चारित होता है ॥ ५ ॥

## ङणनानां हकारे ॥ ६ ॥

सू० अ० हकार बाद में होने पर ङकार, णकार तथा नकार का ( अभिनिधान होता है )।

### निर्मलभाष्यम्

**हकारे** परे **ङणनानां** ङकारस्य णकारस्य नकारस्य च अभिनिधानः भवति। यथा 'प्रत्यङ् हि' (सं० ४.१९७) 'क्रिमीन् हन्तु' ( सं० २.३२.१ ) 'अमून् हेतिः' ( सं० ६.२९.१ )। णकारस्य निदर्शनम् अथर्ववेदस्य विद्यमान-संहितायां न दृश्यते।

### शशिकला

हकार बाद में होने पर ङकार, णकार तथा नकार का अभिनिधान होता है। जैसे—'प्रत्यङ् हि' 'क्रिमीन् हन्तु' 'अमून् हेतिः'। णकार का उदाहरण अथर्ववेद की विद्यमान संहिता में उपलब्ध नहीं होता ॥ ६ ॥

[ आस्थापितसंज्ञाविधानम् ]

## आस्थापितश्च ॥ ७ ॥

सू० अ० —( अभिनिधान ) आस्थापित भी ( कहलाता है )।

### निर्मलभाष्यम्

अभिनिधानः **आस्थापितसंज्ञः** भवति। आस्थापितसंज्ञायाः कथनं पूर्वाचार्याणां शास्त्ररक्षणार्थम्। तान्प्रति समादरार्थं वा येन संज्ञा एषा अलुप्ता स्यात् अथवा 'आ' सामीप्यार्थे, स्थापितं निहितम्। अभिनिधान-प्राप्तवर्णः परस्य वर्णस्य समीपे स्थापितः भवति। न तु संयुक्तमुच्चारणम्। अत एव संज्ञेयं विहिता। अथवा 'स्पर्शस्य स्पर्शेऽभिनिधानः' ( १. २ ३. ) इत्यादिना अभिनिधानस्य स्थलं आस्थापितं निरूपितं च ॥७॥

### शशिकला

अभिनिधान आस्थापित-संज्ञक भी होता है। यहाँ आस्थापित-संज्ञा का कथन पूर्ववर्ती आचार्यों के शास्त्र की रक्षा के लिए किया गया है।

अथवा आस्थापित-संज्ञा का विधान करने वाले उन पूर्ववर्ती आचार्यों के प्रति सम्मान प्रकट करने के लिए इसका कथन किया गया है, जिससे शिष्यगणों में इस संज्ञा का लोप न जाए। अथवा 'आ' यह समीपता के अर्थ में प्रयुक्त हुआ है। अभिनिधान को प्राप्त हुए वर्ण को बाद वाले वर्ण के समीप में रख दिया जाता है—उसका परवर्ती वर्ण के साथ संयुक्त उच्चारण नहीं होता। इसलिए इस संज्ञा का विधान किया गया है। अथवा 'स्पर्श बाद में होने पर स्पर्श का अभिनिधान होता है' ( १. २. ३. ) इत्यादि द्वारा अभिनिधान के स्थल को आस्थापित ( निरूपित ) किया गया है ॥ ७ ॥

[ संयोगस्थलम् ]

## अतोऽन्यत्संयुक्तम् ॥ ८ ॥

सू० अ०—इस ( अभिनिधान ) से अन्यत्र संयोग ( होता है )।

### निर्मलभाष्यम्

'व्यञ्जनान्यव्यवेतानि स्वरैः संयोगः' ( १.४.७ ) इत्यनेन संयोगः उक्तः। अभिनिधानेन संयोगविघातः जायते येन तत्र द्विरुच्चारणादीनि कार्याणि न भवन्ति। अत एव सूत्रकारेण विहितं यद् **अतः** अभिधानाद् **अन्यत्** अन्यत्र स्वरैः अव्यवहितानि व्यञ्जानानि **संयुक्तम्** भवन्ति। तत्र संयोग भवति इत्यर्थः। यथा 'त्रिष्टुप्' ( ८.९ २० ) इत्यत्र षकारटकारयोः संयोगः। 'रक्षति' ( सं० ८.९.१३ ) 'तक्षति' ( सं० ९.१०.२१ ) इत्यत्र ककारषकारयोः संयोगः। इत्यादयः ॥ ८ ॥

### शशिकला

'स्वर से अव्यवहित व्यञ्जन संयोग ( कहलाता है )' ( १.४.७ ) इसके द्वारा संयोग को बतलाया गया है। अभिनिधान से संयोग का विनाश हो जाता है जिससे वहाँ द्वित्व इत्यादि विषयक कार्य नहीं होते। इसलिए सूत्रकार ने विधान किया है कि इस अभिनिधान से अन्य स्थलों में स्वर से अव्यवहित व्यञ्जन संयुक्त होते हैं। वहाँ उनका संयोग होता है। जैसे—'त्रिष्टुप्' यहाँ षकार और टकार का संयोग है। 'रक्षति' 'तक्षति' इन दोनों में ककार और षकार का संयोग है। इत्यादि ॥ ८ ॥

[ संयुक्तव्यञ्जनानामुच्चारणविधानम् ]

## पूर्वरूपस्य मात्रार्धं समानकरणं परम् ॥ ९ ॥

**सू० अ०**—( संयुक्त व्यञ्जनों में पूर्ववर्ती व्यञ्जनों का ) परवर्ती आधा भाग ( परवर्ती व्यञ्जन के ) पूर्वभाग के समान ( उच्चारण स्थान तथा ) करण वाला ( होता है )।

### निर्मलभाष्यम्

संयोगे पूर्वव्यञ्जनस्य **परं मात्रार्धं** परार्धभागः परवर्तिनः व्यञ्जनस्य **पूर्वरूपस्य** पूर्वभागस्य **समानकरणं** मुखस्थं समानसचलावयवं भवति। व्यञ्जनानां संयोगे पूर्वव्यञ्जनस्य परार्धभागः परव्यञ्जनस्य स्थानकरणाभ्यामुच्चार्यमाणः भवतीत्यर्थः। अत्र व्यञ्जनानां उच्चारणकालः एकमात्रा उक्तः—'व्यञ्जनानि च' ( १.२१९ )। एवं पूर्वव्यञ्जनस्य पूर्वार्द्धभागः अर्द्धमात्रिकः स्वस्य स्थानकरणाभ्याम्, परार्धभागः परस्य व्यञ्जनस्य स्थानकरणाभ्याञ्च उच्चारित. भवति। यथा—'तक्षति' ( सं० ९.१०.२१ ) इत्यत्र ककारषकारयोः संयोगः। संयोगेऽस्मिन् ककारस्य पूर्वार्धभागस्तु जिह्वामूले हनुमूलस्य स्पर्शेन परश्च परार्धभागः षकारस्योच्चारणस्थाने मूर्ध्नि तस्यैव करणेन द्रोणिकाकारेण जिह्वाग्रेन उच्चारितः भवति। एवमेव अन्यस्मिन्नपि संयोगे बोधव्यम्।

वस्तुतस्तु संयोगे पूर्वव्यञ्जनस्य उच्चारणार्थं स्थानकरणयोः स्पर्शानन्तरमेव स्थानकरणे परव्यञ्जनस्योच्चारणाय सज्जीभवतः। यावदेव स्थानकरणयोः विमोक्षः तावदेव परव्यञ्जनोच्चारणार्थं तयोः स्पर्शश्च। अत एव पूर्वव्यञ्जनस्य पूर्वार्धभागः एव श्रुतिगोचरः। परार्धभागस्य श्रुतिगोचरकाले परव्यञ्जनार्थं स्थानकरणयोः स्पर्शम्। एवम् पूर्वव्यञ्जनस्य परभागः परव्यञ्जनस्य स्थानकरणाभ्यां प्रभावितः सन् श्रुतिगोचरः भवति॥ ९॥

### शशिकला

संयोग में पूर्ववर्ती व्यञ्जन का परार्धभाग परवर्ती व्यञ्जन के पूर्वभाग के समान मुखस्थ सचलावयव ( करण ) वाला होता है। तात्पर्य यह है कि व्यञ्जनों के संयोग में पूर्ववर्ती व्यञ्जन का परार्धभाग परवर्ती व्यञ्जन के पूर्वार्धभाग के स्थान तथा करण से उच्चारित होता है। सूत्रकार ने

व्यञ्जनों का उच्चारणकाल एकमात्रा बतलाया है 'व्यञ्जन भी ( एक-मात्रा काल वाले होते हैं )' ( १ २,१९ )। इस प्रकार संयोग में पूर्ववर्ती व्यञ्जन की आधी मात्रा अपने उच्चारण स्थान तथा करण से उच्चारित होती है और परवर्ती आधी मात्रा अपने बाद वाले व्यञ्जन के स्थान तथा करण से। जैसे-'तक्षति'='तक्षति' यहाँ ककार तथा षकार संयुक्त हैं। अतः ककार की पूर्वार्ध मात्रा तो जिह्वामूल पर हनुमूल द्वारा स्पर्श करने से उच्चारित होती है किन्तु परार्धमात्रा परवर्ती षकार के पूर्वार्ध भाग के समान मूर्धा पर द्रोणिका ( दोने के आकार वाली ) जिह्वा के अग्रभाग से उच्चारित होती है। इसी प्रकार अन्य भी संयुक्तस्थलों पर समझ लेना चाहिए।

वस्तुतः संयोग में संयुक्त प्रथम व्यञ्जन के उच्चारण के लिए स्थान पर करण द्वारा स्पर्श के बाद ही परवर्ती व्यञ्जन के उच्चारणार्थ स्थान तथा करण तैयार हो जाते हैं। जब पूर्ववर्ती वर्ण के उच्चारण के लिए स्थान तथा करण का विमोक्ष ( अलगाव ) होता है तभी परवर्ती व्यञ्जन के उच्चारण के लिए पुनः स्थान पर करण द्वारा स्पर्श हो जाता है। इस-लिए पूर्ववर्ती व्यञ्जन का पूर्वार्ध भाग ही सुनाई पड़ता है। परार्ध भाग के श्रुतिगोचर होने से पूर्व ही परवर्ती व्यञ्जन के उच्चारणार्थ स्थान-करण का स्पर्श हो जाता है। इस प्रकार पूर्ववर्ती व्यञ्जन का परार्धभाग परवर्ती व्यञ्जन के उच्चारण स्थान तथा करण से प्रभाविन होकर श्रुतिगोचर होता है ॥ ९ ॥

[ लघुसंज्ञाविधानम् ]

## ह्रस्वं लघ्वसंयोगे ॥ १० ॥

सू० अ०—संयोग ( संयुक्त-व्यञ्जन ) बाद में न होने पर ह्रस्व ( अक्षर ) 'लघु' ( कहलाता है )।

### निर्मलभाष्यम्

लघुसंज्ञात्र विहिता। ह्रस्वमेकमात्राकाले उच्चारितमक्षरम्। स्वरै-रव्यवहितानि व्यञ्जनानि संयोगः। यथोक्तम्—'व्यञ्जनान्यव्यवेतानि स्वरैः संयोगः' ( १.४.७ )। **असंयोगे** असंयुक्तव्यञ्जने परे **ह्रस्वं** ह्रस्वाक्षरं **लघु** लघुसंज्ञः भवति। यथा—'दधिवान्' ( सं० १८.४.१७ ), 'मधु' ( सं०

१:३४.२ ) इत्यादयः। इत्यत्र असंयोगपूर्वविद्यमानं ह्रस्वाक्षरं लघुः। असंयोगे इति किम् ? संयोगपरे ह्रस्वं लघु न भवति। यथा 'तक्षति' ( सं० ९.१०. २१ ) 'रक्षति' ( सं० ८.९.१३ ) इत्यत्र ककारषकारयोः संयोगः। अतएव पूर्वो अकारः लघु न भवति। ननु प्रयोजनवती संज्ञा विहिता। अत्र लघु-संज्ञायाः प्रयोगस्तु नास्ति पुनः किन्निमित्तं एतद्विधानम्। उच्यते-या संज्ञा शास्त्रे न प्रयुक्ता तत्कथनं पूर्वाचार्यशास्त्ररक्षणार्थं येन सा संज्ञा लुप्ता न भवेत्। शिष्याः परस्परं संव्यवहरेयुः। तेषां समादरार्थं वा तत्संज्ञा प्रयुज्यते ॥ १० ॥

## शशिकला

यहाँ लघु संज्ञा का विधान किया गया है। एकमात्राकाल में उच्चा-होने वाला अक्षर ह्रस्व कहलाता है। स्वर से अव्यवहित व्यञ्जन संयोग कहलाते हैं। संयुक्तव्यञ्जन ( संयोग ) बाद में न होने पर ह्रस्व अक्षर लघुसंज्ञक होता है। जैसे 'दधिवान्' 'मधु' इत्यादि में असंयोग से पूर्व में विद्यमान ह्रस्व अक्षर लघु हैं। सूत्र में 'संयोग बाद में न होने पर' यह क्यों कहा गया ? 'तक्षति', 'रक्षति' इन उदाहरणों में ककार तथा षकार का संयोग होने से पूर्ववर्ती ह्रस्व अकार लघु नहीं होता। यहाँ **शङ्का** होती है कि संज्ञा का विधान प्रयोजनवशात् होता है। इस शास्त्र में 'लघु' संज्ञा का कहीं प्रयोग नहीं है। फिर सूत्रकार ने निष्प्रयोजन इस संज्ञा का विधान क्यों किया ? **समाधान** यह है कि जिस शास्त्रविहित संज्ञा का प्रयोजन नहीं होता उसका विधान पूर्ववर्ती आचार्यों के शास्त्र की रक्षा के लिए होता है। जिससे उस संज्ञा का लोप न हो जाय। शिष्य लोग उस संज्ञा को परस्पर व्यवहार में लाते रहें अथवा पूर्ववर्ती आचार्यों के समादर के लिए उस संज्ञा का विधान कर दिया जाता है। इसी लिए सूत्रकार ने यहाँ लघु संज्ञा का कथन किया है ॥ १० ॥

[ गुरुसंज्ञाविधानम् ]

## गुर्वन्यत् ॥ ११ ॥

**सू० अ०**—( लघु से ) अन्य ( अक्षर ) 'गुरु' ( कहलाते हैं )।

## निर्मलभाष्यम्

लघोरन्यत् अक्षरं गुरुसंज्ञकः विद्यते। एवं संयोगे परे ह्रस्वं गुरु-संज्ञकम्। दीर्घश्चापि गुरुसंज्ञः भवति। संयोगे परे ह्रस्वं यथा—'त्रिष्टुप्'

( सं० ८९.२० ) 'दुष्वप्न्यम्' ( सं० ६.४६.३ ) इत्यादिषु संयोगे परे ह्रस्वमपि गुरुसंज्ञम्। दीर्घं यथा—'शाला' ( सं० ९ ३. १७ ) कुमारी ( सं० १०. ८. २७ ) 'इन्द्रवायू' ( सं० ३ २. ६ ) 'तौ' ( सं० ३. २४ ७ ) 'अस्यै' ( सं० २. ३६. १ ) इत्यादिषु दीर्घं गुरुसंज्ञः। अत्रापि प्रयोजनाभावात् संज्ञायाः कथनं पूर्वाचार्यशास्त्ररक्षणार्थं तेषां प्रति सम्मानार्थं शिष्यावबोधनार्थं वा ॥ ११ ॥

### शशिकला

लघु से अन्य अक्षर गुरुसंज्ञक होते हैं। इस प्रकार संयोग बाद में होने पर ह्रस्व अक्षर गुरु होते हैं तथा दीर्घ अक्षर भी गुरु होते हैं। संयोग बाद में होने पर ह्रस्व जैसे—'त्रिष्टुप्', 'दुष्वप्न्यम्' इत्यादि में संयुक्त व्यञ्जन बाद में होने से पूर्ववर्ती ह्रस्व अक्षर गुरु होता है। दीर्घ स्वर जैसे 'शाला' 'कुमारी' इन्द्रवायू' 'तौ' 'अस्यै' इत्यादि में दीर्घ अक्षर गुरु संज्ञक हैं। प्रयोजनाभाव होने पर भी इस संज्ञा का कथन पूर्ववर्ती आचार्यों के शास्त्र की रक्षा के लिए, पूर्ववर्ती आचार्यों के प्रति सम्मान प्रकट करने के लिए अथवा शिष्यों के ज्ञान के लिए किया गया है ॥ ११ ॥

## अनुनासिकञ्च ॥ १२ ॥

सू० अ०—अनुनासिक ( ह्रस्व अक्षर ) भी ( गुरु कहलाता है )।

### निर्मलभाष्यम्

च शब्दः पूर्वाद् 'गुरु' इत्यस्यान्वादेशकः। अनुनासिकमपि ह्रस्वमक्षरं गुरुसंज्ञः भवति। यथा—'द्वे च मे विंशतिश्च' ( सं० ५. १५. २ ) 'त्रिस्रश्च मे त्रिंशच्च' ( सं० ५. १५. ३ ) 'चतस्रश्च मे चत्वारिंशश्च' ( सं० ५ १५.४ ) 'पुमान् पुंसः' ( सं० ३. ६ १ ) इत्यादिषु अनुनासिकं ह्रस्वमक्षरं गुरुसंज्ञकं भवति ॥ १२ ॥

### शशिकला

यहाँ सूत्र में प्रयुक्त च शब्द पूर्ववर्ती सूत्र से 'गुरु' का अन्वादेश करता है। अनुनासिक ह्रस्व अक्षर भी गुरु संज्ञक होता है। जैसे—द्वे च मे विंशतिश्च' 'त्रिस्रश्च मे त्रिंशच्च' 'चतस्रश्च मे चत्वारिंशतिश्च' 'पुमान् पुंसः' इत्यादि में अनुनासिक ह्रस्व अक्षर भी गुरुसंज्ञक है ॥ १२ ॥

## पदान्ते च ॥ १३ ॥

सू० अ०—पदान्त ( व्यञ्जन ) बाद में होने पर भी (ह्रस्व अक्षर) ( गुरु कहलाता है )।

### निर्मलभाष्यम्

**पदान्ते** पदान्तव्यञ्जने परे अपि ह्रस्वाक्षरं गुरुसंज्ञः भवति। यथा—'गोधुक्' ( सं० ७.७६.६ ), 'दृषत्' (सं० २.३१.१), 'त्रिष्टुप्' (सं०८९.२०) इत्यादिषु पदान्तव्यञ्जने परे पूर्वं ह्रस्वमक्षरं गुरुसंज्ञः भवति ॥ १३ ॥

### शशिकला

पदान्त व्यञ्जन बाद में होने पर भी ह्रस्व अक्षर गुरु-संज्ञक होता है। जैसे—'गोधुक्' 'दृशत्' 'त्रिष्टुप्' इत्यादि में पदान्त व्यञ्जन बाद में होने पर पूर्ववर्ती ह्रस्व अक्षर 'गुरु' संज्ञक होता है ॥ १३ ॥

( अङ्गाङ्गिभावविधानम् ]

## परस्य स्वरस्य व्यञ्जनानि ॥ १४ ॥

सू० अ०—व्यञ्जन ( वर्ण ) परवर्ती स्वर के ( अङ्ग होते हैं )।

### निर्मलभाष्यम्

अत्र अङ्गाङ्गिभावः निरूप्यते। यतो हि उदात्तादिधर्मः स्वराणामेव, न तु व्यञ्जनानां तदङ्गत्वात्। व्यञ्जनं स्वरस्याङ्गो भवति। **ननु** कूपो यूप इत्यादौ व्यञ्जनमेवार्थविशेषबोधकमिति स्वरो व्यञ्जनाङ्गं कथं न भवति। **उच्यते** व्यञ्जनं केवलमवस्थातुं न शक्नोति अत एव सापेक्षं स्वरस्तु निरपेक्षः। सापेक्षनिरपेक्षयोर्निरपेक्षमेव विशिष्टमाचक्षते प्रेक्षावन्तः। अत एवोक्तम्—

> दुर्बलस्य यथा राष्ट्रं हरते बलवान्नृपः।
> दुर्बलं व्यञ्जनं तद्वद्धरते बलवान् स्वरः ॥ ( पा० शि० )

उदात्तादिस्वरचिन्तायां व्यञ्जनं स्वराङ्गं भवति। यद्व्यञ्जनं यस्य स्वरस्याङ्गं तस्यैव स्वरेण तस्याप्युच्चारणम् भवति। यथोक्तम्—

> स्वरो उच्चः स्वरो नीचः स्वरः स्वरित उच्यते।
> व्यञ्जनान्यनुवर्तन्ते यत्रासौ तिष्ठति स्वरः ॥
> ( मा० शि० ६१ ) इति।

व्यञ्जनं कस्य स्वरस्याङ्गम् ? यत्स्वरेण तदुच्चारणं भवति इत्यत्र विहितः । व्यञ्जनं परस्वरवर्णस्याङ्गं भवति । यथा–'दधिवान्' ( सं० १८. ४.१७ ) इत्यत्र दकारः परस्वरस्य अकारस्य, धकारश्च परस्वरस्य इकारस्य वकारश्च परस्याकारस्याङ्गं भवति । 'मधु' ( सं० १.३४.२ ) इत्यत्र मकारः अकारस्य धकारश्च उकारस्याङ्गम् ।

शौनकमते द्वयोः स्वरयोर्मध्ये विद्यमानं व्यञ्जनं परस्वरस्याङ्गं भवति –'स्वरान्तरे व्यञ्जनान्युत्तरस्य' ( ऋ० प्रा० १. १३ ) । आदौ सत्यपि उत्तरस्याङ्गम्—'व्यञ्जनान्युत्तरस्येव स्वरस्यान्त्यं तु पूर्वभाक्' ( ऋ० प्रा० १८.३३ ) । तैत्तिरीयप्रातिशाख्यस्य मतेऽपि व्यञ्जनं परस्वर-स्याङ्गम्—'तत्परस्वरम्' (तै० प्रा० २१.२) । कात्यायनानुसारं पूर्वव्यञ्जनैः सह स्वरो अक्षरं भवति 'सहाद्यैर्व्यञ्जनैः' ( वा० प्रा० १.१०० ) ॥ १४ ॥

**शशिकला**

यहाँ वर्णों के अङ्गाङ्गिभाव का निरूपण किया गया है क्योंकि उदात्तादि धर्म स्वरवर्णों के होते हैं, उनके अङ्गभूत व्यञ्जनवर्णों के नहीं । व्यञ्जन स्वरवर्णों के ही अङ्ग होते हैं । यहाँ **शंका** होती है कि कूप यूप इत्यादि में व्यञ्जन ही अर्थ विशेष का बोध कराते हैं, स्वर तो दोनों में समान ही हैं तो फिर स्वर व्यञ्जन के अङ्ग कैसे नहीं हैं ? **समाधान** यह है कि उच्चारण की दृष्टि से केवल व्यञ्जन पूर्णरूपेण उच्चारित नहीं हो सकते हैं, अतः ये सापेक्ष हैं जब कि केवल स्वरों का पूर्णरूपेण उच्चारण हो जाता है, अतः वे निरपेक्ष हैं । प्रज्ञावान् लोग सापेक्ष और निरपेक्ष में निरपेक्ष को ही विशिष्ट मानते हैं । इसलिए कहा गया है –

'जैसे बलशाली राजा दुर्बल राजा के राज्य को जीत लेता है, उसी प्रकार बलवान् स्वरवर्ण दुर्बल व्यञ्जनों को वशीभूत कर लेते हैं ( अङ्ग बना लेते हैं )' ( पा० शि० ) ।

उदात्तादि स्वरविषयक विवेचन में व्यञ्जनवर्ण स्वरवर्णों के अङ्ग होते हैं और जिस स्वरवर्ण के अङ्ग होते हैं उसी के स्वर से उच्चारित होते हैं । जैसा कहा गया है—

'स्वर वर्ण ही उदात्त होता है, अनुदात्त होता है तथा स्वरित होता है । व्यञ्जनवर्ण जिस स्वरवर्ण के अङ्ग होकर रहते हैं उसी स्वर का अनु-वर्तन करते हैं' ( मा० शि० ६१ ) ।

इसलिए व्यञ्जन उस स्वरवर्ण का अङ्ग होता है जिसके स्वर में उसका उच्चारण हो, यही यहाँ बतलाया गया है—व्यञ्जन परवर्ती स्वर-वर्ण के अङ्ग होते हैं। जैसे 'दधिवान्' में दकार अकार का, धकार इकार का तथा वकार आकार का अङ्ग है। 'मधु' में मकार अकार का तथा धकार उकार का अङ्ग है।

शौनक के मत में दो स्वरवर्णों के बीच में विद्यमान व्यञ्जन परवर्ती स्वरवर्ण का अङ्ग होता है ( ऋ० प्रा० १.२३ )। आदि में होने पर भी व्यञ्जन परवर्ती स्वरवर्ण का अङ्ग होता है (ऋ० प्रा० १८.३३)। तैत्तिरीय प्रातिशाख्य तथा कात्यायन के अनुसार भी व्यञ्जन परवर्ती स्वरवर्ण के अङ्ग होते हैं ( तै० प्रा० २१.२, वा० प्रा० १.१०० ) ॥ १४ ॥

## संयोगादि पूर्वस्य ॥ १५ ॥

सू० अ०—संयोग का आदि ( व्यञ्जन ) पूर्ववर्ती ( स्वरवर्ण ) का ( अङ्ग होता है )।

### निर्मलभाष्यम्

'व्यञ्जनान्यव्यवेतानि स्वरैः संयोगः' ( १.४.७ ) इत्यनेन संयोगः उक्तः। तत्र द्वयोर्बहूनां वा व्यञ्जनानां संयोगः। **संयोगादि** संयोगस्यादिव्यञ्जनं **पूर्वस्य** पूर्वस्वरस्याङ्गं भवति। यथा—'इन्द्रः' ( सं० १.९१ ) इत्यत्र नकारदकाररेफाणां संयोगः तत्र संयोगस्यादि नकारः पूर्वस्य स्वरस्य इकारस्याङ्गं भवति। 'राष्ट्रम्' ( सं० ८.९.३ ) इत्यत्र षकारटकाररेफाणां संयोगः। तत्रापि संयोगादि षकारः पूर्वस्याकारस्याङ्गम्।

शौनकमते 'संयोगादिर्वा' ( ऋ० प्रा० १.२५ ) इत्यनुसारेण संयोगस्यादिव्यञ्जनं पूर्वस्याङ्गं परस्य वा इति विकल्पः।

तैत्तिरीयप्रातिशाख्यानुसारमपि संयोगस्यादिव्यञ्जनं पूर्वस्वरस्याङ्गं भवति—'संयोगादि च' ( तै० प्रा० २१.४ )। कात्यायनस्यापीदं मतम्—'संयोगादिः पूर्वस्य' ( वा० प्रा० १.१०२ ) ॥ १५ ॥

### शशिकला

'स्वर से अव्यवहित व्यञ्जन संयोग कहलाता है' ( १.४.७ ) के द्वारा संयोग संज्ञा का कथन हुआ है। संयोग में दो या दो से अधिक व्यञ्जन संयुक्त होते हैं। उन संयुक्त व्यञ्जनों में पहला संयुक्त व्यञ्जन

पूर्ववर्ती स्वर का अङ्ग होता है। जैसे—'इन्द्रः' यहाँ नकार, दकार तथा रेफ इन तीन व्यञ्जनों का संयोग है। उनमें से प्रथम संयुक्त व्यञ्जन नकार पूर्ववर्ती स्वर इकार का अङ्ग होता है। 'राष्ट्रम्' में षकार, टकार तथा रेफ का संयोग है। उनमें संयोगादि व्यञ्जन षकार पूर्ववर्ती स्वर आकार का अङ्ग है।

शौनक के मत में संयोग के आदि व्यञ्जन के पूर्ववर्ती स्वर के अङ्गत्व के विषय में विकल्प है—'संयोग का आदि व्यञ्जन विकल्प से पूर्ववर्ती स्वर का अङ्ग होता है' ( ऋ० प्रा० १.२५ )। किन्तु तै० प्रा० तथा तथा कात्यायन के मत में निश्चित रूप से पूर्ववर्ती स्वर का ही अङ्ग होता है ( तै० प्रा० २१.४, वा० प्रा० १.१०२ ) ॥ १५ ॥

**पद्यश्च ॥ १६ ॥**

**सू० अ०**—पद्य भी ( पूर्ववर्ती स्वरवर्ण ) का अङ्ग होता है।

## निर्मलभाष्यम्

चशब्दः पूर्वसूत्रात् 'पूर्वस्य' इत्यन्वादिशति। 'पदान्त्यः पद्यः' ( १.१.३ ) इत्युक्तम्। **पद्यं** पदान्त्यवर्णः **च** अपि पूर्वस्वरवर्णस्याङ्गं भवति। यथा—'गोधुक्' ( सं० ७.७३.६ ) इत्यत्र पदान्तीयः ककारः पूर्वस्वरस्य उकारस्याङ्गम्। 'विराट्' ( सं० ८.९.८ ) इत्यत्र पदान्त्यः टकारः पूर्वस्वरस्याकारस्याङ्गम्।

शौनकस्याप्येतद् मतम् पदान्त्यः पूर्वस्वरस्याङ्गं भवति—'व्यञ्जनान्युत्तरस्यैव स्वरस्यान्त्यं तु पूर्वभाक्' ( ऋ० प्रा० १८.३३ )। तैत्तिरीयप्रातिशाख्यानुसारमपि अवसितं व्यञ्जनं पूर्वस्याङ्गम् भवति—'अवसितं पूर्वस्य' ( तै० प्रा० २१.३ )। 'उत्तरैश्चावसितैः' ( वा० प्रा० १.१०१ ) इत्यनुसारं कात्यायनस्य मतेऽपि एवमेव ॥ १६ ॥

## शशिकला

सूत्र में उक्त चशब्द पूर्ववर्ती सूत्र से 'पूर्वस्य' का अन्वादेश करता है। 'पदान्तीय' वर्ण पद्य कहलाते हैं' ( १.१.३ )—यह कहा जा चुका है। पदान्तीय व्यञ्जन भी पूर्ववर्ती स्वरवर्ण का अङ्ग होता है। जैसे—'गोधुक्' यहाँ पदान्तीय ककार पूर्ववर्ती उकार का अङ्ग है। 'विराट्' में पदान्त्य

टकार पूर्ववर्ती आकार का अङ्ग है। शौनक के मत में भी पदान्तीय व्यञ्जन पूर्ववर्ती स्वरवर्ण का अङ्ग होता है ( ऋ० प्रा० १८.३३ )। तैत्तिरीयप्रातिशाख्यकार तथा कात्यायन का भी यही मत है ॥ १६ ॥

## रेफहकारक्रमजश्च ॥ १७ ॥

**सू० अ०**—रेफ तथा हकार से बाद वाला क्रमज ( द्वित्व से उत्पन्न व्यञ्जन ) पूर्ववर्ती स्वरवर्ण का अङ्ग होता है।

### निर्मलभाष्यम्

चशब्दोऽत्र 'पूर्वस्य' इत्यन्वादिशति । रेफहकाराभ्यां परं क्रमजं **रेफहकारक्रमजम्** । रेफाद् हकारात् परं क्रमजं पूर्वस्य स्वरस्याङ्गं भवति । क्रमेण द्वित्वेन जायमानमिति क्रमजम् । 'संयोगादि पूर्वस्य' ( १.२ १५ ) इत्यनेन संयोगादेः व्यञ्जस्य पूर्वस्वराङ्गत्वमुक्तम् । अत्र संयोगादौ विद्यमानस्य क्रमजस्यापि पूर्वस्वराङ्गत्वम् प्राप्तम् । संयोगादित्वात् रेफस्य हकारस्य च पूर्वस्वरस्याङ्गत्वं विहितमेव । ततः परस्य क्रमजस्याङ्गनिर्धारणं न जातम् । अत एव विधानमिदं विहितम् । एवं रेफात् हकारात् च द्वित्वे जाते रेफेण हकारेण च सहैव द्वित्वनिष्पन्नं व्यञ्जनमपि पूर्वस्वरस्याङ्गं भवति । यथा—'वर्म्म' (सं० १.१९.४) 'भर्ग्गः' (सं० १९.६.४६) 'अपराह्ण' (सं० ९.६.४६) 'ब्रह्म' ( सं० १.१९.४ ) इत्यत्र 'रेफहकारौ परं ताभ्याम्' (३.२.६) इत्यनेन रेफाद् हकारात् च व्यञ्जनस्य द्वित्वं प्राप्तम् । तच्च द्वित्वेनोत्पन्नं व्यञ्जनं रेफेण हकारेण सह पूर्वस्य स्वरस्याङ्गं भवति । उल्लेखनीयमत्र यत्र संहितायां द्वित्वरूपं न दृश्यते परञ्च संयुक्तव्यञ्जनानामुच्चारणवैशिष्ट्याद् उच्चारणदशायां द्वित्वं कर्त्तव्यमेव ॥ १७ ॥

### शशिकला

सूत्र में प्रयुक्त 'च' शब्द 'पूर्वस्य' का अन्वादेश करता है। रेफ तथा हकार से बाद वाला द्वित्त्व से जाययान ( व्यञ्जन ) रेफहकारक्रमज है। रेफ तथा हकार से बाद वाला द्वित्त्व से उत्पन्न ( क्रमज ) व्यञ्जन पूर्ववर्ती स्वरवर्ण का अङ्ग होता है। क्रम अर्थात् द्वित्त्व से उत्पन्न होने के कारण क्रमज कहा जाता है। 'संयोग का आदि वाला व्यञ्जन पूर्ववर्ती स्वरवर्ण का अङ्ग होता है' (१.२.१५) इस विधान द्वारा संयोग के आदि व्यञ्जन के पूर्ववर्ती स्वरवर्ण के अङ्ग होने का विधान किया गया है। इस प्रकार संयोगादि व्यञ्जन का द्वित्त्व होने पर संयोगादि व्यञ्जन के भी पूर्ववर्ती

स्वर का अङ्ग होना प्राप्त हो जाता है। संयोगादि रेफ तथा हकार का द्वित्व नहीं होता प्रत्युत उससे परवर्ती व्यञ्जन का द्वित्व होता है। इस प्रकार संयोगादि रेफ तथा हकार के पूर्ववर्ती स्वर का अङ्गत्व तो प्राप्त होता है किन्तु उससे परवर्ती द्वित्व से उत्पन्न व्यञ्जन के अङ्गी स्वर का निर्धारण नहीं हो पाता किन्तु वह भी पूर्ववर्ती स्वर का ही अङ्ग होता है। इसलिए इस विधान द्वारा स्पष्ट किया गया है कि रेफ तथा हकार से परवर्ती द्वित्व से उत्पन्न व्यञ्जन भी पूर्ववर्ती स्वरवर्ण का अङ्ग होता है। जैसे - वर्म्म, भर्ग्गः, अपराह्ल्णः, ब्रह्ह्म। यहाँ 'रेफ तथा हकार ( द्वित्व को नहीं प्राप्त होता, उन दोनों ) से परवर्ती ( व्यञ्जन ) का द्वित्व होता है )' ( ३.२.६ ) से रेफ तथा हकार से परवर्ती व्यञ्जन का द्वित्व प्राप्त होता है। वह द्वित्व से उत्पन्न व्यञ्जन रेफ तथा हकार के साथ पूर्ववर्ती स्वरवर्ण का अङ्ग होता है। यहाँ यह उल्लेखनीय है कि संहिता में द्वित्व रूप प्राप्त नहीं होता किन्तु संयुक्त व्यञ्जनों का उच्चारण-विषयक वैशिष्ट्य होने के कारण उच्चारण में द्वित्व करना ही चाहिए ॥ १७ ॥

[ ह्रस्वसंज्ञाविधानम् ]

## एकमात्रो ह्रस्वः ॥ १८ ॥

**सू० अ०** एक मात्रा वाला ( स्वर ) ह्रस्व कहलाता है अथवा ह्रस्व ( स्वर ) एकमात्रा ( उच्चारण-काल ) वाला होता है।

### निर्मलभाष्यम्

ह्रस्वसंज्ञा अत्र विहिता। **एकमात्रः** एकमात्राकाले उच्चारितः वर्णः **ह्रस्वः** ह्रस्वसंज्ञः भवति। अथवा अत्र ह्रस्ववर्णस्य उच्चारणकालः निर्धारितः। ह्रस्वः ह्रस्ववर्ण एकमात्र एकमात्राकाले उच्चारितः भवति। एकमात्रायां कियत्कालः इति नात्रोपदिष्टः। परञ्च अथर्ववेदस्य शिक्षायां तदुक्तम् –'अक्ष्णोर्निमेषमात्रेण यो वर्णं समुदीर्यते। स एकमात्रः' ( मा॰ शि० १३६ )। एवं निमेषकालः मात्रा उच्यते। याज्ञवल्क्यशिक्षायामपि एवमेवोक्तम्—'निमेषो मात्राकालः स्यात्' ( या० शि० १० पू० )। एके तु विद्युत्स्फुरणकालः मात्रा इति मन्यते –'विद्युत्कालस्तथापरे' ( या० शि० १० पू० )। तत्रैवोक्तम् —

सूर्यरश्मिप्रतीकाशात् कणिका यत्र दृश्यते।
अणुत्वस्य तु सा मात्रा च चतुराणवा॥ (या० शि० ११) इति।

तत्रैव नीलकण्ठस्य कूजनं मात्राकाले भवति इत्यप्युक्तम्—चाषस्तु वदते मात्राम्' ( या० शि० १७ उ० )। एवमेव मात्रानिर्धारणम्। ह्रस्वस्योच्चारणं मात्राकाले भवति। यथा--'दधि' ( सं० १८.४.१७ ) 'मधु' ( सं० १.३४.२ ) इत्यादयः। अत्र एकमात्राकाले उच्चारितवर्णः ह्रस्वसंज्ञकम्। संज्ञाप्रयोजनम्—'ह्रस्वं लध्वसंयोगे' ( १.२.१० ) ॥ १८ ॥

## शशिकला

यहाँ ह्रस्व संज्ञा का विधान किया गया है। एकमात्रा काल में उच्चारित वर्ण ह्रस्व होता है। अथवा यहाँ ह्रस्ववर्ण का उच्चारणकाल बतलाया गया है। ह्रस्ववर्ण एकमात्रा काल में उच्चारित होता है। एकमात्रा में कितना समय लगता है इसको सूत्रकार ने नहीं बतलाया है किन्तु अथर्वशिक्षा में एक मात्राकाल का निर्धारण किया गया है –'एक निमेष ( पलक मारने ) में जो वर्ण उच्चारित होता है वह एकमात्रा काल वाला होता है' ( मा० शि० १.३६ )। इस प्रकार एक निमेष का समय मात्रा कहलाता है। याज्ञवल्क्यशिक्षा में भी यही कहा गया है—'निमेष काल मात्रा कहलाता है।' या० शि० में एकमात्रा को विद्युत्स्फुरण के समय के चौगुने के बराबर बतलाया गया है ( या० शि० १० पू० )। वहीं नीलकण्ठ की ध्वनि के बराबर भी मात्राकाल का निर्धारण किया गया है ( या० शि० १७ उ० )। इस प्रकार मात्राकाल का निर्धारण हुआ है। एक मात्राकाल में उच्चारित वर्ण ह्रस्व कहलाता है। जैसे—'दधि'. 'मधु' इत्यादि। यहाँ एक मात्राकाल में उच्चारित वर्ण ह्रस्व है। संज्ञा का प्रयोजन—'संयोग' बाद में न होने पर ह्रस्व स्वर लघु होता है' ( १.२.१० ) ॥ १८ ॥

## व्यञ्जनानि च ॥ १९ ॥

सू० अ०—व्यञ्जन भी ( एकमात्रा-काल वाले होते हैं )।

## निर्मलभाष्यम्

चशब्दः पूर्वसूत्राद् एकमात्र इत्यन्वादिशति। **व्यञ्जनानि** व्यञ्जनवर्णानि **च** एकमात्राकाले उच्चारितानि भवन्ति। यथा–'दधिवान्' ( सं० १८ ४ १७ ) 'मधु' ( सं० १.३४.२ ) इत्यत्र व्यञ्जनवर्णानामुच्चारणम् एकमात्राकाले भवति। सूत्रकारस्य मतमिदम्। शौनकमते तु व्यञ्जनवर्णानामुच्चारणमर्धमात्राकाले भवति—'इतरे च' ( ऋ० प्रा० १.३४ )। तैत्ति-

रीयप्रातिशाख्यानुसारमपि व्यञ्जनं ह्रस्वार्धकालं भवति—'ह्रस्वार्धकालं व्यञ्जनम्' ( तै० प्रा० १.३७ )। ह्रस्वस्योच्चारणकाल 'एकमात्रा अत एव व्यञ्जनम् अर्धमात्राकालम्। कात्यायनस्यापीदमेव मतम्- व्यञ्जनमर्धमात्रा' ( वा० प्रा० १.५९ )। व्यञ्जनस्योच्चारकालविषये यदाचार्याणां मतवैभिन्यं तद्दृष्टिभेदात्। वस्तुतस्तु व्यञ्जनस्य पूर्णोच्चारणं स्वरैः विना न भवति। तस्य पूर्णोच्चारणे स्वरस्यापि किञ्चिदंशं जायते एव। अत एव तत्स्वरांशेन सह व्यञ्जनस्योच्चारणम् एकमात्राकाले भवति। यदा व्यञ्जनवर्णः स्वर-वर्णेन संयुक्तः तदा तस्य व्यञ्जनस्योच्चारणम् अर्धमात्रायामेव भवति। व्यञ्जनवर्णः ह्रस्वस्वरेण संयुक्तश्चेत्तस्योच्चारणम् अर्धमात्रिकं ह्रस्वश्चार्ध-मात्रिकम्। दीर्घस्वरेण संयुक्तं व्यञ्जनमर्धमात्रिकं दीर्घस्वरश्चाध्यर्धमात्रिकः। परञ्च स्वररहितं व्यञ्जनं चेत्तस्योच्चारणमेकमात्राकाले सम्भवति। यथा—'दधि' ( सं० १८४.१७ ) इत्यत्र ह्रस्वेन अकारेण सह दकारः इकारेण सह धकारः अर्धमात्रिकः परस्वरश्चार्धमात्रिकः। 'शाला' ( सं० ९.३.१७ ) इत्यत्र दीर्घेण आकारेण सह क्रमशः शकारः लकारश्चार्धमात्रिकः परदीर्घस्वरः अध्यर्धमात्रिकः। परञ्च 'वषट्' ( सं० १.११.१ ) इत्यत्र टकारस्योच्चारणं एकमात्राकाले भवति ॥ १९ ॥

## शशिकला

च शब्द 'पूर्वसूत्र' से एकमात्रः का अन्वादेश करता है। सूत्रकार के मत में व्यञ्जनवर्णों का भी उच्चारणकाल एकमात्रा होता है। जैसे-'दधि', 'मधु' इत्यादि में व्यञ्जनवर्णों का उच्चारण एक मात्राकाल में होता है। किन्तु ऋ० प्रा०, तै० प्रा० तथा वा० प्रा० में इनका उच्चारणकाल आधी मात्रा माना गया है ( ऋ० प्रा० १.३४, तै० प्रा० १.३७, वा० प्रा० १.५९ )।

व्यञ्जनवर्ण के उच्चारणकाल के विषय में आचार्यों में दृष्टिभेद के कारण मतभेद है। वस्तुतः व्यञ्जन का पूर्ण उच्चारण स्वर के बिना नहीं होता। उनके पूर्ण उच्चारण में उनके बाद में स्वरवर्ण का भी कुछ अंश उच्चारित हो ही जाता है। इसलिए व्यञ्जन के पूर्ण उच्चारण में उस स्वरांश के सहित एकमात्रा का समय लगता है। जब व्यञ्जनवर्ण किसी ह्रस्व परस्वरवर्ण से संयुक्त होकर उच्चारित होता है तो उसके उच्चारण में आधी मात्रा तथा परवर्ती स्वर आधी मात्रा में उच्चारित होता है। यदि दीर्घ स्वर से पूर्व में उच्चारित होता है तो व्यञ्जन आधी मात्रा तथा परवर्ती स्वर डेढ़ ( १॥ ) मात्रा में उच्चारित होता है। किन्तु स्वररहित व्यञ्जन

के पूर्ण उच्चारण में एक मात्रा का समय लगता है। जैसे—'दधि' में ह्रस्व अकार तथा इकार के साथ उच्चारित क्रमशः दकार तथा धकार का उच्चारण आधी मात्रा में हो जाता है तथा परवर्ती स्वर आधी मात्रा में। 'शाला' में दीर्घ आकार के साथ क्रमशः शकार तथा लकार का उच्चारण आधी मात्रा तथा परवर्ती स्वर का उच्चारण डेढ़ मात्रा में होता है। 'विराट्' में आकार से बाद में टकार का उच्चारण एक मात्रा में होता है क्योंकि उससे परे स्वर नहीं है ॥ १९ ॥

[ दीर्घसंज्ञाविधानम् ]

## द्विमात्रो दीर्घः ॥२० ॥

सू० अ० दो मात्रा काल वाला ( स्वर ) दीर्घ कहलाता है अथवा दीर्घ ( स्वर ) दो मात्रा ( काल ) वाला ( होता है )।

### निर्मलभाष्यम्

दीर्घसंज्ञा विधीयतेऽत्र। **द्विमात्रः** द्विमात्राकाले उच्चारितः वर्णः **दीर्घः** दीर्घसंज्ञः भवति। अथवा दीर्घवर्णस्योच्चारणकालः निर्दिष्टः अत्र। दीर्घः दीर्घवर्णः द्विमात्रः द्विमात्राकाले उच्चारितः भवति। निमेषकाल एकमात्रः अत एव द्विमात्रः द्विनिमेषकालः भवति। यथोक्तं शिक्षायाम्—'द्विस्तावान्दीर्घः (मा० शि० १३६ पू० )। याज्ञवल्क्यशिक्षायामुक्तम्—'द्विमात्र वायसोऽब्रवीत्' ( या० शि० १७ पू० )। इत्येवं काकस्य ध्वनिः द्विमात्राकाले भवति। द्विमात्राकाले यस्य वर्णस्योच्चारणं भवति सः दीर्घः। यथा—शाला ( सं० ९.३.१७ ) इत्यत्र शाकारस्य लाकारस्य चोच्चारणं द्विमात्राकाले भवति अत एव एतौ दीर्घौ। संज्ञाप्रयोजनम् 'दीर्घप्लुतयोः पूर्वा मात्रा' ( १.१. ३८ ) इति ॥ २० ॥

### शशिकला

यहाँ दीर्घसंज्ञा का विधान किया गया है। दो मात्राकाल में उच्चारित होने वाला वर्ण दीर्घसंज्ञक होता है। अथवा इस सूत्र में दीर्घ वर्ण के उच्चारणकाल का विधान किया गया है। दीर्घ दो मात्राकाल में उच्चारित होता है। एक निमेष में लगा समय एकमात्रा काल होता है। अतः दो निमेष का समय दो मात्रा काल है। जैसा शिक्षा में कहा गया है—'उस ( निमेष ) के दुगुने काल वाला दीर्घ ( कहलाता है )' ( मा० शि० १३६ पू० )। या० शि० में कहा गया है कि कौवा दो मात्राकाल में बोलता है

( या० शि० १७ पू० )। इस प्रकार कौवे की ध्वनि दो मात्राकाल वाली होती है। दो मात्राकाल में जिस वर्ण का उच्चारण होता है, वह दीर्घ कहलाता है। जैसे—'शाला' यहाँ शाकार तथा लाकार का उच्चारण दो मात्राकाल में होता है, अतः ये दोनों दीर्घ हैं ॥ २० ॥

[ प्लुतसंज्ञाविधानम् ]

## त्रिमात्रः प्लुतः ॥ २१ ॥

**सू० अ०**—तीन मात्रा ( काल ) वाला ( स्वर ) प्लुत ( कहलाता ) है। अथवा प्लुत तीन मात्राकाल वाला होता है।

### निर्मलभाष्यम्

**त्रिमात्रः** त्रिमात्राकाले उच्चारितवर्णः **प्लुतः** प्लुतसंज्ञः भवति। अथवा प्लुतवर्णस्य उच्चारणकालः त्रिमात्रः भवति। निमेषकालः एकमात्रा तत्त्रिगुणं त्रिमात्रः। यथोक्तं शिक्षायाम् 'त्रिमात्रो प्लुत उच्यते' ( मा० शि० १३६ उ० )। याज्ञवल्क्यशिक्षायां मयूरस्य ध्वनिः त्रिमात्रे निर्धारितः— 'शिखी वदति त्रिमात्रम्' ( या० शि० १८ )। त्रिमात्राकाले उच्चारितवर्णः प्लुत इत्युच्यते। यथा—'भूया३ इदा३म्' ( सं० ९.६.१८ ) इत्यत्र त्रिमात्राकाले उच्चारितवर्णः 'या३' 'दा३म्' च प्लुतः। संज्ञाप्रयोजनम् 'दीर्घप्लुतयोः पूर्वा मात्रा' ( १.१.३८ ) ॥ २१ ॥

॥ इति श्रीमत्पण्डितदशरथपाठकसूनुना डा० जमुनापाठकेन कृते निर्मलभाष्ये चतुरध्यायिकायाः प्रथमाध्यायस्य द्वितीयः पादः ॥ २ ॥

### शशिकला

तीन मात्राकाल में उच्चारित वर्ण प्लुतसंज्ञक होता है अथवा यहाँ प्लुत का उच्चारणकाल निर्धारित किया गया है। प्लुत का उच्चारण तीन मात्राकाल में होता है। निमेषकाल एक मात्रा होता है। उसका तिगुना तीन मात्रा होता है। जैसा शिक्षा में कहा गया है 'तीन मात्रा वाला प्लुत कहलाता है' ( मा० शि० १३६ )। याज्ञवल्क्यशिक्षा में मयूर की ध्वनि को तीन मात्रा काल वाला कहा गया है ( या० शि० १८ )। तीन मात्राकाल वाला वर्ण प्लुत होता है। जैसे 'भूया३ इदा३म्' यहाँ तीन मात्राकाल में उच्चारित 'या३' 'दा३म्' प्लुत है ॥ २१ ॥

॥ चतुरध्यायिका के प्रथम अध्याय के द्वितीयपाद की डा० जमुनापाठक कृत 'शशिकला' व्याख्या समाप्त ॥ २ ॥

●

## अथ तृतीयः पादः

[ उकारभावः ]

**षट्पुरसोरुकारोऽन्त्यस्य[1] दशदाशयोरादेशश्च मूर्धन्यः ॥ १ ॥**

**सू० अ०**—( क्रमशः ) दश तथा दाश बाद में होने पर षट् तथा पुरस् के अन्तिम वर्ण का उकार हो जाता है तथा ( दश और दाश का दन्त्य वर्ण ) मूर्धन्य हो जाता है।

### निर्मलभाष्यम्

दशः च दाशः च दशदाशौ तयोः **दशदाशयोः**। **षट्पुरसः** षट् पुरस् इत्यनयोः अन्त्यस्य टकारस्य सकारस्य च उकारः भवति चेद् आनुपूर्वेण दशदाशयोः परयोः भवतः। तथा च दशः दाश इत्यनयोः आदिवर्णस्य दकारस्य मूर्धन्यः डकार **आदेशः** भवति। ततश्च पूर्वपरयो अकारोकारयोः 'उवर्णे ओकारः' ( ३.२.२० ) इत्यनेन ओकारश्च। यथा 'इष्टापूर्तस्य षोडशम्' ( सं० ३.२९.१ ) 'पुरोडाशावेव तौ' ( सं० ९.६.१२ )। उल्लेखनीयमत्र यत् पदपाठेऽपि संहितावदेव रूपं दृश्यते। अस्य विधानस्य अनुसारं पदपाठे 'षट्-दशम्' 'पुरस् दाशौ' इति मूलरूपं न दृश्यते ॥ १ ॥

### शशिकला

'दश' और 'दाश' = 'दशदाश', इन दोनों का—दशदाशयोः। 'षट्' और पुरस् इन दोनों के अन्तिम टकार तथा सकार का क्रमशः 'दश' और 'दाश' बाद में होने पर उकार हो जाता है तथा परवर्ती दन्त्य दकार का मूर्धन्य डकार आदेश होता है। इसके बाद अकार तथा उकार दोनों का 'उवर्ण बाद में होने पर ( एकादेश ) ओकार होता है' ( ३.२.२० ) इस विधान से ओकार हो जाता है। जैसे—'इष्टापूर्तस्य षोडशम्'[2] 'पुरोडाशावेव तौ'[3]। यहाँ उल्लेखनीय है कि पदपाठ में भी संहितापाठ के समान

---

१. (क) षट्रपुसोदुकारोऽन्त्यस्य इतिपाठः।
२. इष्ट-पूर्तस्य। षोडशम् ( प० पा० )
३. पुरोडाशौ। एव। तौ ( प० पा० )

ही रूप मिलता है। इस विधान के अनुसार पदपाठ में 'षट्-दशम्' 'पुरस्-दाशौ' यह मूलरूप नहीं प्राप्त होता[१] ॥ १ ॥

[ रेफस्य लकारभावः ]

## कृपे रेफस्य लकारः ॥ २ ॥

सू० अ०—'कृप्' धातु में रेफ का लकार ( हो जाता है )।

### निर्मलभाष्यम्

**कृपे** कृपधातौ **रेफस्य लकारः** भवति। यथा—'च चाक्लृपत्' ( सं० ६.३५.३ ) 'चाक्लृपुर्विश्वमेजत्' ( सं० ९.१०.१९ ) 'चाक्लृपे तस्मै रुद्राय' ( सं० ७.८७.१ )। अत्रापि पदपाठे संहितावद्रूपम्। मूलरूपं 'कृप्' न, क्लृप् एव प्राप्तम् ॥ २ ॥

### शशिकला

कृप् धातु में रेफ का लकार हो जाता है। जैसे—'च चाक्लृपत्'[२] 'चाक्लृपुर्विश्वमेजत्'[३] चाक्लृपे तस्मै'[४]। यहाँ पदपाठ में भी संहिता के समान ही रूप प्राप्त होता है। मूलरूप ऋकार नहीं प्रत्युत ऌकार ही उपलब्ध होता है[५] ॥ २ ॥

[ तन्निषेधः ]

## न कृपादीनाम् ॥ ३ ॥

सू० अ०—कृपा इत्यादि में ( रेफ का लकार ) नहीं ( होता है )।

---

१. प्रस्तुत विधान के अनुसार षोडशम् का मूलरूप 'षट्-दशम्' तथा पुरोडाशौ का 'पुरस्-दाशौ' है। पदपाठ में मूलरूप दिखाया जाता है किन्तु वहाँ इस विधान के अनुसार प्राप्त मूलरूप नहीं उपलब्ध होता। जैसा पदपाठ से स्पष्ट है।

२. च। चक्लृपत् ( प० पा० )

३. चक्लृपुः। विश्वम्। एजत् ( प० पा० )

४. चक्लृपे। तस्मै। रुद्राय ( प० पा० )

५. पदपाठ में मूलरूप का प्रदर्शन किया जाता है। इस विधान के अनुसार मूलरूप 'चक्लृपत्' 'चक्लृपुः' तथा 'चक्लृपे' नहीं प्रत्युत 'चकृपत्' 'चकृपुः' 'चकृपे' है किन्तु पदपाठ में यह नहीं प्राप्त होता। जैसा पदपाठ से स्पष्ट है।

## निर्मलभाष्यम्

पूर्वस्यापवादोऽयम् । 'कृपा' इत्यादीनां रेफस्य लकारः न भवति । यथा—'कृपा पावकः' ( सं० १८.४.५९ ) 'सुक्रतुः कृपात् स्वः' ( सं० ७. १४.२ ) । सूत्रे प्रयुक्तेन 'कृपादीनाम्' इत्यनेन ज्ञायते यद् अन्यत्रापि भवति । तद्विषये इमान्युदाहरणानि गृहीतव्यानि—'कृपणाश्च याः' ( सं० ११.८.२८ ) 'अश्रूणि कृपमाणस्य यानि' ( सं० ५.१९.१३ ) 'अकृपन् वृधे' ( सं० १८. ३.२३ ) ॥ ३ ॥

## शशिकला

यह विधान पूर्ववर्ती का अपवाद है । 'कृपा' इत्यादि के रेफ का लकार नहीं होता । जैसे—'कृपा पावकः'[१] 'सुक्रतुः कृपात् स्वः'[२] । सूत्र में प्रयुक्त 'कृपादीनाम्' से ज्ञात होता है कि इससे अन्यत्र भी रेफ का लकार नहीं होता है । इस विषय में ये उदाहरण ग्रहणीय हैं—'कृपणाश्च याः'[३] 'अश्रूणि कृपणमाणस्य यानि'[४] 'अकृपन् वृधे'[५] ॥ ३ ॥

[ लकारस्य रेफभावः ]

### लकारस्य रेफः पादमङ्गुरिमित्येवमादीनाम्[६] ॥ ४ ॥

सू० अ०—'पादमङ्गुरिम्' इत्यादि ऐसे ( पदों ) में लकार का रेफ ( हो गया है ) ।

## निर्मलभाष्यम्

पादमङ्गुरिमित्येवमादीनां लकारस्य रेफः जातः । यथा—'शश्रे पादमङ्गुरिम्' ( सं० ४.१८.६, ५.३१.११ ) । सूत्रे प्रयुक्तेन इत्येवमादीनामित्यनेन ज्ञायते यदन्यत्रापि लकारस्य रेफः । तद्विषये इमानि निदर्शनानि गृहीतव्यानि—'सह मूरान् अनु दह' (सं० ५.२९.११), 'याहि मयूररोमभिः' ( सं० ७.११७.१ ), 'अश्वस्य वारः पुरुषस्य वारः' ( सं० १०.४.२ ), 'पश्चा-

१. कृप । पावकः ( प० पा० )
२. सुक्रतुः । कृपात् । स्वः ( प० पा० )
३. कृपणाः । च । याः ( प० पा० )
४. अश्रूणि । कृप-माणस्य । यानि ( प० पा० )
५. अकृपन् । वृधे ( प० पा० )
६. (ख) 'पादमङ्गुलिमित्येवमादीनाम्' इतिपाठः

ङ्गुरिः' ( सं० ४.६.४ ), 'सुबाहुः स्वङ्गुरिः' ( सं० ७.४६.२ ) पञ्चपादाद् अनङ्गुरेः' ( सं० ८.६.२२ ) 'करम्भं कृत्वा तिर्यः' ( सं० ४ ७.३ ) 'अङ्गुरिम्' ( सं० २०.१३६.१३ )। इत्यत्र पदपाठेऽपि संहितावत् रेफः, न तु लकारः प्राप्यते । परञ्च 'अङ्गुलिभ्यो नखेभ्यः' ( सं० २.३३.६ ), 'बालास्ते प्रोक्षणीः सन्तु' ( सं० २०.९.३ ) इत्यत्र संहितायां लकारस्य रेफः न ॥ ४ ॥

## शशिकला

पादमङ्गुरिम् इत्यादि ऐसे पदों में लकार का रेफ हो गया है। जैसे—'शश्रे पादमङ्गुरिम्'[1]। सूत्र में प्रयुक्त 'इत्येवमादीनाम्' से ज्ञात होता है कि इससे अन्य स्थलों पर भी लकार का रेफ हो जाता है। तद्विषयक इन उदाहरणों का ग्रहण हो सकता है—'सह मूरान् अनु दह'[2] 'याहि मयूररोमभिः'[3] 'अश्वस्य वारः पुरुषस्य वारः[4] 'पञ्चाङ्गुरिः'[5] 'सुबाहुः स्वङ्गुरिः'[6] 'पञ्चपादाद् अनङ्गुरेः'[7] करम्भं कृत्वा तिर्यः'[8] 'अङ्गुरिम्'[9]। यहाँ पदपाठ में भी संहिता के समान रेफ प्राप्त होता है, लकार नहीं। किन्तु 'अङ्गुलिभ्यो नखेभ्यः'[10] 'बालास्ते प्रोक्षणीः सन्तुः'[11] यहाँ संहिता में लकार का रेफ प्राप्त नहीं होता ॥ ४ ॥

[ पूर्वस्यानुनासिकविधानम् ]

### नकारमकारयोर्लोपे पूर्वस्यानुनासिकः ॥ ५ ॥

सू० अ० –नकार तथा मकार का लोप होने पर पूर्ववर्ती का अनुनासिक ( हो जाता है )।

---

१. शश्रे । पादम् । अङ्गुरिम् ( प० पा० )
२. सह । मूरान् । अनु । दह ( प० पा० )
३. याहि । मयूररोम-भिः ( प० पा० )
४. अश्वस्य । वारः । पुरुषस्य । वारः ( प० पा० )
५. पञ्च–अङ्गुरिः ( प० पा० )
६. सु–बाहुः । सु–अङ्गुरिः ( प० पा० )
७. पञ्चपादात् । अनङ्गुरेः ( प० पा० )
८. करम्भम् । कृत्वा । तिर्यः ( प० पा० )
९. अङ्गुरिम् ( प० पा० )
१०. अङ्गुलि-भ्यः । नखे-भ्यः ( प० पा० )
११. बालाः । ते । प्रोक्षणीः । सन्तु ( प० पा० )

## निर्मलभाष्यम्

**नकारमकारयोः** नकारश्च मकारश्च तयोः **लोपे पूर्वस्य** पूर्वस्वरस्य **अनुनासिकः** भवति। यथा —'द्वे च मे विंशतिश्च मे' ( सं० ५ १५.२ ) पयाँस्युत्तमेन' ( सं० १.९.३ ) इत्यत्र 'ऊष्मस्वेवान्तःपदे' ( २ १.३३ ) इत्यनेन पदमध्ये मकारस्य लोपे जाते प्रस्तुतविधानेन पूर्वस्वरस्यानुनासिकः। 'वृक्षं यद् गावः' ( सं० १.२.३ ) 'पितरं वरुणम्' ( सं० १.३.३ ) 'संराधयन्तः सधुराः' ( सं० ३.३०.५ ), 'पराद्य देवा वृजिनं शृणन्तु' ( सं० ८.३.१४ ) 'न्योषतं हतम्' ( सं० ८.४.१ ) इत्यादिषु स्थलेषु 'अन्तःस्थोष्मसु लोपः' ( २.१.३२ ) इत्यनेन मकारलोपे जाते पूर्वस्यानुनासिक. ॥ ५ ॥

## शशिकला

नकार तथा मकार का लोप होने पर पूर्ववर्ती स्वर का अनुनासिक हो जाता है। जैसे--'द्वे च मे विंशतिश्च मे'[१] 'पयाँस्युत्तमे'[२] इन उदाहरणों में ऊष्म वर्ण बाद में होने पर पद के मध्य में भी मकारलोप हो जाता है' इस विधान से मकार का लोप होने पर प्रस्तुत विधान के अनुसार पूर्वस्वर का अनुनासिक हो जाता है। 'वृक्षं यद् गावः'[३] 'पितरं वरुणम्'[४] 'संराधयन्तः सधुराः'[५] 'पराद्य देवा वृजिनं शृणन्तु'[६] 'न्योषतं हतम्'[७] इत्यादि स्थलों पर 'अन्तःस्थ तथा ऊष्म वर्ण बाद में होने पर मकार का लोप हो जाता है' इस विधान से मकार का लोप हो जाने पर पूर्ववर्ती वर्ण का अनुनासिक हो जाता है ॥ ५ ॥

## यरोष्मापत्तौ च ॥ ६ ॥

सू० अ० –( नकार तथा मकार का ) यकार, रेफ तथा ऊष्म होने पर भी ( पूर्ववर्ती स्वर अनुनासिक हो जाता है )।

---

१. द्वे इति। च। मे। विंशति। च। मे ( प० पा० )
२. पयांसि। उत्तमेन ( प० पा० )
३. वृक्षम्। यत्। गावः ( प० पा० )
४. पितरम्। वरुणम् ( प० पा० )
५. सम्-राधयन्तः। स-धुराः ( प० पा० )
६. परा। अद्य। देवाः। वृजिनम्। शृणन्तु। ( प० पा० )
७. नि। ओषतम्। हतम् ( प० पा० )

## निर्मलभाष्यम्

सूत्रे प्रयुक्तः चशब्दो नकारमकारयोरित्यन्वादिशति। यत्र नकारस्य मकारस्य च यकारः, रेफ ऊष्मन् वा भवति तत्रापि पूर्वस्य स्वरस्य अनुनासिकः। यथा—'रथाँ इव' (५.१३.६) 'सालावृकाँ इव' (सं० २.२७.५) 'खल्वाँ इव' (सं० २.३१.१) एषु आकारात् नकारस्य स्वरे परे 'आकारोपधस्योपबद्धादीनां स्वरे' (२.१.२७) इत्यनेन विसर्जनीयः। प्रस्तुतसूत्रेण पूर्वस्य 'अनुनासिकश्च। तद्विसर्जनीयस्य 'स्वरे यकारः' (२.२.२) इत्यनेन यकारः तद्यकारस्य 'स्वराद्यवयो पदान्तयोः' (२.१.२१) इत्यनेन लोपः भवति। 'ऋतूँरुत् सृजते वशी' (सं० ६.३६.२) 'मो षु पणीँरभि' (सं० ५.११.७) 'दस्यूँरुत बोधि' (सं० ४.३२.६)। एषु 'नाम्युपधस्य रेफ ऋतूँरुत्सृजते वशीत्येवमादीनाम्' (२.१.२९) इत्यनेन नाम्युपधस्य नकारस्य रेफः। प्रस्तुतविधानेन पूर्वस्य अनुनासिकश्च॥ ६॥

## शशिकला

सूत्र में प्रयुक्त 'च' से नकार तथा मकार का यहाँ अन्वादेश होता है। जहाँ नकार तथा मकार का यकार, रेफ अथवा ऊष्मन् होता है वहाँ भी पूर्ववर्ती स्वर का अनुनासिक हो जाता है। जैसे 'रथाँ इव'[1] 'सालावृकाँ इव'[2] 'खल्वाँ इव'[3] इन उदाहरणों में आकार के बाद में नकार का, 'स्वर बाद होने पर 'उपबद्ध इत्यादि में आकार उपधा वाले नकार का विसर्जनीय हो जाता है' इस विधान से विसर्जनीय हो जाता है तथा प्रस्तुत सूत्र से पूर्ववर्ती स्वर आकार का अनुनासिक हो जाता है। उस विसर्जनीय का 'स्वर बाद में होने पर विसर्जनीय का यकार हो जाता है' से स्वर बाद में होने से यकार हो जाता है तथा उस यकार का 'स्वर से परवर्ती यकार तथा वकार का लोप हो जाता है' से लोप हो जाता है। 'ऋतूँरुत् सृजते वशी'[4] 'मो षु पणीँरभि'[5] 'दस्यूँरुत बोधि'[6] इन उदाहरणों में 'नामिन् उपधा वाले नकार

---

१. रथान्। इव (प० पा०)
२. सालावृकान्। इव (प० पा०)
३. खल्वान्। इव (प० पा०)
४. ऋतून्। उत्। सृजते। वशी (प० पा०)
५. मो। षु। पणीन्। अभि (प० पा०)
६. दस्यून्। उत्। बोधि (प० पा०)

का रेफ हो जाता है' से नामिन् उपधा वाले नकार का रेफ हो जाता है तथा प्रस्तुत विधान से पूर्ववर्ती वर्ण नामिन् उपधा का अनुनासिक हो जाता है ॥ ६ ॥

## अनुनासिकस्य च पूर्वेणैकादेशे ॥ ७ ॥

**सू० अ०**—पूर्ववर्ती के साथ एकादेश होने पर अनुनासिक का (पूर्व-वर्ण अनुनासिक होता है)।

### निर्मलभाष्यम्

**पूर्वेण** स्वरेण सह **एकादेशे** एकीभावादेशे **अनुनासिकस्य च** परानुनासिकस्थाने सन्धिजः पूर्वानुनासिकः। यथा—'उभावुपांशु प्रथमा पिबावः' ( सं० ४ ३२.७ ) 'सोमस्यांशो युधाम्' ( सं० ७.८१.३ ), 'ये व्रीहयो यवा निरूप्यन्तेँऽशवः' ( सं० ९.६.१४ ) इत्यादयः ॥ ७ ॥

### शशिकला

पूर्ववर्ती स्वर के साथ एकादेशभाव होने पर परवर्ती अनुनासिक के स्थान पर सन्धिज पूर्ववर्ती स्वर अनुनासिक हो जाता है। जैसे—'उभावुपांशु प्रथमा पिबावः'[1] 'सोमस्यांशो युधाम्'[2] 'ये व्रीहयो यवा निरूप्यन्तेँऽशवः'[3] इत्यादि ॥ ७ ॥

## पुरुष आ बभूवाँ इत्यवसाने ॥ ८ ॥

**सू० अ०**—अवसान में 'पुरुष आ बभूवाँ' (का आकार अनुनासिक होता है।

### निर्मलभाष्यम्

**अवसाने** अवसानविद्यमाने **'पुरुष आ बभूवाँ'** इत्यस्य आकारः अनुनासिकः भवति। यथा—'सर्वा दिशः पुरुष आ बभूवाँ३' ( सं० १०.२ २८ ) इत्यत्र अवसानस्थ 'पुरुष वा बभूवाँ' इत्यस्य आकारः अनुनासिकः। पदपाठेऽपि संहितावद् 'बभूवाँ३' इत्येव प्राप्यते, तस्य मूलरूपं न। परञ्च क्रमपाठे तस्य मूलरूपं दृश्यते—बभूवेति बभूव ( क्र० पा० ) ॥ ८ ॥

---

१. उभौ। उप। अंशुः। प्रथमा। पिबावः ( प० पा० )
२. सोमस्य। अंशः। ( प० पा० )
३. ये। व्रीहयः। यवाः। निरूप्यन्ते। अंशवः ( प० पा० )

७

### शशिकला

अवसान में स्थित 'पुरुष आ बभूवाँ' का आकार अनुनासिक होता है। जैसे—'सर्वाः दिशः पुरुष आ बभूवाँ३'[1] यहाँ अवसानस्थ 'पुरुष आ बभूवाँ३' का आकार अनुनासिक होता है। पदपाठ में संहिता के समान ही 'बभूवाँ३' प्राप्त होता है, उसका मूलरूप नहीं। किन्तु क्रमपाठ में उसका मूलरूप दिखाई पड़ता है बभूवेति बभूव ( क्र० पा० ) ॥ ८ ॥

## ऋवर्णस्य रेफात्परं यत् ॥ ९ ॥

**सू० अ०** —ऋवर्ण का रेफ से परवर्ती ( जो स्वर है ) वह ( अनुनासिक होता है )।

### निर्मलभाष्यम्

'संस्पृष्टरेफमृवर्णम्' 'दीर्घप्लुतयो पूर्वामात्रा' ( १.१.३७,३८ ) इत्यनेन निर्दिष्टं यद् ऋकारे पूर्वभागः रेफः विद्यते। **ऋवर्णस्य** पूर्वभागात् **रेफात् परं यत्** स्वरभागः विद्यते सोऽपि अनुनासिकं भवति। यथा—'भूमिदृँहमच्युतम् पारयिष्णु' ( सं० ५.२८.१४ ) 'दृँह प्रत्नाञ्जनया जातान्' ( सं० ६ १३६.२ ) 'जनान् दृँहन्तं वज्रेण' ( सं० १२.२.९ ) 'कर्तृँन्नक्षस्व' ( सं० १०.१.१४ ) ॥ ९ ॥

### शशिकला

'ऋवर्ण रेफ से संस्पृष्ट होता है' 'दीर्घ तथा प्लुत ऋवर्ण में पूर्ववर्ती मात्रा ( रेफ की होती है )' ( १.१.३७-३८ ) इस विधान द्वारा यह निर्दिष्ट किया गया है कि ऋवर्ण में पूर्ववर्ती भाग रेफ होता है। उस ऋकार के पूर्ववर्ती भाग रेफ से बाद वाला जो स्वर का भाग है वह अनुनासिक होता है। जैसे -'भूमिदृँहमंच्युतम् पारयिष्णु'[2] 'दृँह प्रत्नाञ्जनयाजाताम्'[3] 'जनान् दृँहन्तं वज्रेण'[4] 'कर्तृँन्नक्षस्व'[5] ॥ ९ ॥

---

१. सर्वाः। दिशः। पुरुषः। आ। बभूवाँ३ ( प० पा० )
२. भूमि-दृँहम्। अच्युतम् ( प० पा० )
३. दृँह। प्रत्नान्। जनय। अजातान् ( प० पा० )
४. जनान्। दृँहन्तम्। वज्रेण ( प० पा० )
५. कर्तृँन्। अक्षस्व ( प० पा० )

## उकारस्येतावपृक्तस्य ॥ १० ॥

**सू० अ०**—इति बाद में होने पर अपृक्त उकार का ( अनुनासिक हो जाता है )।

### निर्मलभाष्यम्

सूत्रकारेण अपृक्तसंज्ञा प्रयुक्ता परं च तस्या विधानं न कृतम्। तैत्तिरीयप्रातिशाख्यानुसारं पदात्मक एकवर्णोऽपृक्तसंज्ञो भवति--'एकवर्णः पदमपृक्तः' ( तै० प्रा० १.५४ )। **इतौ** इतिपरे सति **अपृक्तस्य उकारस्य** अनुनासिकः भवति। पदपाठविषयकविधानमिदम्। यथा – 'स्तुष ऊ षु' ( सं० १८१.३७ )। 'ऊँ इति' पदपाठे ॥ १० ॥

### शशिकला

सूत्रकार ने अपृक्त संज्ञा का प्रयोग किया है किन्तु उसका विधान नहीं किया है। तैतिरीयप्रातिशाख्य के अनुसार एक वर्ण वाला पद अपृक्त कहलाता है ( तै० प्रा० १ ५४ )। इति बाद में होने पर अपृक्त उकार का अनुनासिक हो जाता है। यह पदपाठ विषयक विधान है। जैसे—'स्तुष ऊ षु'[1]। पदपाठ में 'ऊँ इति' यह पाठ होता है ॥ १० ॥

[ प्रगृह्यसंज्ञाविधानम् ]

## दीर्घः प्रगृह्यश्च ॥ ११ ॥

**सू० अ०**—( अपृक्त उकार ) दीर्घ तथा प्रगृह्य होता है।

### निर्मलभाष्यम्

अपृक्त ऊकारः **दीर्घः** भवति **प्रगृह्यश्च**। अत्र प्रगृह्यसंज्ञाऽपि उक्ता। अपृक्त ऊकारः प्रगृह्यः च भवति। यथा—'महिमू षु' ( सं० ७.६.२ ) 'अन्यमू षु' ( सं० १८.११६ ) 'स्तुष ऊ षु' ( सं० १८१.३७ ) 'त्यमू षु' ( सं० ७.८५.१ )। प्रगृह्यसंज्ञायाः प्रयोजनम्—'प्रगृह्याश्च प्रकृत्या' ( ३.२८ ) इत्यादयः ॥ ११ ॥

### शशिकला

अपृक्त ऊकार दीर्घ तथा प्रगृह्य होता है। यहाँ प्रगृह्य संज्ञा का भी कथन किया गया है। अपृक्त ऊकार प्रगृह्य होता है। जैसे—'महिमू षु'[2]

---

१. स्तुषः। ऊँ इति। सु ( प० पा० )

२. महिम्। ऊँ इति। सु ( प० पा० )

'अन्यमू षु'[1] 'स्तुष ऊ षु'[2] 'त्यम् षु'[3]। प्रगृह्य संज्ञा का प्रयोजन—'प्रगृह्य भी प्रकृतिभाव से रहते हैं' ( ३.२.८ ) इत्यादि ॥ ११ ॥

## ईकारोकारौ च सप्तम्यर्थे ॥ १२ ॥

सू० अ०—सप्तमी ( विभक्ति ) के अर्थ वाले ( पद के अन्त ) में ईकार तथा ऊकार ( प्रगृह्य होते हैं )।

### निर्मलभाष्यम्

प्रगृह्यसंज्ञाविधायकं सूत्रमिदम्। 'च' इत्ययं पूर्वसूत्रात् 'प्रगृह्यः' इत्यस्यान्वादेशकः। **सप्तम्यर्थे** सप्तम्यर्थाभिधाने **ईकारौकारौ** ईकारश्च ऊकारश्च प्रगृह्यसंज्ञकः भवति। यथा—'अतो जातासो धारयन्त ऊर्वी' ( सं० १८.१.३२ ) 'मही न वाताः' ( सं० १८.१.३९ ) इत्यत्र उर्वी मही इत्येतयोः ईकारः सप्तम्यर्थे विद्यते। अत एव प्रगृह्यः। 'तनू दक्षमा सुरताम्' ( सं० ४.२९.५ ) इत्यत्र तनू इत्यस्य ऊकारः सप्तम्यर्थे विद्यते अतएव प्रगृह्य एव। प्रयोजनन्तु उक्तमेव ॥ १२ ॥

### शशिकला

यह सूत्र प्रगृह्य संज्ञा-विधायक है। सूत्र में प्रयुक्त च शब्द पूर्ववर्ती सूत्र से 'प्रगृह्य' का अन्वादेश करता है। सप्तमी के अर्थ में ईकार तथा ऊकार प्रगृह्य संज्ञक होते हैं। जैसे —'अतो जातासो धारयन्त उर्वी'[4] 'मही नो वाताः'[5] यहाँ ऊर्वी तथा मही का ईकार सप्तमी अर्थ में प्रयुक्त है अतः प्रगृह्य है। 'तनू दक्षमा सुरताम्'[6] यहाँ तनू का ऊकार भी सप्तमी अर्थ में है अतः यह भी प्रगृह्य है। प्रगृह्य संज्ञा का प्रयोजन तो पहले कहा जा चुका है'[7] ॥ १२ ॥

---

१. अन्यः। ऊँ इति। सु ( प० पा० )
२. स्तुषः। ऊँ इति। सु ( प० पा० )
३. त्यम्। ऊँ इति। सु ( प० पा० )
४. अतः। जातासः। धारयन्तः। उर्वी इति (प० पा०)
५. मही इति। नः। वातः (प० पा०)
६. तनू इति। दक्षम्। आ। सुरताम् (प० पा०)
७. द्रष्टव्य १ ३.११ की व्याख्या।

## द्विवचनान्तौ ॥ १३ ॥

सू० अ०—द्विवचन ( वाले पद ) के अन्त में ईकार तथा ऊकार ( प्रगृह्य होते हैं )।

### निर्मलभाष्यम्

इदमपि प्रगृह्यसंज्ञाविधायकं सूत्रम्। **द्विवचनान्तौ** द्विवचनस्य पदस्य अन्ते विद्यमानौ ईकारोकारौ प्रगृह्यसंज्ञकौ भवतः। यथा—'केन पार्ष्णी आभृते' ( सं० १०.२१ ) 'उभाविन्द्राग्नी आ भरताम्' ( सं० ५.७.६ ) इत्यत्र 'पार्ष्णी' 'इन्द्राग्नी' इत्येतयोः ईकारः द्विवचनान्तः अत एव प्रगृह्य। 'इन्द्रवायू उभौ' ( सं० ३.२०.६ ) इत्यत्र 'इन्द्रवायू' इत्यस्य ऊकारः द्विवचनान्तः अत एव प्रगृह्यः। संज्ञायाः प्रयोजनं पूर्वमुक्तम् ॥ १३ ॥

### शशिकला

यह भी प्रगृह्यसंज्ञा विधायक सूत्र है। द्विवचन वाले पद के अन्त में विद्यमान भी ईकार तथा ऊकार प्रगृह्य होते हैं। जैसे 'केन पार्ष्णी आभृते'[1] 'उभाविन्द्राग्नी आ भरताम्'[2] यहाँ पार्ष्णी तथा इन्द्राग्नी का ईकार द्विवचनान्त होने से प्रगृह्य है। इन्द्रवायू उभौ'[3] यहाँ इन्द्रवायू का ऊकार द्विवचनान्त है, अतः प्रगृह्य है। प्रगृह्य सज्ञा का प्रयोजन तो पहले ही कहा जा चुका है[4] ॥ १३ ॥

## एकारश्च ॥ १४ ॥

सू० अ०—( द्विवचन वाले पद के अन्त में विद्यमान ) एकार भी ( प्रगृह्य होता है )।

### निर्मलभाष्यम्

अत्रापि प्रगृह्यसंज्ञा विहिता। **च**शब्दः द्विवचनान्तौ इत्यन्वादिशति। द्विवचनान्ते विद्यमानः **एकारश्च** एकारोऽपि प्रगृह्यः भवति। यथा—'अत्रा दधेते' ( सं० ५ १ ३ ) 'रोधचक्रे वावृधेते' ( सं० ५.१.५ ) 'सम् पितरा-वृत्विये' (सं० १४.२.३७) इत्यादयः। संज्ञायाः प्रयोजनं पूर्वमेवोक्तम् ॥१४॥

---

१. केन। पार्ष्णी इति। आभृते (प० पा०)

२. उभौ। इन्द्राग्नी इति। आ। भरताम् (प० पा०)

३. इन्द्रवायू इति। उभौ (प० पा०)

४. द्रष्टव्य १.३.११ की व्याख्या।

## शशिकला

यहाँ भी प्रगृह्य संज्ञा का विधान किया गया है। चकार द्विवचनान्त का अन्वादेशक है। द्विवचन वाले पद के अन्त में विद्यमान एकार भी प्रगृह्य होता है। जैसे—'अत्रा दधेते'[1] 'रोधचक्रे वावृधेते'[2] 'सम् पितरा-वृत्विये'[3] इत्यादि। संज्ञा का प्रयोजन तो पहले ही कहा जा चुका है ॥१४॥

## अस्मे युष्मे त्वे मे इति चोदात्तः ॥ १५ ॥

सू० अ० अस्मे. युष्मे, त्वे तथा मे ( का ) उदात्त पदान्तीय एकार ( प्रगृह्य होता है )।

## निर्मलभाष्यम्

**अस्मे युष्मे त्वे मे** इत्येतस्य **उदात्तश्च** एकारः प्रगृह्यः। यथा – 'रुणयंन्त्वस्मे' ( सं० ४ २१. १ ) आ धेंह्यस्मे' ( सं० १८. १. ४२ )। 'त्वे क्रतुमपिं' ( सं० ५ २.३ ) 'पश्यंन्ति त्वे न त्वे पंश्यन्त्येनाम्' (सं ८. ९ ९)। 'युष्मे' 'मे' इत्यस्य निदर्शनम् अथर्ववेदस्य शौनकशाख्यायाः संहितायां न दृश्यते। सम्भवतः शाखान्तरे आसीद् यस्मात् सूत्रकारेण अत्र एनयोरपि निर्देशं कृतम् ॥ संज्ञाप्रयोजनन्तु प्रागेव निर्दिष्टम् ॥ १५ ॥

## शशिकला

अस्मे युष्मे त्वे तथा मे का उदात्त एकार प्रगृह्य कहलाता है। जैसे—'रुणयंन्त्वस्मे'[4] 'आ धेंह्यस्मे'[5] 'त्वे क्रतुमपिं'[6] 'पश्यंन्ति त्वे न त्वे पश्यन्त्येनाम्'[7]। 'युस्मे' तथा मे' का उदाहरण अथर्ववेद की शौनक शाखा की विद्यमान संहिता में नहीं मिलता। सम्भव है कि किसी अन्य शाखा की संहिता में रहा हो जिसके लिए सूत्रकार ने इनका भी निर्देश किया है। संज्ञा का प्रयोजन तो पहले ही कहा जा चुका है ॥ १५ ॥

---

१. अत्र। आ। दधेते इति (प० पा०)
२. रोधचक्रे इति। वावृधेते इति (प० पा०)
३. सम्। पितरौ। ऋत्विये इति (प० पा०)
४. रणयन्तु। अस्मे इति ( प० पा० )
५. आ। धेहि। अस्मे इति। ( प० पा० )
६. त्वे इति। क्रतुम्। अपि। ( प० पा० )
७. पश्यन्ति। त्वे इति। न। त्वे इति। पश्यन्ति। एनाम् ( प० पा० )

## अमी बहुवचनम् ॥ १६ ॥

सू० अ० बहुवचन वाला अमी ( का ईकार प्रगृह्य होता है )।

### निर्मलभाष्यम्

इदमपि प्रगृह्यसंज्ञाविधायकं सूत्रम्। **बहुवचनं** बहुवचने प्रयुक्तस्य **'अमी'** इत्यस्य पदस्य ईकारः प्रगृह्यसंज्ञः भवति। यथा—'अमी ये युधम्' ( सं० ६.१०३.३ ) 'अमी ये विव्रता' ( सं० ३.८.५ )। संज्ञाप्रयोजनन्तु उक्तमेव। अत्र प्रगृह्यसंज्ञायां पुनः ग्रहणमीकारस्य द्विवचनान्तसप्तम्यर्थ-निवृत्त्यर्थम् ॥ १६ ॥

### शशिकला

यह भी प्रगृह्यसंज्ञा का विधायक सूत्र है। बहुवचन वाले 'अमी' पद का ईकार प्रगृह्य होता है। जैसे 'अमी ये युधम्'[1] 'अमी ये विव्रताः'[2] इत्यादि। संज्ञा का प्रयोजन तो कहा ही जा चुका है। यहाँ प्रगृह्य संज्ञा में ईकार का प्रगृह्य के अन्तर्गत पुनः ग्रहण द्विवचनान्त तथा सप्तमी अर्थ के निवारण के लिए हुआ है ॥ १६ ॥

## निपातोऽपृक्तोऽनाकारः ॥ १७ ॥

सू० अ० आकार ( आ ) से अन्य अपृक्त निपात ( प्रगृह्य होता है )।

### निर्मलभाष्यम्

एकवर्णपदमपृक्तम्। आ उ ओ इत्येते त्रयः अपृक्ताः निपाताश्च। एषु त्रिषु अपृक्तनिपातेषु आकारादन्यः निपातः उ ओ इति। उकारस्य प्रगृह्यत्वं 'दीर्घः प्रगृह्यश्च' (१.३.११) इत्यनेनोक्तम्। अत एव अत्र ओकारस्य प्रगृह्यत्वमेव विहितम्। अपृक्तः निपातः ओकारः प्रगृह्यसंज्ञः भवति। यथा –'ओ चित्सखायम्' ( सं० १८.१.१ ) श्रातं हविरो षु' ( सं० ७ ७२. २ )। अनाकार इति किम्? 'पुनरेहि वाचस्पते' ( सं० १.१.२ ) इत्यत्र माभूत्। प्रयोजनन्तु उक्तमेव ॥ १७ ॥

### शशिकला

एक वर्ण वाला पद अपृक्त कहलाता है। आ, उ तथा ओ– ये तीन अपृक्त निपात हैं। इन तीनों निपातों में आकार से अन्य उ तथा ओ हैं।

१. अमी इति। ये। युधम् ( प० पा० )
२. अमी इति। ये। वि—व्रता ( प० पा० )

उ का प्रगृह्यत्व '( उ ) दीर्घ तथा प्रगृह्य ( होता है )' इस विधान में कह दिया गया है। यहाँ ओकार के प्रगृह्य होने का कथन किया गया है। अपृक्त निपात ओकार प्रगृह्य संज्ञक होता है। जैसे—'ओ चित् सखायाम्'[1] 'श्रातं हविरो षु'[2]। सूत्र में आकार से अन्य - यह क्यों कहा गया ? 'पुनरेहि वाचस्पते'[3] यहाँ आकार प्रगृह्य न होवे। प्रयोजन तो कहा ही जा चुका है[4] ॥ १७ ॥

## ओकारान्तश्च ॥ १८ ॥

सू० अ०—( पद के ) अन्त वाला ओकार भी ( प्रगृह्य होता है )।

### निर्मलभाष्यम्

चशब्दोऽत्र प्रगृह्यः इत्यन्वादिशति। ओकारान्तः पदस्यान्ते विद्यमान ओकारः प्रगृह्यसंज्ञः भवति। यथा—'दोषो गाय' ( सं० ६ १.१ ) 'अङ्गो न्वर्यमन्' ( सं० ६.६०.२ ) 'दत्तो अस्मभ्यम्' ( सं० १८.३.१४ ) 'अत्तो हवींषि' ( सं० १८.३.४४ ) इत्यादयः। संज्ञायाः प्रयोजनं प्रागुक्तमेव ॥ १८ ॥

### शशिकला

चशब्द 'प्रगृह्य' का अन्वादेश करता है। पद के अन्त में विद्यमान ओकार प्रगृह्य संज्ञक होता है। जैसे - 'दोषो गाय'[5] 'अङ्गो न्वर्यमन्'[6] 'दत्तो अस्मभ्यम्'[7] 'अत्तो हवींषि'[8] इत्यादि। संज्ञा का प्रयोजन पहले कहा ही जा चुका है ॥ १८ ॥

## आमन्त्रितं चेतावनार्षे ॥ १९ ॥

सू० अ०—पदपाठ में भी इति बाद में होने पर आमन्त्रित ( पद का अन्त्य ओकार प्रगृह्य होता है )।

---

१. ओ इति। चित्। सखायम् ( प० पा० )
२. श्रातम्। हविः। ओ इति। सु ( प० पा० )
३. पुनः। आ। इहि। वाचस्पत इति वाचः—पते ( प० पा० )
४. द्रष्टव्य १.३.११ की व्याख्या
५. दोषो इति। गाय ( प० पा० )
६. अङ्गो इति। नु। अर्यमन् ( प० पा० )।
७. दत्तो इति। अस्मभ्यम् ( प० पा० )
८. अत्तो इति। हवींषि ( प० पा० )

### निर्मलभाष्यम्

चशब्दः पूर्वसूत्राद् ओकारान्तः इत्यस्यान्वादेशकः। अनार्षे संहितायामविद्यमाने पदपाठे इत्यर्थः। अनार्षे पदपाठे **इतौ आमन्त्रितं** सम्बोधनपदस्यान्ते विद्यमानः ओकारः प्रगृह्यसंज्ञः भवति। यथा—'त्वय्युदिते प्रेरते चित्रभानो' ( सं० ४.२५.३ ) 'युवं वायो सविता' ( ४.२५.३ ) 'मन्यो अक्रतुः' ( सं० ४. ५.५ ) 'मन्यो वज्रिन्' ( सं० ४.३२.६ ) इत्यादयः। अनार्षे इति किम्? 'वाय ऊतये' ( सं० ४.२५.६ ), 'मन्य ईडिता' ( ४ ३१.४ ) 'बभ्र आ मे शृणुत ( सं० ५ १३ ५ ) इत्यादिषु माभूत्। प्रयोजनन्तूक्तमेव ॥ १९ ॥

### शशिकला

चशब्द पूर्वसूत्र से 'ओकारान्त' का अन्वादेशक है। अनार्ष=संहिता में न विद्यमान, पदपाठ में—यह अर्थ है। अनार्ष=पदपाठ में, इति बाद में होने पर, आमन्त्रित सम्बोधन वाले, पद के अन्त में विद्यमान ओकार प्रगृह्यसंज्ञक होता है। जैसे—'त्वय्युदिते प्रेरते चित्रभानो' युवं वायो सविता'[२] मन्यो अक्रतुः'[३] 'मन्यो वज्रिन्'[४] इत्यादि। सूत्र में 'अनार्ष में' यह क्यों कहा गया? 'वाय ऊतये'[५] 'मन्य ईडिता'[६] 'बभ्र आ मे'[७] इत्यादि में आमन्त्रित पदान्त ओकार प्रगृह्य न होवे। संज्ञा का प्रयोजन तो पहले कहा ही जा चुका है ॥ १९ ॥

## आर्त्नी इवादिष्विवशादितिपरः ॥ २० ॥

**सू० अ०**—'आर्त्नी इव' इत्यादि में ( ईकार इत्यादि ) प्रगृह्य होता है ( यदि पदपाठ में ) इव से बाद में इति हो।

### निर्मलभाष्यम्

**'आर्त्नी इव' आदिषु** इत्यादिषु ईकारादिः प्रगृह्यः भवति चेत् पदपाठे **इवात्** 'इव' इत्यतः **परः इति** स्यात्। यथा—'आर्त्नी इव' ( सं० १.१.३ )।

---

१. त्वयि। उदिते। प्रेरते। चित्रभानो इति चित्र-भानो ( प० पा० )
२. युवम्। वायो इति। सविता ( प० पा० )
३. मन्यो इति। अक्रतुः ( प० पा० )
४. मन्यो इति। वज्रिन् ( प० पा० )
५. वायो। ऊतये ( प० पा० )
६. मन्यो। ईडिता ( प० पा० )
७. बभ्रो। आ। मे इति। ( प० पा० )

सूत्रे प्रयुक्तेन 'आदिषु' इत्यनेन ज्ञायते यद् अन्यत्रापि भवति। तद्विषये इमानि निदर्शनानि द्रष्टव्यानि—'धर्मंदुघे इव' ( सं० ४.२२.४ ) 'नृपती इव ( सं० ८.४ ६ ) 'यमे इव' ( सं० १८ ३.३८ ) ॥ २० ॥

**शशिकला**

'आर्त्नी इव' इत्यादि में ईकार इत्यादि प्रगृह्यसंज्ञक होता है यदि पदपाठ में इव से बाद में इति हो। जैसे—आर्त्नी इव'[1]। सूत्र में प्रयुक्त 'आदिषु' से ज्ञात होता है कि अन्यत्र भी प्रगृह्य होता है। उस विषय में ये उदाहरण ध्यातव्य हैं—'धर्मंदुघे इव'[2] नृपती इव'[3] 'यमे इव'[4] ॥२०॥

[ ह्रस्वानुनासिकविधानम् ]

## अनुनासिकोऽन्तःपदे ह्रस्वः ॥ २१ ॥

**सू० अ०**—पद के मध्य में अनुनासिक ह्रस्व होता है।

**निर्मलभाष्यम्**

**अन्तःपदे** पदमध्ये विद्यमानः **अनुनासिकः ह्रस्वः** भवति। यथा—'द्वे च मे विंशतिश्च' ( सं० ५.१५.२ ) 'तिस्रश्च मे त्रिंशच्च' (सं० ५.१५.३) 'चतस्रश्च मे चत्वारिंशश्च' ( सं० ५.१४.४ ) 'पुमान् पुंसः' ( ३.६.१ ) इत्यत्र अन्तःपदे विद्यमानः 'विंशतिः' 'त्रिंशत्' 'चत्वारिंशः' 'पुसः' इत्यस्यानुनासिक ह्रस्वः। ह्रस्वस्यानुनासिकस्योच्चारणकालः एकमात्रा भवति ॥ २१ ॥

**शशिकला**

पद के मध्य में विद्यमान अनुनासिक ह्रस्व होता है। जैसे—'द्वे च मे विंशतिश्च'[5] तिस्रश्च मे त्रिंशच्च[6] चतस्रश्च मे चत्वारिंशश्च'[7] 'पुमान् पुंसः'[8]। यहाँ पद के मध्य में विद्यमान विंशतिः 'त्रिंशत्' चत्वारिंशः' 'पुंसः' का अनुनासिक ह्रस्व है। ह्रस्व अनुनासिक का उच्चारणकाल एक मात्रा में होता है ॥ २१॥

---

१. आर्त्नी इवेत्यार्त्नी-इव ( प० पा० )
२. धर्मंदुघ इवेति धर्मंदुघे-इव ( प० पा० )
३. नृपति इवेति नृपति-इव ( प० पा० )
४. यम इवेति यमे-इव ( प० पा० )
५. द्वे इति। च। मे इति। विंशतिः। च ( प० पा० )
६. तिस्रः। च। मे इति। त्रिंशत्। च ( प० पा० )
७. चतस्रः। च। मे इति। चत्वारिंशः। च ( प० पा० )
८. पुमान्। पुंसः ( प० पा० )

[ दीर्घानुनासिकविधानम् ]

## दीर्घो नपुंसकबहुवचने ॥ २२ ॥

**सू० अ०**—नपुंसकलिङ्ग के बहुवचन में ( अन्तःपद में ) अनुनासिक दीर्घ होता है।

### निर्मलभाष्यम्

पूर्वस्यापवादोऽयम्। अन्तःपदे **नपुंसकबहुवचने** नपुंसकलिङ्गस्य पदस्य बहुवचने विद्यमानः अनुनासिकः **दीर्घः** भवति। यथा -'प्रत्यक्षं परूँषि यस्य सम्भाराः' ( सं० ९.६.१ ) 'यजूँषि होत्रा ब्रूमः' ( सं० ११.६.१४ ) 'अत्तो हवीँषि प्रयतानि' ( सं० १८.३.४४ ) इत्यत्र नपुंसकलिङ्गबहुवचने विद्यमानः 'परूँषि' 'यजूँषि' हवींषि इत्यस्यानुनासिकः दीर्घः। दीर्घस्यानुनासिकस्योच्चारणकालः द्विमात्रा भवति ॥ २२ ॥

### शशिकला

यह पूववर्ती विधान का अपवाद है। नपुंसक लिङ्ग के बहुवचन वाले पद में विद्यमान अनुनासिक दीर्घ होता है। जैसे 'प्रत्यक्षं परूँषि यस्य सम्भारा.'[1] 'यजूँषि होत्रा ब्रूमः'[2] 'अत्तो हवीँषि प्रयतानि'[3] यहाँ नपुंसकलिङ्ग बहुवचन वाले पद 'परूँषि' यजूंषि तथा हवीँषि के मध्य में विद्यमान अनुनासिक दीर्घ है। दीर्घ अनुनासिक का उच्चारण दो मात्राकाल में होता है ॥ २२ ॥

## पांसुमांसादीनाम् ॥ २३ ॥

**सू० अ०**—पांसु तथा मांस इत्यादि का ( अनुनासिक दीर्घ होता है )।

### निर्मलभाष्यम्

**'पाँसु' 'माँस' आदीनाम्** इत्यादीनामनुनासिकः दीर्घः भवति। यथा—'पाँसून् अक्षेभ्यः' ( सं० ७.१०९.२ ) 'समूढमस्य पाँसुरे' ( सं० ७.२६.४ ) माँसं माँसेन' ( सं० ४.१२.४ ) इत्यत्र 'पाँसून्' पाँसुरे' 'माँसम्' 'माँसेन' इत्येषामनुनासिकः दीर्घः भवति। सूत्रे प्रयुक्तेन 'आदीनाम्' इत्यनेन ज्ञायते यद् अन्यत्रापि भवति। तद्विषये इदमपि निदर्शनं गृहीतव्यम्—'शाँशपेन' ( सं० ६.१२९.१ ) ॥ २३ ॥

---

१. प्रत्यक्षम्। परूँषि। यस्य। सम्-भाराः ( प० पा० )

२. यजूँषि। होत्रा। ब्रूमः ( प० पा० )

३. अत्तो इति। हवींषि ( प० पा० )

### शशिकला

'पाँसु' 'माँस' इत्यादि का अनुनासिक दीर्घ होता है। जैसे 'पाँसून् अक्षेभ्यः'[१] 'समूढमस्य पाँसुरे'[२] 'माँसं माँसेन'[३]। यहाँ 'पाँसून्' 'पाँसुरे' माँसं तथा माँसेन का अनुनासिक दीर्घ है। सूत्र में प्रयुक्त 'आदीनाम्' से ज्ञात होता है कि इससे अन्य स्थल पर भी अनुनासिक दीर्घ होता है इस विषय में यह उदाहरण ग्रहणीय है—'शाँशपेन साकम्'[४] ॥ २३ ॥

## हनिगम्योः सनि ॥ २४ ॥

**सू० अ०**—( इच्छार्थक ) सन् प्रत्यय बाद में होने पर हन् तथा गम् धातुओं का ( अनुनासिक अन्तःपद में दीर्घ होता है )।

### निर्मलभाष्यम्

इच्छार्थके **सनि** 'सन्' प्रत्यये परे **हनिगम्योः** 'हन्' 'गम्' इत्यनयोः अनुनासिकः अन्तःपदे दीर्घं भवति। यथा—'यस्तेनान्यं जिघाँसति' ( सं० ४.१८.३ ) 'जिघाँसन्न उदीरते' ( सं० ६.९९.२ ) 'यदा स्थाम जिघाँसति' ( सं० १२.४.२९,३० )। गम् धातो निदर्शनं शौनकशाखायाः विद्यमानसंहितायां न दृश्यते। सम्भवतः अथर्वचरणस्य अन्यशाखायाः लुप्तसंहितायामासीत्। यत्कृते सूत्रकारेण सूत्रे गम्धातोरपि ग्रहणं कृतम् ॥ २४ ॥

### शशिकला

इच्छार्थक सन् प्रत्यय बाद में होने पर हन् तथा गम् धातुओं का अनुनासिक पद के मध्य में दीर्घ होता है। जैसे—'यस्तेनान्यं 'जिघाँसति'[५] जिघाँसन्न उदीरते'[६] 'यदा स्थाम जिघाँसति'[७]। गम् धातु का उदाहरण शौनकशाखा की वर्तमान संहिता में उपलब्ध नहीं होता। सम्भवतः अथर्वचरण की किसी अन्य शाखा की संहिता में था जिसके लिए सूत्रकार ने सूत्र में गम् धातु का भी ग्रहण किया है। वह संहिता आज लुप्त हो गई है ॥ २४ ॥

---

१. पाँसून् । अक्षेभ्यः ( प० पा० )
२. सम्-ऊढम् । अस्य । पाँसुरे ( प० पा० )
३. माँसम् । माँसेन ( प० पा० )
४. शाँशपेन । साकम् ( प० पा० )
५. यः । तेन । अन्यम् । जिघांसति ( प० पा० )
६. जिघांसन् । नः । उत्-ईरते ( प० पा० )
७. यदा । स्थामः । जिघांसति ( प० पा० )

## शान्मान्दानाम् ॥ २५ ॥

**सू० अ०**—शान्, मान् तथा दान् का ( अनुनासिक दीर्घ होता ) है।

### निर्मलभाष्यम्

**शान्मान्दानाम्** 'शान्' 'मान्' 'दान्' इत्येतेषां अनुनासिकः दीर्घः भवति। यथा—'बहुधा मीमांसमानाः' ( सं० ९.१.३ ) 'मीमांसितस्य न मीमांसमानस्य' ( सं० ९.६.२४ )। शान्, दान इत्यस्य निदर्शनं शाखान्तरे भवितव्यम् ॥ २५ ॥

### शशिकला

शान्, मान् तथा दान् का अनुनासिक दीर्घ होता है। जैसे—'बहुधा मीमांसमानाः'[1] 'मीमांसितस्य न मीमांसमानस्य'[2] ॥ २५ ॥

## वस्वन्तस्य पञ्चपद्याम् ॥ २६ ॥

**सू० अ०**—पञ्चपदी में वसु ( प्रत्यय ) के अन्त का ( अनुनासिक दीर्घ होता है )।

### निर्मलभाष्यम्

पुल्लिङ्गस्य प्रथमाविभक्तौ एकवचनः द्विवचनः बहुवचनः द्वितीयायांश्च एकवचनः द्विवचनः 'पञ्चपदी' नाम्ना उक्तः। पाणिनिना लिडर्थे 'क्वसु' लडर्थे 'वसु' प्रत्ययः गृहीतः। क्वसुप्रत्ययस्य ककारस्य लोपः जातः, तत्रापि वसु' एव अवशिष्टः। इत्येवम् अत्र वसुग्रहणेन लिडर्थे क्वसु लडर्थे च वसु इत्येतयोः ग्रहणम्। **पञ्चपद्यां** पुल्लिङ्गस्य प्रथमाविभक्तौ एकवचने द्विवचने बहुवचने द्वितीयाविभक्तौ एकवचने द्विवचने च **वस्वन्तस्य** वसुप्रत्ययस्यान्त्यस्य अनुनासिकः दीर्घः भवति। यथा—'उत्तस्थिवांसस्ते' ( सं० ६. ९३.१ ) 'पपिवांसो मधूनि' ( सं० ७.९७.३ ) 'परेयिवांसं प्रवतः ( सं० १८. १.४९ ) 'प्रविशिवांसमीमहे' ( सं० ४.२३.१ ) 'विद्वांसः' ( सं० ६ ११५.१ ) 'विद्वांसम्' ( सं० १० ८ १७, १२.४.४३ ) ॥ २६ ॥

### शशिकला

पुल्लिङ्ग के प्रथमाविभक्ति का एकवचन, द्विवचन, बहुवचन तथा द्वितीयाविभक्ति का एकवचन और द्विवचन—ये पाँच पञ्चपदी कहलाते हैं। पाणिनि ने लिट्लकार के अर्थ में 'क्वसु' तथा लट्लकार के अर्थ में 'वसु'

---

१. बहुधा। मीमांसमानाः ( प० पा० )

२. मीमांसितस्य। मीमांसमानस्य ( प० पा० )

प्रत्यय का ग्रहण किया है। 'क्वसु' प्रत्यय में ककार का लोप होकर वसु ही अवशिष्ट रहता है। इस प्रकार यहाँ वसु का ग्रहण लिडर्थ में 'क्वसु' तथा लडर्थ में 'वसु' दोनों के लिए हुआ है। पञ्चपदी अर्थात् पुल्लिङ्ग के प्रथमा विभक्ति के एकवचन, द्विवचन, बहुवचन तथा द्वितीया विभक्ति के एकवचन तथा द्विवचन में होने पर, वस्वन्त=वसु प्रत्यय के अन्त्य का अनुनासिक दीर्घ होता है। जैसे 'उत्तस्थिवांसस्ते'[१] 'पपिवांसो मधूनि'[२] 'परेयिवांसं प्रवतः'[३] 'प्रविशिवांसमीमहे'[४] 'यद् विद्वांसः'[५] 'विद्वांसम्'[६] ॥२६॥

## ईयसश्च ॥ २७ ॥

सू० अ०—(पञ्चपदी में) ईयस् का भी (अनुनासिक दीर्घ होता है)।

### निर्मलभाष्यम्

चशब्दोऽत्र पञ्चपद्यामित्यन्वादिशति। पञ्चपद्यां पुल्लिङ्गस्य प्रथमायाम् एकवचने द्विवचने बहुवचने द्वितीयायाम् एकवचने द्विवचने च ईयस्' इत्यस्य प्रत्ययस्य अनुनासिकः दीर्घः भवति। यथा—'श्रेयांसमेनमात्मनः' (सं० १५.१०.२) ॥ २७ ॥

### शशिकला

सूत्र में प्रयुक्त चशब्द पूर्वसूत्र से 'पञ्चपद्याम्' का अन्वादेश करता है। पञ्चपदी अर्थात् पुल्लिङ्ग के प्रथमाविभक्ति के एकवचन, द्विवचन बहुवचन तथा द्वितीया विभक्ति के एकवचन और द्विवचन में होने पर ईयस् प्रत्यय का अनुनासिक दीर्घ होता है। जेसे—'श्रेयांसमेनमात्मनः'[७] ॥ २७॥

## विदेश्च ॥ २८ ॥

सू० अ० (पञ्चपदी में) विद् (धातु) का भी (अनुनासिक दीर्घ होता है)।

### निर्मलभाष्यम्

चशब्दोऽत्र पञ्चपद्याम्' इत्यस्यान्वादेशकः। पञ्चपद्यां पुल्लिङ्गस्य प्रथमाविभक्तौ एकवचने द्विवचने बहुवचने द्वितीयाविभक्तौ एकवचने द्विवचने

---

१. उत्तस्थि-वांसः। ते (प० पा०) २. पपि-वांसः। मधूनि (प० पा०)
३. परेयि-वांसम्। प्रवतः (प० प०) ४. प्रविशि-वांसम्। ईमहे (प० पा०)
५. यत्। विद्वांसः (प० पा०) ६. विद्वांसम् (प० पा०)
७. श्रेयांसम्। एनम्। आत्मनः (प० पा०)

च **विदेः** विद्धातोः अनुनासिकः दीर्घः भवति। यथाभवति – 'विद्वांसमुप' ( सं० ९.९४ ) 'विद्वांसं व्रात्यम्' ( १५.२.११ ) ॥ २८ ॥

**शशिकला**

सूत्र में प्रयुक्त चशब्द यहाँ 'पञ्चपद्याम्' का अन्वादेश करता है। पञ्चपदी अर्थात् पुल्लिङ्ग प्रथमाविभक्ति के एकवचन द्विवचन, बहुवचन तथा द्वितीया विभक्ति के एकवचन तथा द्विवचन में विद्धातु का अनुनासिक दीर्घ होता है। जैसे—'विद्वांसमुप'[1] 'विद्वांसं व्रात्यम्'[2] ॥ २८ ॥

## पुंसश्च ॥ २९ ॥

**सू० अ०**—( पञ्चपदी में ) पुंस का ( अनुनासिक दीर्घ होता है )।

**निर्मलभाष्यम्**

चशब्दोऽत्र पञ्चपद्यामित्यन्वादिशति। पञ्चपद्यां पुलिङ्गस्य प्रथमाविभक्तौ एकवचने द्विवचने बहुवचने द्वितीयाविभक्तौ एकवचने द्विवचने च 'पुंस' इत्यस्यानुनासिकः दीर्घः भवति। यथा 'पुमांसं पुत्रम्' ( सं० ३.२३.३ )। अपञ्चपद्याम् दीर्घः न। यथा 'पुंसि वै रेतो भवति' ( सं० ६.११.२ ) ॥ २९ ॥

॥ इति श्रीमत्पण्डितदशरथपाठकसूनुना डा० जमुनापाठकेन कृते निर्मलभाष्ये चतुरध्यायिकायाः प्रथमाध्यायस्य तृतीयः पादः ॥ ३ ॥

●

**शशिकला**

सूत्र में प्रयुक्त च शब्द यहाँ 'पञ्चपद्याम्' का अन्वादेश करता है। पञ्चपदी अर्थात् पुल्लिङ्ग के प्रथमाविभक्ति के एकवचन, द्विवचन, बहुवचन तथा द्वितीयाविभक्ति के एकवचन और द्विवचन में होने पर 'पुंस' का अनुनासिक दीर्घ होता है। जैसे 'पुमांसं पुत्रम्'[3]। पञ्चपदी में न होने पर अनुनासिक दीर्घ नहीं होता। जैसे—'पुंसि वै रेतो भवति'[4] ॥ २९ ॥

॥ चतुरध्यायिका के प्रथम अध्याय के तृतीयपाद की डा० जमुनापाठक-कृत 'शशिकला' व्याख्या समाप्त ॥ ३ ॥

●

---

१. विद्वांसम्। उप ( प० पा० ) २. विद्वांसम्। व्रात्यम् ( प० पा० )
३. पुमांसम्। पुत्रम् ( प० पा० ) ४. पुंसि। वै। रेतः। भवति ( प० पा० )

# अथ चतुर्थः पादः

[ उपधासंज्ञाविधानम् ]

## वर्णादन्त्यात्पूर्व उपधा ॥ १ ॥

**सू० अ०** –( पद में ) अन्तिम वर्ण से पूर्ववर्ती ( वर्ण ) उपधा ( कहलाता है )।

### निर्मलभाष्यम्

उपधा संज्ञा विधीयते। अन्ते भवः अन्त्यः। अकारादिः वर्णः। **अन्त्यात्** अन्ते पदान्ते विद्यमानाद् वर्णात् **पूर्वः** पूर्वे विद्यमान वर्ण **उपधासंज्ञः** भवति। यथा—'अग्निः' ( सं० ४.३९.२ ) इत्यत्र पदान्ताद् विसर्जनीयात् पूर्व इकार उपधासंज्ञकः। 'अग्नेः' ( सं० ६.२०.१ ) इत्यत्र पदान्ताद् विसर्जनीयात् पूर्वं एकारः उपधा। 'दक्षयाणाः' ( सं० २.४.१ ) इत्यत्र विसर्जनीयात् पूर्वं आकारश्च। संज्ञायाः प्रयोजनम् –'नाम्युपधस्य रेफः' ( २.२.३ ) 'अकारोपधस्योकारोऽकारे' ( २.२.१४ ) 'आकारोपधस्य लोपः' ( २.२.१६ ) इत्यादयः ॥ १ ॥

### शशिकला

यहाँ उपधा संज्ञा का विधान किया गया है। अन्त में होने वाला अन्त्य है। अकार इत्यादि वर्ण हैं। पद के अन्त में विद्यमान वर्ण से पूर्ववर्ती वर्ण उपधासंज्ञक होता है। जैसे–'अग्निः' 'अग्नेः' 'दक्षमाणाः' यहाँ पदान्तीय विसर्जनीय से पूर्व वाला क्रमशः इकार, एकार तथा आकार उपधासंज्ञक है। उपधासंज्ञा का प्रयोजन—'नामिन् उपधा वाला ( विसर्जनीय ) रेफ हो जाता है' ( २.२.३ ), 'अकार बाद में होने पर अकार उपधा वाला ( विसर्जनीय ) उकार हो जाता है' ( २.२.१४ ) 'आकार उपधा वाले विसर्जनीय का लोप हो जाता है' ( २.२.१६ ) इत्यादि ॥ १ ॥

[ अक्षरसंज्ञाविधानम् ]

## स्वरोऽक्षरम् ॥ २ ॥

**सू० अ०**—स्वर ( वर्ण ) अक्षर ( कहलाता है )।

## निर्मलभाष्यम्

अक्षरसंज्ञा विहिता। अकारादिः स्वरः। **स्वरः** स्वरवर्णः **अक्षरम्** अक्षरसंज्ञः भवति। यथा—अ आ इ इत्यादयः। संज्ञायाः प्रयोजनम्—'समानयमेऽक्षरमुच्चैरुदात्तम्' ( १.१.१४ ) ॥ २॥

## शशिकला

यहाँ अक्षरसंज्ञा का विधान किया गया है। अकार इत्यादि स्वर हैं। स्वरवर्ण अक्षरसंज्ञक होते हैं। जैसे अ आ इ इत्यादि। अक्षर संज्ञा का प्रयोजन—'समानस्वर में उच्च-ध्वनि से उच्चारित अक्षर उदात्त होता है' ( १.१.१४ ) ॥ २॥

[ सोष्मणः अनूष्मभावः ]

# सोष्मणि पूर्वस्यानुष्मा ॥ ३ ॥

सू० अ०—महाप्राण ( सोष्म ) बाद में होने पर पूर्ववर्ती ( वर्ण ) का अल्पप्राण ( अनूष्म ) ( हो जाता है )।

## निर्मलभाष्यम्

सोष्माणः वर्गाणां द्वितीय चतुर्थश्च स्पर्शः। एते वर्णाः सोष्माणः महाप्राणाः सन्ति। 'पदान्ते व्यञ्जनं द्विः' ( ३.२.१ ) इत्यादिना व्यञ्जनानां द्वित्वमुक्तम्। तत्र यदि महाप्राणस्पर्शस्य द्वित्वं भवति तत् **सोष्मणि** महाप्राणे स्पर्शे परे पूर्वस्य महाप्राणस्य **अनुष्मा** अल्पप्राणः भवति। 'आन्तर्येण वृत्तिः' ( १.४.४ ) इत्यनेन द्वितीये स्पर्शे परे द्वितीयस्य प्रथमः, चतुर्थे स्पर्शे परे चतुर्थस्य तृतीयः भवति। यथा—'नन्वा रुरुद्ध्रे' ( सं० ४.३१ ३ ) 'यो दद्ध्रे ( सं० १८ ३.६३ ) 'वलगं वा निचक्ख्नुः' ( सं० १० १.१८ ) इत्यत्र 'संयोगादि स्वरात्' ( ३.२.३ ) इत्यनेन क्रमशः धकारस्य धकारस्य खकारस्य च द्वित्वं भवति। तत्र सोष्मणि परे पूर्वस्य क्रमजस्य च क्रमेण दकारः दकारः ककारश्च भवति ॥ ३॥

## शशिकला

वर्गों के द्वितीय तथा चतुर्थ स्पर्श सोष्म कहलाते हैं। ये स्पर्श महाप्राण होते हैं। 'पद के अन्त में व्यञ्जन दो बार ( उच्चारित होते हैं )'

( ३.२.१ ) इत्यादि द्वारा व्यञ्जनों के द्वित्व का विधान किया गया है। यदि महाप्राण स्पर्श का द्वित्व होता है तो उस द्वित्व में महाप्राण सोष्म स्पर्श बाद में होने पर पूर्ववर्ती महाप्राण क्रमज का अल्पप्राण ( अनूष्म ) हो जाता है। तात्पर्य यह है कि महाप्राण स्पर्श का द्वित्त्व होने पर प्रथम स्पर्श अल्प-प्राण तथा दूसरा स्पर्श महाप्राण होता है। 'आदेश समीपता के अनुसार होता है' ( १.४.४ ) इस परिभाषासूत्र के अनुसार द्वितीय स्पर्श का प्रथम स्पर्श तथा चतुर्थ स्पर्श का तृतीय स्पर्श हो जाता है। जैसे-'नन्वा रुरुद्ध्रे'[1] 'यो दद्ध्रे'[2] 'वलगं वा निचक्ख्नुः'[3] यहाँ स्वर से बाद में संयोग का आदि व्यञ्जन द्विरुच्चारित ( होता है )' ( ३.२ ३ ) से संयोग के आदि व्यञ्जन क्रमशः धकार, धकार तथा खकार का द्वित्व होता है। ये महाप्राण स्पर्श हैं। अतः इनके द्वित्व से प्राप्त स्पर्श ( क्रमज ) पूर्ववर्ती धकार, धकार तथा खकार का महाप्राण बाद में होने से क्रमशः दकार, दकार तथा ककार हो जाता है ॥ ३ ॥

[ परिभाषा-विधानम् ]

## आन्तर्येण वृत्तिः ॥ ४ ॥

सू० अ०—आदेश (वृत्ति) समीपता (आन्तर्य) के अनुसार होता है।

### निर्मलभाष्यम्

परिभाषासूत्रमिदम्। परिभाषया सूत्रकारः ग्रन्थे प्रतिपादितानां विधानानां तत्कार्याणां च विषये प्रणालीं स्थापयति यस्माद् ग्रन्थे विहित-विधानां सूत्राणाञ्चावबोधने सारल्यं भवति। अत एव अत्रापि सूत्रकारेण परिभाषेयम् विहिता।

**वृत्तिरादेशः आन्तर्येण** सामीप्येन भवति। वर्णानां विकारविषये यो आदेशः विहितः स अवचने सति स्थानकरणाभ्यन्तरप्रयत्नानां यथासमीप्येन भवति। यथा[१]— 'मकारस्य स्पर्शे परसस्थानः' ( २.१.३१ ) इत्यत्र स्पर्शे परे मकारस्य परसवर्णत्वमुक्तम्। परञ्च स्पष्टतया न निर्दिष्टं यद् अमुकस्पर्शपरे मकारस्य अमुकस्पर्शः भवति। परिभाषया एव निर्णयं भवति यत् कवर्गस्य स्पर्शे परे मकारस्य तत्सस्थानीयः ङकारः। चवर्गपरे ञकारः,

---

१. ननु। आ। रुरुद्ध्रे ( प० पा० )　२. यः। दद्ध्र ( प० पा० )

३. वलगम्। वा। नि-चक्ख्नुः ( प० पा० )

टवर्गपरे णकारः तवर्गपरे नकारश्च भवति । पवर्गीये स्पर्शे परे मकारः एव । उदाहरणानि द्रष्टव्यानि—'सङ्काशयामि वहतुम्' ( सं० १४.२.१२ ) 'उदागाञ्जीवः' ( सं० १४.२.४४ ) 'सन्तैः पशुभिः' ( ४.३६.५ ) इत्यादयः । [२] 'विसर्जनीयस्य परसस्थानोऽघोषे' ( २.२.१ ) इत्यत्र अघोषे वर्णे परे विसर्जनीयस्य परसवर्णत्वमुक्तम् । अनया परिभाषया स्पष्टं यत् कवर्गस्याघोषवर्णे परे विसर्जनीयस्य परसस्थानीयः जिह्वामूलीयः ≍क, चवर्गस्याघोषे शकारे वा परे शकारः, टवर्गस्याघोषे षकारे वा षकारः, तवर्गस्याघोषे सकारे च सकारः, पवर्गस्याघोषे परे उपध्मानीयः ≍प भवति । उदाहरणानि –अन्त≍कोशम् इव' ( सं० १.१४.४ ) 'यश्च द्विषम्' ( सं० १.१९.४ ) 'वृक्षष्टीक्वते' ( लौकिकसंस्कृते ) 'मयस्तोकेभ्यः' ( सं० १.१३.२) इत्यादयः । [३] 'स्वरे नामिनोऽन्तःस्था' ( ३.२.१४ ) इत्यत्र नामिस्वराः आन्तर्येण क्रमशः यकारादिषु परिवर्तन्ते । यथा 'दध्यत्र, मध्वत्र, मात्रर्थं, पित्रर्थम्' ( लौकिकसंस्कृते ) ।

परिभाषेयं शौनकेनापि उक्ता—'असावमुमिति तद्भावमुक्तं यथान्तरम् ( ऋ० प्रा० १.५६ ) इति । इत्यत्र असौ इति प्रथमानिर्दिष्टस्य ग्रहणम् । अमुमिति द्वितीयानिर्दिष्टस्य । यत्र असौ वर्ण अमुम् इत्येव वक्ष्यति तत्र तद्भावमुक्तञ्जानीयात् । तं च तद्भावं यथान्तरं यो यस्य स्थानकरणानुप्रदानैः सन्निकृष्टः स तस्य भवति इति जानीयात् । कात्यायनेन 'विकारी यथासन्नम्' ( वा० प्रा० १.१४२ ) इत्येवं परिभाषिता । विकारी वर्णाः अवचने यथासन्नं यो यस्य आसन्नस्तमापद्यते ॥ ४ ॥

## शशिकला

यह परिभाषा सूत्र है । परिभाषा-सूत्र द्वारा सूत्रकार ग्रंथ में प्रतिपादित विधानों तथा उससे होने वाले कार्यों के विषय में एक प्रणाली निश्चित करता है जिससे ग्रन्थ में विहित विधानों तथा सूत्रों को समझने में सरलता होती है । इसी उद्देश्य से सूत्रकार ने यहाँ यह परिभाषा निर्दिष्ट किया है ।

इस परिभाषा के अनुसार वृत्ति = आदेश, आन्तर्य = समीपता, के अनुसार होता है । वर्णों के विकार के विषय में जो आदेश विहित है, वह विशेष विधान न होने पर स्थान, करण तथा अभ्यन्तरप्रयत्न इत्यादि की समीपता के अनुसार होता है । जैसे—[१] 'स्पर्श बाद में होने पर मकार परवर्ती के समान स्थान वाला हो जाता है' ( २.१.३१ ) यहाँ स्पर्श बाद में

होने पर मकार का परसस्थान में परिवर्तन होने का कथन किया गया है किन्तु यहाँ स्पष्ट रूप से यह नहीं कहा गया है कि अमुक स्पर्श बाद में होने पर मकार का अमुक स्पर्श हो जाता है। यह निर्णय इस परिभाषासूत्र से ही होता है कि कवर्ग का स्पर्श बाद में होने पर मकार का करण, आभ्यन्तरप्रयत्न इत्यादि की समीपता के कारण ङकार, चवर्गीय स्पर्श बाद में होने पर ञकार, टवर्गीय स्पर्श बाद में होने पर णकार, तवर्गीय स्पर्श बाद में होने पर नकार होता है तथा पवर्गीय स्पर्श बाद में होने पर मकार ही रहता है।[1] उदाहरण—'सङ्काशयामि वहतुम्'[2] 'उदागाञ्जीवः[3] 'सन्तैः पशुभिः[4] इत्यादि। यहाँ मकार समीपता के अनुसार क्रमशः ङकार, ञकार नकार में परिवर्तित हो गया है। [२] 'अघोष बाद में होने पर विसर्जनीय परसस्थानीय हो जाता है' ( २.२.१ ) यहाँ भी इसी परिभाषा के अनुसार निर्णय होता है कि विसर्जनीय कवर्गीय अघोष बाद में होने पर परसस्थानीय जिह्वामूलीय ⌣क, चवर्गीय अघोष तथा शकार बाद में होने पर शकार, टवर्गीय अघोष तथा षकार बाद में होने पर षकार, तवर्गीय अघोष तथा सकार बाद में होने पर सकार और पवर्गीय अघोष बाद में होने पर उपध्मानीय ⌣प हो जाता है[5]। उदाहरण— अन्त⌣कोशम् इव'[6] 'यश्च द्विषन्'[7] 'वृक्षष्टीकते'[8] मयस्तोकेभ्यः'[9] इत्यादि। [३] 'स्वर वर्ण बाद में

---

१. सूत्र में स्पष्ट नहीं है कि अमुक वर्ण बाद में होने पर मकार अमुक वर्ण हो जाता हैं। इस परिभाषा सूत्र के अनुसार मकार कवर्गीय स्पर्श बाद में होने पर नासिका करण की समीपता से परसस्थानीय ङकार, चवर्ग बाद में होने पर ञकार, टवर्ग बाद में होने पर णकार, तवर्ग में होने पर नकार हो जाता है।

२. सम्-काशयामि (प० पा०) ३. उत्-अगाम्। जीवः (प० पा०)

४. सम्। तैः। पशु-भि (प० पा०)

५. इस परिभाषा सूत्र से ही निश्चित होता है कि विसर्जनीय का क वर्गीय अघोष बाद में होने पर जिह्वामूलीय, चवर्गीय अघोष तथा शकार बाद में होने पर शकार, टवर्गीय अघोष स्पर्श तथा षकार बाद में होने पर षकार, तवर्गीय अघोष स्पर्श तथा सकार बाद में होने पर सकार तथा पवर्गीय अघोष स्पर्श बाद में होने पर उपध्मानीय हो जाता है।

६. अन्तः-कोशम् इव (प० पा०) ७. यः। च (प० पा०)

८. वृक्षः+टीकते

९. मयः+स्तोकेभ्यः

होने पर नामिन् स्वर अन्तःस्थ हो जाते हैं' ( ३.२.१४ )। यहाँ इसी परिभाषासूत्र के अनुसार इकारादि नामिन् स्वर क्रमशः यकारादि अन्तःस्थ हो जाते हैं।[1] उदाहरण—दध्यत्र[2], मध्वत्र[3] इत्यादि।

इस परिभाषा को शौनक ने भी निर्दिष्ट किया है—( आगे जिन सूत्रों में ) यह कहा जायेगा कि 'यह वह हो जाता है वहाँ स्थान, करण, आभ्यन्तरप्रयत्न की अत्यन्त समीपता की दृष्टि से उसका होना बताया गया है'। कात्यायन ने इस परिभाषा को इस प्रकार कहा है—'विकार को प्राप्त होने वाला वर्ण समीपता के अनुसार (विकार को प्राप्त करता है)' ॥४॥

[ अनुदात्तेकारविधानम् ]

## खण्वखा३इ खैमखा३इ इत्याकारादिकारोऽनुदात्तः[4] ॥ ५ ॥

**सू० अ०**—खण्वखा३इ तथा खैमखा३इ में ( प्लुत ) आकार से परवर्ती इकार अनुदात्त होता है।

### निर्मलभाष्यम्

**खण्वखा३इ खैमखा३इ** इत्येतयोः पदद्वयोः आकारात् प्लुताकारात् परः **इकार अनुदात्तः** भवति। यथा—खण्वखा३इ खैमखा३इ मध्यै तदुरि सं० ( ४.१५ १५ ) इत्यत्र आ३कारात् परः इकारः अनुदात्तः ॥ ५ ॥

### शशिकला

खण्वखा३इ तथा खैमखा३इ—इन दोनों पदों में प्लुत आकार से परवर्ती इकार अनुदात्त होता है। जैसे—खण्वखा३इ खैमखा३इ मध्ये तदुरि ॥ ५ ॥

---

१. यहाँ सूत्र में यह निर्दिष्ट नहीं है कि अमुक नामिन् अमुक अन्तःस्थ हो जाता है। इस परिभाषासूत्र के अनुसार विकार को प्राप्त होने वाला नामिन् स्वर उच्चारणस्थान, इत्यादि की दृष्टि से अपने समीपवर्ती अन्तःस्थ को प्राप्त हो जाता है। इकार का उच्चारणस्थान तालु है अतः वह तालव्य अन्तःस्थ यकार हो जाता है। इसी प्रकार उकार, वकार, ऋकार रेफ, लृकार लकार हो जाता है।

२. दधि+अत्र　　　　३. मधु+अत्र

४. क इत्यका कौ० व्या० रादिऽकारो इतिपाठः।

[ अप्लुतविधानम् ]

## अवशा आवभूवाँ[1] इतीतावेकारोऽप्लुतः ॥ ६ ॥

सू० अ०—इति बाद में होने पर अवशा और आवभूवाँ का ( सन्धि से प्राप्त ) एकार प्लुत नहीं होता ।

### निर्मलभाष्यम्

**इतौ** 'इति' इत्यस्मिन्परे **अवशा, 'आबभूवाँ' इत्येतयोः** सन्धिना जायमान एकारः **अप्लुतः** त्रिमात्रिकः न, भवति। वस्तुतः 'अवशा३' 'आबभूवाँ३' इत्येतयोः पदान्त्यो आकारः प्लुतः। इति परे पूर्वपरयोः आकारेकारयोः 'अवर्णस्येवर्ण एकारः' ( ३.२.१९ ) इत्यनेन एकारः भवति। तत्र आकारस्य प्लुतत्वादेकारस्यापि प्लुतत्वं प्राप्तम्। तदत्र निषिध्यते। यथा—'वशेया३मवशेति' ( सं० १२ ४.४१ )। उल्लेखनीयमत्र यत् संहितायाम् 'आबभूवाँ' ( सं० १०.२.२८ ) इत्यस्य परे इति न विद्यते। पदपाठेऽपि संहितावदेव रूपम्। परञ्च क्रमपाठे परिहारद्वारा अस्य मूलरूपं प्रदर्शितम्—'बभूवेति बभूव' ( क्र० पा० )। एवं ज्ञायते यद् विधानोऽयं संहितापाठम् अन्यपाठं चोद्दिश्य कृतः। संहितायामन्यत्र च इति परे एकारोऽप्लुतः एव ॥ ६ ॥

### शशिकला

इति बाद में होने पर अवशा तथा आबभूवाँ का सन्धि से उत्पन्न एकार प्लुत नहीं होता। वस्तुतः अवशा३ तथा आबभूवाँ३ का पदान्त्य आकार प्लुत होता है। इति बाद में होने पर पूर्वपर आकार तथा इकार के स्थान में 'इवर्ण बाद में होने पर अवर्ण का पूर्वपर एकादेश एकार होता है' इस विधान से एकार प्राप्त होता है। उस आकार के प्लुत होने के कारण सन्धिज एकार का भी प्लुत होना प्राप्त होता है। इसका यहाँ निषेध किया गया है। जैसे—'वशेया३मवशेति'। यहाँ यह उल्लेखनीय है कि संहिता में 'आबभूवाँ३' से बाद में 'इति' नहीं प्राप्त होता। पदपाठ में भी संहिता के समान ही रूप प्राप्त होता है। किन्तु क्रमपाठ में 'परिहार'[2] द्वारा इसके मूलरूप का प्रदर्शन होता है—'बभूवेति बभूव' ( क्र० पा० )। इससे ज्ञात

---

१. (क) अवशाबभूवाँ इति पाठः।

२. परिहार के लिए सूत्र ४.४.१७ द्रष्टव्य

होता है कि यह विधान संहितापाठ तथा अन्यपाठ को दृष्टिगत करके किया गया है। संहितापाठ तथा अन्यत्र ( पदपाठ, क्रमपाठ इत्यादि में ) इति बाद में होने पर एकार प्लुत नहीं होता ॥ ६ ॥

[ संयोगसंज्ञाविधानम् ]

## व्यञ्जनान्यव्यवेतानि स्वरैः संयोगः ॥ ७ ॥

**सू० अ०**—स्वरवर्ण से अव्यवहित व्यञ्जन संयोग कहलाता है।

### निर्मलभाष्यम्

संयोगसंज्ञाऽत्र विहिता। **स्वरैः** स्वरवर्णैः **अव्यवेतानि** अव्यवहितानि व्यवधानरहितानीत्यर्थः **व्यञ्जनानि** व्यञ्जनवर्णाः संयोगसंज्ञः भवति। यथा— प्लक्षात्' (सं० ५.५.५) इत्यत्र पकारलकारयोर्मध्ये स्वरस्य व्यवधानं नास्नि अत एवात्र तयोः संयोगसंज्ञा। एवमेव ककारषकारयो मध्येऽपि स्वरव्यवधानस्याविद्यमानत्वात् तत्रापि संयोगसंज्ञा। स्वरैः व्यवेतानीति किम् ? 'मधु' ( सं० १.३४.२ ) इत्यत्र अकारव्यवहितत्वाद् दकारधकारयोः संयोगः माभूत्। एवमन्यत्रापि द्रष्टव्यम्। संज्ञायाः प्रयोजनम्—'संयोगादि पूर्वस्य' ( १.२.१५ )।

शौनकमतेऽपि व्यञ्जनयोः मेलः संयोगः —'संयोगस्तु व्यञ्जनसन्निपातः' ( ऋ० प्रा० १.३७ )। कात्यायनानुसारमपि व्यञ्जनेन सह स्वरैरव्यवहितं व्यञ्जनं संयोगसंज्ञकं भवति—'अनन्तरं संयोगः' ( वा० प्रा० १.४८ ) ॥ ७ ॥

### शशिकला

यहाँ संयोगसंज्ञा का विधान हुआ है। स्वरवर्ण से अव्यवहित = व्यवधानरहित, व्यञ्जनवर्ण संयोगसंज्ञक होते हैं। जैसे—'प्लक्षात्'। यहाँ पकार तथा लकार स्वरवर्ण से अव्यवहित हैं अतः यह संयोगसंज्ञक हैं। इसी प्रकार ककार तथा षकार के मध्य में स्वरवर्ण नहीं है अतः यह भी संयोग संज्ञक हैं। स्वर से अव्यवहित—यह क्यों कहा गया ? 'मधु' में मकार तथा धकार के मध्य में स्वरवर्ण अकार का व्यवधान होने से संयोगसंज्ञक नहीं है। संयोग संज्ञा का प्रयोजन— संयोग का आदि (व्यञ्जन) पूर्ववर्ती ( स्वरवर्ण ) का अङ्ग होता है' ( १.२.१५ )।

शौनक के मत में व्यञ्जनों का सन्निपात ( मेल ) संयोग कहलाता है ( ऋ० प्रा० १.३७ ) । कात्यायन के अनुसार भी व्यञ्जन के साथ ( स्वर से ) अव्यवहित व्यञ्जन संयोग कहलाता है ( वा० प्रा० १.४८ ) ॥ ७ ॥

[ यमविधानम् ]

## समानपदेऽनुत्तमात्स्पर्शादुत्तमे यमैर्यथासङ्ख्यम् ॥ ८ ॥

**सू० अ०**—एकपद में अपञ्चम ( अनुत्तम ) स्पर्श से बाद में पञ्चम ( उत्तम ) स्पर्श होने पर क्रमशः यम का ( आगम होता है ) ।

### निर्मलभाष्यम्

**समानपदे** अन्तःपदे **अनुत्तमात्** अञ्चमात् **स्पर्शात्** स्पर्शवर्णाद् **उत्तमे** पञ्चमे स्पर्शवर्णे परे **यथासंख्यं** यथाक्रमं **यमैः** विच्छेदं भवति । तयोः पूर्वपरयोर्मध्ये यमस्यागमः भवति इत्यर्थः । यथा—तक्मन्=तक्क्ँमन्' ( सं० ५.२२.२ ) इत्यत्र ककारमकारयोः, 'सपत्नम्'=सपत्त्ँनम् ( सं० ७.१०९ ३ ) इत्यत्र तकारनकारयोः 'स्रथ्नानः' स्रथ्थ्ँनानः ( सं० १४ १.५७ ) इत्यत्र थकारनकारयोः, यज्ञः'=यज्ज्ँञः ( सं० ४.११.४ ) इत्यत्र जकारञकारयोः, 'गृभ्णामि' - गृभ्भ्ँणामि ( सं० ३ ८.६ ) इत्यत्र भकारणकारयोः संयोगे यमागमः भवति । ननु संहितायान्तु यमो न दृश्यते तत्कथमत्र विधानम् । **उच्यते** | यमः संयुक्तव्यञ्जनस्योच्चारणवैशिष्ट्यं न तु लिपिवैशिष्ट्यम् । अत एव उच्चारणे यमानामागमः कर्त्तव्यः लिप्याभावेऽपि । समानपदे इति किम्—'ऋधङ्मन्त्रो योनिम्' ( सं० ५.१.१ ) 'अर्णवान्महतस्परि' ( सं० १.१०.४ ) इत्यादिषु समानपदेऽविद्यमाने 'उत्तमा उत्तमेषु' ( २.१.५ ) इत्यनेन उत्तमे परे अनुत्तमस्य उत्तमः । न तु यमागमः । कात्यायनेन अस्य कृते 'विच्छेद' इति संज्ञा प्रयुक्ता—'अन्तःपदेऽपञ्चमः पञ्चमेषु विच्छेदम्' ( वा० प्रा० ४.१६३ ) । इत्यनेन ज्ञायते यत् यमः आगमरेव । येन पूर्वं अपञ्चमः स्पर्शः परेण पञ्चमेन स्पर्शेन विच्छिन्नः पृथग् भवति ।

वस्तुतः यमः प्राचीनाचार्याणां सूक्ष्मदृष्टया ध्वनिविषयकचिन्तनस्य परिणामः । यमस्यागमविधाने ध्वनिवैज्ञानिककारणम् । यमस्तु अननुनासिकानुनासिकस्पर्शमध्ये भवति । अस्योद्भावनविषये स्पर्शवर्णानामुच्चारणप्रक्रिया ज्ञातव्या । स्पर्शवर्णानामुच्चारणार्थम् उच्चारणस्थाने करणेन स्पर्शः भवति ।

स्पर्शानन्तरं स्फोटनकाले स्पर्शवर्णः श्रुतिगोचरः जायते। यमविषये पूर्वाननुनासिकस्पर्शोच्चारणार्थं स्थाने करणेन स्पर्शः भवति। स्थानात्करणस्यविमोक्षान्तरमेव ततः परानुनासिकस्पर्शस्योच्चारणनिमित्तं करणं सज्जीभवति। तदा एव वायोः अल्पभागः अनुनासिकस्पर्शोच्चारणार्थं मुखेन सह नासिकायामपि गच्छति। पूर्वस्पर्शोच्चारणे यदा स्थानकरणविमोक्षः तदैव पूर्वस्पर्शः श्रुतिगोचरः जायते। यावत् करणमनुनासिकस्पर्शोच्चारणाय स्थाने स्पर्शं करोति तन्मध्ये वायोः अल्पभागः नासिकातः निःसृत्य नासिक्यध्वनिमुत्पादयति ततः स्पर्शानन्तरं अनुनासिकस्पर्शस्योच्चारणं श्रुतिगोचरं भवति। एषः एव नासिक्यध्वनिः यमसंज्ञयाभिधीयते। यमः पूर्वस्पर्शस्य स्थानकरणप्रयत्नैः उत्पद्यते। यथोक्तं शौनकेन—'यमः प्रकृत्यैव सदृक्' (ऋ० प्रा० ६.३२)।

कुं खुं गुं घुं इति चत्वारः यमाः पूर्वाचार्यैरुक्ताः। यथोक्तं कात्यायनेन—'कुं खुं गुं घुं इति यमाः' ( वा० प्रा० ८.२४ )। अथर्ववेदीयशिक्षायामपि विहितम्—

> स्पर्शानामुत्तमैः स्पर्शैः संयोगाच्चेदनुक्रमात्।
> आनुपूर्व्या यमांस्तत्र जानीयाच्चतुरस्तथा॥
> रुक्मेति प्रथमं विद्यात्स्नथ्नानः[१] परं विदुः।
> तृतीयं पद्ममित्याहु शङ्घ्नमिति चोत्तमम्॥
> ( मा० शि० ११६–११७ )

**ननु** यमाः पूर्वाननुनासिकस्पर्शस्य स्थानकरणप्रयत्नैरपि प्रभाविताः भवन्ति इत्युक्तम्। अननुनासिकस्पर्शाः विंशतिसङ्ख्याकाः। अतएव यमानां सङ्ख्या अपि विंशतिरेव। कथं चेत्पूर्वाच्चार्यैः चत्वारः एव यमाः निर्दिष्टाः।

**उच्यते**—विंशतिः यमाः चतुर्धा भवन्ति-प्रथमः स्पर्शः अघोषः अल्पप्राणश्च। तदनन्तरं जायमानः यमोऽपि अघोषाल्पप्राणयोः प्रकृत्या भवति। स कुं इत्यनेन ज्ञातव्यः। कुं इति अघोषाल्पप्राणस्पर्शेभ्यः जायमानानां यमानां प्रतिनिधिः। अनेन कुं चुं टुं तुं पुं इति पञ्च यमा वेदितव्याः। द्वितीयस्पर्शः अघोषः महाप्राणश्च। तदन्तरं जायमानः यमोऽघोषमहाप्राणयोः प्रकृत्या जायते। स खुं इत्यनेनोक्तः। खुं इति अघोषमहाप्राणेभ्यः स्पर्शेभ्यः जायमानानाञ्च प्रतिनिधिः। अनेन खुं छुं ठुं थुं फुं इत्येते यमाः ज्ञातव्याः। तृतीय-

१. विद्यान्नचक्षेत्यपरं ( मूलपाठः )।

स्पर्शः सघोषः अल्पप्राणश्च । तदनन्तरं जायमानः यम सघोषाल्पप्राणप्रकृत्या जायते । स गुं इत्यनेनाभिहितः । गुं इति सघोषाल्पप्राणेभ्यः स्पर्शेभ्यः जायमानां यमानां प्रतीकम् । अनेन गुं जुं डुं दुं बुं इत्येते यमाः बोधव्याः । चतुर्थः सघोष महाप्राणश्च । तदनन्तरश्च जायमानः यमः सघोषमहाप्राणयोः प्रकृत्या भवति । स घुं इत्यनेन प्रदर्शितः । घुं इति सघोषमहाप्राणेभ्यः स्पर्शेभ्यः जायमानां यमानां प्रतिनिधिः । अनेन घुं झुं ढुं धुं भुं इतीमे यमाः बोधव्याः । एवं यमाः विंशतिरेव ये चतुर्धा भवन्ति ।

चतुर्धा यमाः

| यमाः | अघोषाल्पप्राणाः | अघोषमहाप्राणाः | सघोषाल्पप्राणाः | सघोष-महाप्राणाः |
|---|---|---|---|---|
| जिह्वामूलीयाः | कुं | खुं | गुं | घुं |
| तालव्याः | चुं | छुं | जु | झुं |
| मूर्धन्याः | टुं | ठुं | डुं | ढुं |
| दन्त्याः | तुं | थुं | दुं | धुं |
| ओष्ठ्याः | पुं | फुं | बुं | भुं |

इत्यत्र उकारः उच्चारणार्थः । वस्तुतः क्ँ ख्ँ इत्यादयः एव यमाः ।

यमानां स्वरूपविषये आचार्याणां न मतैक्यम् । शौनकमते उत्तमे परे सति पूर्वानुत्तमाः स्पर्शा एव अनुनासिकं भूत्वा स्वकीयान् यमानाप्नुवन्ति —'स्पर्शा यमाननुनासिकाः स्वान् परेषु स्पर्शेष्वनुनासिकेषु' ( ऋ० प्रा० ६.२९ ) इति । एवं पूर्ववर्तिनः स्पर्शस्यैव अनुनासिकत्वम् । यद्यमेन ख्यातः । परश्च तैत्तिरीयप्रातिशाख्यमते उत्तमस्पर्शे परे अनुत्तमात्स्पर्शाद् आनुपूर्व्येण नासिक्यागमः—'स्पर्शादनुत्तमादुत्तमपरादानुपूर्व्यान्नासिक्याः' ( तै० प्रा० २१.१२ ) । कात्यायनमतेऽपि एवमेव—'अन्तःपदेऽपञ्चमः पञ्चमेषु विच्छेदम्' ( वा० प्रा० ४.१६३ ) । सूत्रकारस्यापीदमेव मतम् । ध्वनिवैज्ञानिकदृष्ट्या अनुत्तमोत्तमयोर्मध्ये यमागमस्यैव मतम् समीचीनम् आभाति । शौनकस्य मतमसमीचीनमिति न । यतोहि ऋक्चरणे एवमेवोच्चारणं भवति ॥ ८ ॥

## शशिकला

एकपद में पञ्चम स्पर्श बाद में होने पर अपञ्चम (अनुत्तम) स्पर्श से बाद क्रमशः यम से विच्छेद होता है । उनके मध्य में यम का आगम होता

है, यह अर्थ है। जैसे—'तक्मन् =तक्क्ँमन्' यहाँ तकार नकार के मध्य में, 'स्नथ्नानः=स्नथ्थ्ँनानः' यहाँ थकार नकार के मध्य में, यज्ञः=यज्ज्ँञः' यहाँ जकार ञकार के मध्य में, गृभ्णामि=गृभ्भ्ँणामि' यहाँ भकार णकार के मध्य में यम का आगम होता है। यहाँ **शङ्का** होती है कि संहिता में यम दिखलाई नहीं पड़ता फिर उसका विधान क्यों किया गया। **समाधान** यह है कि यम संयुक्त व्यञ्जनों का उच्चारणविषयक वैशिष्ट्य है—लिपिवैशिष्ट्य नहीं। इसलिए लिपि में अभाव होने पर भी यमों का उच्चारण करना चाहिए।

सूत्र में 'एकपद में' यह क्यों कहा गया? 'ऋधङ्मन्त्रो योनिम्' 'अर्जवान्महत्तस्परि' इत्यादि में एकपद में विद्यमान न होने के कारण 'उत्तम (स्पर्श) बाद में न होने पर (अनुत्तम स्पर्श का) उत्तम (स्पर्श) हो जाता है' (२.१.५) से उत्तम स्पर्श बाद में होने पर अनुत्तम स्पर्श का उत्तम हो जाता है. यहाँ यम का आगम न होवे।

कात्यायन ने इसके लिए विच्छेद संज्ञा का प्रयोग किया है—पद के मध्य में पञ्चम (स्पर्श) बाद में होने पर पञ्चम से अन्य स्पर्श का विच्छेद (हो जाता है)' ( वा० प्रा० ४.१६३ ) इससे ज्ञात होता है कि यम एक आगम है जिससे पूर्ववर्ती स्पर्श परवर्ती पञ्चम स्पर्श से अलग हो जाता है।

वस्तुतः यम प्राचीन आचार्यों की सूक्ष्म दृष्टि से ध्वनिविज्ञान-विषयक चिन्तन का परिणाम है। यम के आगम का ध्वनिवैज्ञानिक आधार है। यम का आगम पूर्ववर्ती अननुनासिक तथा परवर्ती अनुनासिक स्पर्श के मध्य में होता है। यम की उत्पत्ति के विषय में स्पर्शवर्णों की उच्चारण-प्रक्रिया का ज्ञान आवश्यक है। स्पर्शवर्णों के उच्चारण में स्थान पर करण का स्पर्श होता है। स्पर्श के बाद स्थान पर से करण का अलगाव होने पर स्पर्शध्वनि श्रुतिगोचर होती है। यम के विषय में पूर्ववर्ती अननुनासिक स्पर्श के उच्चारण के लिए स्थान पर करण का स्पर्श होता तथा स्थान से करण का अलगाव होने के बाद ही परवर्ती अनुनासिक स्पर्श के उच्चारण के लिए स्थान तथा करण तैयार हो जाते हैं। तभी वायुद्रव्य का अल्पभाग अनुनासिक स्पर्श के उच्चारणार्थं मुख के साथ नासिका में भी आ जाता है। पूर्ववर्ती स्पर्श के लिए जब स्थान तथा करण का अलगाव होता है तभी वह सुनाई पड़ जाता है। जब परवर्ती स्पर्श के उच्चारण के लिए स्थान पर करण से स्पर्श होता है तभी वायुद्रव्य का अल्पभाग नासिका से निकलकर नासिक्य-ध्वनि को उत्पन्न कर देता है। इसके बाद अनुनासिक स्पर्श श्रुति-

गोचर होता है। यही नासिक्य-ध्वनि यम कहलाता है। यम पूर्ववर्ती अनुनासिक स्पर्श के स्थान, करण तथा प्रयत्न से प्रभावित होते हैं। जैसा शौनक ने कहा है— यम अपनी प्रकृति ( पूर्ववर्ती स्पर्श ) के समान होते हैं' (ऋ० प्रा० ६.३०)।

कुं खुं गुं तथा घुं ये चार यम प्राचीन आचार्यों द्वारा कहे गये हैं। जैसा कात्यायन ने कहा भी है—कुं खुं गुं घुं—ये चार यम हैं। अथर्ववेदीयशिक्षा में भी कहा गया है—'अपञ्चम स्पर्श का यदि पञ्चम स्पर्शों के साथ क्रमशः संयोग हो तो वहाँ क्रमानुसार चार यमों को जानना चाहिए। 'रुक्म' यहाँ प्रथम यम ( कुं ) को जानना चाहिए। 'स्रख्नानः' यहाँ द्वितीय यम खुं. पद्म' यहाँ तृतीय यम (गुं) तथा 'सङ्घ्नम्' यहाँ चतुर्थ यम (घुं) जानना चाहिए' ( मा० शि० ११६-११७)।

यहाँ **शङ्का** होती है कि यम पूर्ववर्ती अनुनासिक स्पर्श के स्थान, करण तथा प्रयत्न से प्रभावित होते .—ऐसा कहा गया है। अनुनासिक स्पर्श बीस होते हैं। इसलिए यमों की संङ्ख्या भी बीस होनी चाहिए। फिर प्राचीन आचार्यों ने चार यमों का ही कथन क्यों किया है ? **समाधान** यह है कि बीस यम चार प्रकार के होते हैं। वर्गों के प्रथम स्पर्श अघोष तथा अल्पप्राण होते हैं। अतः उससे बाद होने वाला यम भी अघोष तथा अल्पप्राण प्रकृतिवाले होते हैं, वे कुं के द्वारा प्रोक्त हैं। कुं यह अघोष तथा अल्पप्राण प्रकृति वाले यमों का प्रतिनिधि है। इससे कुं चुं टुं तुं तथा पुं इन पाँच यमों को जानना चाहिए। इसी प्रकार वर्गों के द्वितीय स्पर्श अघोष तथा महाप्राण है। अतः इनसे बाद होने वाले यम भी अघोष तथा महाप्राण प्रकृति वाले होते हैं वे खुं द्वारा निर्दिष्ट किए गए हैं। खुं यह अघोष तथा महाप्राण प्रकृति वाले यमों का प्रतिनिधि है। इससे खुं छुं ठुं थुं तथा फुं—इन पाँच यमों का बोध होता है। वर्गों के तृतीय स्पर्श सघोष तथा अल्प प्राण हैं। इनसे बाद होने वाले यम भी सघोष तथा अल्पप्राण प्रकृति वाले होते हैं। ये गुं द्वारा कहे गए हैं। गुं यह सघोष तथा अल्पप्राण प्रकृति वाले यमों का प्रतिनिधित्व करता है। इससे गुं जुं डुं दुं बुं यमों को समझना चाहिए। वर्गों के चतुर्थ स्पर्श सघोष तथा महाप्राण होते हैं। अतः इनसे बाद होने वाले यम भी सघोष तथा महाप्राण प्रकृति वाले होते हैं। ये घुं द्वारा प्रदर्शित किए गए हैं। घुं यह सघोष तथा महाप्राण प्रकृति वाले यमों का प्रतिनिधि है। इससे घुं झुं ढुं धुं तथा भुं इन पाँच

यमों को समझना चाहिए। इस प्रकार यम बीस ही होते हैं जो चार विभागों में विभक्त हैं। चार प्रकार के यमों को इस सारणी द्वारा स्पष्ट किया जा सकता है—

| यम | अघोष अल्पप्राण | अघोष महाप्राण | सघोष अल्पप्राण | सघोष महाप्राण- |
| --- | --- | --- | --- | --- |
| जिह्वामूलीय | कुँ | खुँ | गुँ | घुँ |
| तालव्य | चुँ | छुँ | जुँ | झुँ |
| मूर्धन्य | टुँ | ठुँ | डुँ | ढुँ |
| दन्त्य | तुँ | थुँ | दुँ | धुँ |
| ओष्ठ्य | पुँ | फुँ | बुँ | भुँ |

इन यमों में उकार केवल उच्चारण के लिए है। वैसे क्ँ ख्ँ इत्यादि ही मूल यम हैं।

यमों के स्वरूप के विषय में आचार्यों में मत-साम्य नहीं है। शौनक के अनुसार उत्तम स्पर्श बाद में होने पर अनुत्तम स्पर्श ही अनुनासिक होकर अपने यम को प्राप्त करते हैं (ऋ० प्रा० ६.१९)। इस प्रकार पूर्ववर्ती अनुनासिक स्पर्श ही अनुनासिकयुक्त हो जाता है। किन्तु तै० प्रा० के अनुसार उत्तम स्पर्श बाद में होने पर अनुत्तम स्पर्श से बाद में क्रमशः यम की प्राप्ति होती है (तै० प्रा० २१.१२)। कात्यायन के मत में एकपद में उत्तम स्पर्श बाद में होने पर अनुत्तम स्पर्श से परे विच्छेद (यम) हो जाता है (वा० प्रा० ४.१६३)। सूत्रकार का भी मत कात्यायन के समान ही है। ध्वनिवैज्ञानिक दृष्टि से पूर्ववर्ती अननुनासिक तथा परवर्ती अनुनासिक स्पर्श के मध्य में यम का आगम ही समीचीन है। शौनक का मत समीचीन नहीं है—यह कथन उपयुक्त नहीं है क्योंकि ऋक्चरण में वैसा ही उच्चारण होता है ॥ ८ ॥

[ नासिक्यागमविधानम् ]

## हकारान्नासिक्येन ॥ ९ ॥

**सू० अ०** —(उत्तम स्पर्श बाद में होने पर) हकार से परे नासिक्य (ध्वनि) का आगम होता है।

### निर्मलभाष्यम्

उत्तमे स्पर्शे परे **हकारात् नासिक्येन** व्यवच्छेदः भवति। यथा—'ब्रह्ँम' ( सं० १.१०.४ ) 'अह्ँनुत' ( सं० ६.९२.३ ) 'अह्ँनुताः' ( सं० ६.१२०.३ ) 'अपराह्ँणः' ( सं० ९.६.४६ )। वस्तुतः प्राचीनाचार्याणां पञ्चमे परे हकारात् नासिक्यागमस्य विधानं यममिव ध्वनिविज्ञानविषये सूक्ष्मदृष्ट्या चिन्तनस्य परिणामः। हकारोच्चारणे उपरि कण्ठस्थानेऽधोकण्ठेन ईषत्स्पृष्टं भवति तदैव करणं परस्य अनुनासिकवर्णस्योच्चारणार्थं सज्जीभवति। तदा एव वायोः अल्पभागः अनुनासिकस्पर्शोच्चारणार्थं मुखेन सह नासिकायामप्यायाति। हकारोच्चारणानन्तरं यावत् करणमनुनासिकस्पर्शोच्चारणाय स्पर्शं करोति तन्मध्ये वायोरल्पभागः नासिकातः निःसृत्य नासिक्यध्वनिमुत्पादयति। तद्ध्वनिः हकारेण प्रभावितः हुँ इत्यनेन ख्यातः भवति। संयुक्तव्यञ्जनामुच्चारणवैशिष्ट्यमिदम् अत एव संहितायां न प्राप्यते। तत्र तु ब्रह्म, अह्नुतः, अह्नुताः अपराह्णः इत्येवमेव प्राप्तम्। परश्च उच्चारणे नासिक्यध्वन्यागमेन सहैव उच्चारणीयः ॥ ९ ॥

### शशिकला

पञ्चम स्पर्श बाद में होने पर हकार से परे नासिक्य का आगम होता है। जैसे—ब्रह्ँम्, अह्ँनुतः, अह्ँनुताः, अपराह्ँणः। वस्तुतः पञ्चम स्पर्श बाद में होने पर हकार से परे नासिक्यध्वनि के आगम का विधान यम की भाँति प्राचीन आचार्यों के द्वारा ध्वनिविज्ञान के क्षेत्र में सूक्ष्मदृष्टि से चिन्तन का परिणाम है। हकार के उच्चारण में ऊपरी कोमलतालु (कण्ठ) पर निचले कोमल तालु से ईषत्स्पृष्ट ( थोड़ा सा स्पर्श ) होता है। उसी समय करण परवर्ती अनुनासिक पञ्चमस्पर्श के उच्चारण के लिए तैयार हो जाता है। तभी वायु का अल्पभाग अनुनासिक स्पर्श के उच्चारण के लिए मुख के साथ नासिका में आता है। हकार के उच्चारण के पश्चात् जब करण परवर्ती पञ्चम स्पर्श के उच्चारण के लिए स्थान पर स्पर्श करता है उसी बीच वायु का कुछ भाग नासिका से निकल कर एक नासिक्य-ध्वनि को उत्पन्न कर देता है। यह ध्वनि हकार से प्रभावित रहती है जो हुँ इस संज्ञा से अभिव्यक्त की जाती है। यह नासिक्यध्वनि का आगम (अतिरिक्त उच्चारण) भी संयुक्तव्यञ्जनों का उच्चारण-वैशिष्ट्य है अतः संहिता में नहीं दिखलायां पड़ता। वहाँ ब्रह्म', अह्नुतः, अह्नुताः, अपराह्णः इत्यादि रूप ही प्राप्त होते हैं। किन्तु उच्चारण में नासिक्य-ध्वनि का उच्चारण करना चाहिए ॥ ९ ॥

[ स्वरभक्तिविधानम् ]

**रेफादुष्मणि स्वरपरे स्वरभक्तिरकारस्यार्धं चतुर्थमित्येके ॥ १० ॥**

**सू० अ०**—स्वर है बाद में जिसके ऐसा ऊष्म (वर्ण) बाद में होने पर रेफ से बाद में स्वरभक्ति होती है। ( वह स्वरभक्ति ) अकार की आधी ( होती है )। कतिपय ( आचार्य उसे अकार का ) चतुर्थांश ( अणुभाग मानते हैं )।

### निर्मलभाष्यम्

**रेफाद्** रकाराद् **ऊष्मणि** ऊष्मवर्णे परे **स्वरभक्तिः** भवति चेद् ऊष्मवर्णात् परे **स्वरः** स्यात्। सा स्वरभक्तिः **अकारस्यार्धं** भवति। एके कतिपया आचार्या मन्यन्ते यत्सा अकारस्य **चतुर्थं** चतुराशं भवति। यथा—'कर्शफस्य' ( सं० ३.९.१ ) 'शीर्षाणि' ( सं० १.७.७.) 'चर्षणीनाम् (१.५.४) 'शीर्षक्त्या' (१.१२.३) 'गार्हपत्यः' (सं० १.९.३) इत्यादयः। इत्यत्र रेफात् स्वरपर ऊष्मवर्णः शकारः षकारः हकारश्च। अत एवात्र स्वरभक्तिः भवति। स्वरपरे इति किम्? 'पार्ष्णी' ( सं० १०.२.१ ) इत्यत्र माभूत्।

स्वरस्य भक्तिः स्वरभक्तिः। भक्तिः अंश.। यथोक्तं त्रिभाष्यरत्ने—'भक्तिः भागः अवयवः एकदेश इति यावत्' (तै० प्रा० २१ १५ त्रि०)। स्वरभक्तिः स्वरस्यांशं भवति। वस्तुतः संयोगे संयुक्तव्यञ्जनानामुच्चारणे उच्चारणस्थाने करणस्य स्पर्शनेऽसौविध्यं जायते। यस्मात् परिस्थितिविशेषे संयुक्तव्यञ्जनयोर्मध्ये स्वरांशस्यागमः भवति। स स्वरांशस्यागमः स्वरभक्तिनाम्ना ख्यातः।

अत्र स्वरभक्तेः क्षेत्रमतिसीमितम् विद्यते। स्वरपरोष्मणि परे सत्येव रेफात् स्वरभक्तेः विधानम् कृतम्। या अर्धमात्रिका वा भवति। अन्यव्यञ्जने परे रेफात् या स्वरभक्तिः सा अणुमात्रिका अर्धाणुमात्रिका वा भवति। यथोक्तं सूत्रकारेण—'अन्यस्मिन्व्यञ्जने चतुर्थमष्टमं वा' (१.४.११)। स्वरभक्तिविषये आचार्याणां मतेषु साम्यं न विद्यते।

शौनकेन 'रेफात्स्वरोपहिताद्व्यञ्जनोदयादृकारवर्णास्वरभक्तिरुत्तरा' ( ऋ० प्रा० ६.४६ ) इत्युक्तम्। एवं व्यञ्जने परे सति स्वरपूर्वरेफात् ऋकाररूपा स्वरभक्तिः जायते। यद्यपि शौनकेन व्यञ्जनपरे स्वरपूर्व-

लकारात् स्वरभक्ते विधानं न कृतम् परं च भाष्यकारस्य उवटस्य मते लकारादपि ऌकारसदृशी स्वरभक्तिः भवति—'सा स्वरभक्तिः पूर्वं रेफं लकारं वा भजते। रेफादुत्तरा रेफसदृशी लकारादुत्तरा लकारसदृशी भवति' ( ऋ० प्रा० १.३२ उ० )। वस्तुतः रलवर्णयोः घनिष्ठसम्बन्धः वर्तते अत एव उवटेन लकारस्य परेऽपि स्वरभक्तेः सत्ता स्वीकृता। कात्यायनमते तु 'ऊष्मणि परे रेफलकाराभ्यां स्वरभक्तिः भवति यदि ऊष्मवर्णात् परे स्वरः स्यात्। 'रलावृऌवर्णाभ्यामूष्मणि स्वरोदये सर्वत्र' ( वा० प्रा० ४.१७ )। परं तैत्तिरीयप्रातिशाख्ये 'रेफोष्मसंयोगे रेफस्वरभक्तिः' ( तै० प्रा० २१ १५) इत्युक्तम्। परञ्च तन्मते ऊष्मवर्णस्य द्वित्वे जाते ऊष्मवर्णात् वा परे प्रथमे स्पर्शे जाते स्वरभक्तिः न भवति—'न क्रमे प्रथमपरे प्रथमपरे' ( तै० प्रा० २१.१६ )।

एवं स्पष्टमिदं यत् स्वरभक्तिविषये आचार्याणां मते किञ्चिद् वैषम्यं दृश्यते। शौनकेन एव स्वरपूर्वाद् रेफाद् व्यञ्जनपरे स्वरभक्तेः सत्ता स्वीकृता। परं च कात्यायनेन रेफाद् ऊष्मवर्णस्य परे स्वरस्य उपस्थितिम आवश्यकं मतम्। तैत्तिरीयप्रातिशाख्यमते न तु ऊष्मवर्णस्य परे एव स्वरस्य विद्यमानता स्वीकृता नैव च रेफपूर्वमेव। परन्तु तद्भाष्यकारैः प्रस्तुतस्वरभक्तिविषये निर्दिष्टानि निदर्शनानि, तेषामनुशीलनेन ज्ञायते यद् रेफपूर्वं तु स्वरस्य विद्यमानता अनिवार्या। सूत्रकारेण अत्र स्वरपरोष्मणि परे रेफात् स्वरभक्तेः सत्ता स्वीकृता। 'अन्यस्मिन्व्यञ्जने चतुर्थमष्टमं वा' ( १.४.११ ) इत्यनेन स्वरपरान्यव्यञ्जने परे सत्यपि रेफात् स्वरभक्ते विधानं कृतं परञ्च तत्स्वरभक्तिः अस्याः स्वरभक्तेः अर्धकालिका भवति। उल्लेखनीयमत्र यत् स्वरभक्तिविषये मतवैषम्यं चरणभेदाद् भवति।

अथर्ववेदसंहितायाम् ऊष्मवर्णपरे लकारात् स्वरभक्तेः उच्चारणं न। अत्र तु अभिनिधानः। तत्र चरणभेदकारणम्। अत एव सूत्रकारेण उक्तम् 'लकारस्योष्मसु' ( १.२.५ )।

सा स्वरभक्तिः कीदृशी कियती मात्रिका च इत्युच्यते अत्र। अकारस्य ह्रस्वस्वरस्य अर्द्धम् अर्द्धांशम्। अर्द्धमात्रिका इत्यर्थः। स्वरपूर्वे ऊष्मणि परे सा स्वरभक्तिः अकारसदृशी अर्द्धमात्रा काला भवति। परञ्च एकेषामाचार्याणां मते अकारसदृशी सा अकारस्य चतुर्थांशा अणुमात्रिका इत्यर्थः। व्यञ्जनपरे रेफात् स्वरभक्ते विधानं 'अन्यस्मिन्व्यञ्जने चतुर्थमष्टमं वा' ( १.४.११ ) इत्यत्र विहितम्।

उल्लेखनीयमत्र यत् स्वरभक्तिरपि संयुक्तव्यञ्जनानामुच्चारण-वैशिष्ट्यम्। अत एव संहितायां न दृश्यते। परञ्चोच्चारणे स्वरभक्तिः कर्त्तव्या ॥ १० ॥

**शशिकला**

ऊष्मवर्ण बाद में होने पर रेफ से बाद में स्वरभक्ति होती है यदि ऊष्मवर्ण से बाद में स्वर हो। वह स्वरभक्ति अकार का आधा भाग अर्थात् आधी मात्रा काल वाली होती है। कतिपय आचार्य उसे अकार के चौथाई भाग के बराबर अणुमात्रिक मानते हैं। जैसे—'कर्शफस्य' 'शीर्षाणि' 'चर्षणीनाम्' 'शीर्षक्त्या' गार्हपत्यः' इत्यादि। यहाँ स्वर है बाद में जिसके ऐसा ऊष्मवर्ण बाद में होने के कारण रेफ से बाद में स्वरभक्ति होती है। 'स्वर बाद में होने पर' यह क्यों कहा ? 'पार्ष्णी' यहाँ स्वरभक्ति न होवे।

स्वर की भक्ति स्वरभक्ति कहलाती है। भक्ति का अर्थ है—अंश, भाग। जैसा सोमयार्य ने कहा है—'भक्ति का अर्थ है—भाग, अवयव, एक भाग (तै० प्रा० २१.१५ त्रि०)। स्वरभक्ति स्वर का अंश होती है। वस्तुतः संयुक्तव्यञ्जनों के उच्चारण में उच्चारणस्थान पर करण से स्पर्श तथा स्फोटन में असुविधा होती है जिससे परिस्थितिविशेष में संयुक्त व्यञ्जनों के मध्य में एक स्वरांश का आगम हो जाता है। यही स्वरांश का आगम स्वरभक्ति कहलाता है।

यहाँ स्वरभक्ति का शेत्र अतिसीमित है। स्वर बाद में है जिसके ऐसा ऊष्म वर्ण बाद में होने पर स्वरभक्ति का विधान हुआ है जो अर्ध या अणुमात्रा काल वाली है। अन्यव्यञ्जन बाद में होने पर रेफ से बाद में जो स्वरभक्ति होती है वह अणुमात्रिक या अर्धाणुमात्रिक होती है। जैसा सूत्रकार ने कहा है—स्वर है बाद में जिसके ऐसा ऊष्मव्यतिरिक्त व्यञ्जन बाद में होने पर रेफ से परे जो स्वरभक्ति होती है, वह अणुमात्रिक या अर्धाणुमात्रिक होती है (४.४.११)।

शौनक के मत में 'स्वरपूर्व में तथा व्यञ्जन है बाद में जिसके ऐसे रेफ से बाद में ऋवर्णात्मक स्वरभक्ति होती है' ( ऋ० प्रा० ६.४६ )। रेफ से बाद में स्वर-भक्ति होती है यदि उसके पूर्व में स्वर तथा वाद में व्यञ्जन हो किन्तु भाष्यकार उवट ने स्वरपूर्व में तथा व्यञ्जन बाद में है जिसके ऐसे लकार से बाद में लृकार-सदृशी स्वरभक्ति का भी उल्लेख किया है

( ऋ० प्रा० १.३२ उ० )। वस्तुतः रेफ तथा लकार का घनिष्ठ सम्बन्ध है इसी लिए उवट ने लकार से बाद में ऌकार सदृशी स्वरभक्ति को स्वीकार किया है। कात्यायन के अनुसार स्वर बाद में है जिसके ऐसा ऊष्मवर्ण बाद में होने पर रेफ तथा लकार से बाद में स्वरभक्ति होती है' ( वा० प्रा० ४.१७ )। किन्तु तै० प्रा० में रेफ तथा ऊष्मवर्ण का संयोग होने पर स्वरभक्ति का विधान किया गया है ( तै० प्रा० २१.१५ )। परन्तु इसके मत में ऊष्मवर्ण का द्वित्व होने पर अथवा उससे बाद में प्रथमस्पर्श होने पर स्वरभक्ति नहीं होती।

इस प्रकार स्पष्ट है कि स्वरभक्ति के विषय में आचार्यों में कुछ न कुछ मत-वैषम्य है। शौनक ने स्वर पूर्व में होने पर रेफ से बाद में स्वरभक्ति के होने का विधान किया है यदि उस रेफ से बाद में कोई भी व्यञ्जन हो। परन्तु कात्यायन ने रेफ तथा लकार दोनों से बाद में स्वरभक्ति की सत्ता को माना है यदि उस रेफ तथा लकार से बाद में स्वरपर ऊष्म हो। तै० प्रा० में रेफ से बाद में ऊष्म होने पर स्वरभक्ति को स्वीकार किया गया है किन्तु वहाँ न तो रेफ से पूर्व में और न तो ऊष्म से बाद में ही स्वर की विद्यमानता का निर्देश हुआ है। परन्तु भाष्यकारों द्वारा प्रदत्त स्वरभक्ति के उदाहरणों के अनुशीलन से स्पष्ट होता है कि रेफ से पूर्व में स्वर का होना अनिवार्य है। सूत्रकार ने यहाँ ऊष्म बाद में होने पर रेफ से परे स्वरभक्ति की सत्ता का विधान किया है, यदि उस ऊष्म वर्ण से बाद में स्वर हो। परवर्ती सूत्र ( १.४.११ ) में स्वर है बाद में जिसके ऐसा व्यञ्जन बाद में होने पर भी रेफ से बाद में स्वरभक्ति का विधान किया गया है किन्तु वह स्वरभक्ति ऊष्मपर ( ऊष्म है बाद में जिसके उस ) स्वरभक्ति से आधी उच्चारण-काल वाली होती है। यहाँ उल्लेखनीय है कि स्वरभक्ति-विषयक यह मतवैषम्य चरण-भेद के कारण है।[1]

उपर्युक्त विवेचन से स्पष्ट है कि स्वरभक्ति का उच्चारण व्यञ्जनों के संयोग में होता है। यहाँ ध्यातव्य है कि लकार से बाद में ऊष्मवर्ण

१. ऋक्चरण में स्वरभक्ति के उच्चारण के स्थल को ध्यान में रखते हुए शौनक ने ऋ० प्रा० में, कृष्णयजुश्चरण में स्वरभक्ति के उच्चारण स्थल को ध्यान में रखते हुए अज्ञातनाम आचार्य ने तै० प्रा० में, शुक्लयजुश्चरण में स्वरभक्ति के उच्चारणस्थल को ध्यान में रखकर कात्यायन ने वा० प्रा० में तथा अथर्वचरण में स्वरभक्ति के स्थल को ध्यान में रखकर कौत्स ने अ० च० में स्वरभक्ति का विधान किया है।

होने पर स्वरभक्ति नहीं होती—अभिनिधान होता है। इसीलिए सूत्रकार ने विधान किया है कि 'ऊष्मवर्ण बाद में होने पर लकार का ( अभिनिधान होता है )' ( १.२.५ )।

वह स्वरभक्ति कैसी और कितनी मात्रा काल वाली होती है इसको भी यहाँ बतलाया गया है—'स्वर है बाद में जिसके ऐसा ऊष्मवर्ण बाद में होने पर रेफ से परे स्वरभक्ति अकार की आधी मात्राकाल वाली होती है'। तात्पर्य यह है कि वह स्वरभक्ति अकार के सदृश तथा आधी मात्राकाल वाली होती है। किन्तु कुछ आचार्यों के मत में वह अकार के सदृश तथा अणुमात्रा काल वाली होती है। 'अन्य व्यञ्जन बाद में होने पर रेफ से परे स्वरभक्ति का कथन आगे ४.४.११ में किया है।

यहाँ उल्लेखनीय है कि स्वरभक्ति भी संयुक्तव्यञ्जनों का उच्चारण-वैशिट्य है। इसलिए संहिता में वह नहीं दिखलाई पड़ती किन्तु उच्चारण में स्वरभक्ति का उच्चारण करना चाहिए ॥ १० ॥

## अन्यस्मिन्व्यञ्जने चतुर्थमष्टमं वा ॥ ११ ॥

सू० अ०—( स्वर बाद में है जिसके ऐसे ) ( ऊष्म से ) अन्य व्यञ्जन बाद में होने पर ( रेफ से बाद में स्वरभक्ति होती है )। ( वह स्वरभक्ति अकार का ) चतुर्थांश अथवा अष्टमांश ( होती है )।

### निर्मलभाष्यम्

'रेफादुष्मणि स्वरपरे स्वरभक्तिरकारस्यार्धं चतुर्थमित्येके' ( १.४.१० ) इत्यनेन स्वरपरोष्मवर्णेषु परेषु रेफाद् अकाररूपा अर्धमात्रिका अणुमात्रिका वा स्वरभक्तिरुक्ता। अत्र ऊष्मव्यतिरिक्तव्यञ्जने परे रेफात् स्वरभक्तिविधानं कृतम्। अन्यस्मिन् ऊष्मव्यतिरिक्ते व्यञ्जने व्यञ्जनवर्णे परे सति रेफात् स्वरभक्तिः भवति चेत् तद्वयञ्जनस्य परे स्वरः स्यात्। सा स्वरभक्ति अकारस्वरूपा चतुर्थम् अणुमात्राकाला अष्टममर्धाणुमात्राकाला वा भवति। येषामाचार्याणा मते ऊष्मणि परे रेफात् स्वरभक्तिः अर्धमात्रिका तेषां मते अन्यस्मिन्व्यञ्जने परे अणुमात्रिका परञ्च येषां मते ऊष्मणि परे अणुमात्रिका तेषां मते तु अर्धाणुमात्रिका भवति। यथा—'अर्यमा' ( सं० १.११.१ ) 'पर्वः' ( सं० १ १२.२ ) 'धर्मणा' ( सं० ६.१३२.१ ) ॥ ११ ॥

## शशिकला

'स्वर है बाद में जिसके ऐसा ऊष्म वर्ण बाद में होने पर रेफ से बाद में स्वरभक्ति होती है। ( वह ) अकार की आधी ( होती है ) । कतिपय आचार्यों के मत में ( अकार की ) चतुर्थांश ( होती है )' ( १.४.१० ) इस विधान द्वारा रेफ से बाद में ऊष्म होने पर अकाररूपा अर्धमात्रिका अथवा अणुमात्रिका स्वरभक्ति होने का कथन किया गया है। यहाँ ऊष्म से अन्य व्यञ्जन बाद में होने पर रेफ से बाद में स्वरभक्ति का विधान किया गया है। ऊष्म से अन्य व्यञ्जन बाद में होने पर रेफ से बाद में स्वरभक्ति होती है यदि उस व्यञ्जन से बाद में स्वर हो। वह स्वरभक्ति अकार स्वरूप वाली तथा अणुमात्रिक अथवा अर्धाणुमात्रिक होती है। जिन आचार्यों के मत में ऊष्म बाद में होने पर रेफ से बाद में स्वरभक्ति अर्धमात्रिक होती है उनके अनुसार ऊष्म से अन्य व्यञ्जन बाद में होने पर रेफ से बाद में स्वरभक्ति अणुमात्रिक होती है किन्तु जिनके मत में ऊष्म बाद में होने पर रेफ से बाद में स्वरभक्ति अणुमात्रिक होती है उनके अनुसार तो अर्धाणुमात्रिक होती है। जैसे — 'अर्यमा' 'पर्वः' 'धर्मणा' इत्यादि ॥ ११ ॥

[ स्फोटनकालनिरूपणम् ]

## तदेव स्फोटनः ॥ १२ ॥

**सू० अ०**—स्फोटन वही ( चतुर्थांश अथवा अष्टमांश काल वाला होता है )।

## निर्मलभाष्यम्

स्फोटनस्य कालः निरूप्यतेऽत्र। **तत्** चतुर्थांशः अष्टमांशः वा कालिकः **एव स्फोटनः** भवति। स्फोटनः संयोगे व्यञ्जनस्य पृथग् उच्चारणम्। वर्गविपर्ययेषु संयोगेषु संयुक्तव्यञ्जनानाम् उच्चारणं स्फोटनेन पृथग्रूपेण भवति। यदि पूर्ववर्तिवर्णः विरामे अवग्रहे विद्यते। वस्तुतः अत्र पूर्वस्य स्पर्शस्य उच्चारणे स्थानकरणयोः विमोक्षान्तरं परस्पर्शस्योच्चारणं कर्तव्यम्। यथोक्तं सूत्रकारेण—'वर्गविपर्यये स्फोटनः पूर्वेण चेद्विरामः (२.१ ३८)। अयं स्थानकरणयोः विमोक्षकालः चतुर्थांशमात्रः = अणुमात्रिको भवति परञ्च एकेषामाचार्याणां मते एतत्कालः अष्टमांश = अर्द्धाणुमात्रिकः भवति ॥१२॥

### शशिकला

यहाँ स्फोटन के काल का निरूपण किया गया है। स्फोटन भी वही अणुमात्रिक ( चतुर्थांश ) अथवा र्धाअणुमात्रिक ( अष्टमांश ) होता है। संयोग में संयुक्त व्यञ्जनों का पृथक् उच्चारण स्फोटन कहलाता है 'संयोग में वर्ण का विपर्यय होने पर पूर्ववर्ती (व्यञ्जन) से (परवर्ती व्यञ्जन का) पृथक् उच्चारण होता है। यदि पूर्ववर्ती व्यञ्जन विराम (अवग्रह) में स्थित हो' (२.१.३८) के अनुसार संयोग में वर्ण का विपर्यय होने पर पूर्ववर्ती स्पर्श से परवर्ती स्पर्श का स्फोटन होता है। वस्तुतः उस स्थल पर पूर्ववर्ती स्पर्श के उच्चारण में स्थान तथा करण का अलगाव ( विमोक्ष ) करने के बाद परवर्ती स्पर्श का उच्चारण करना चाहिए। वह स्थान तथा करण के विमोक्ष का काल अणुमात्रिक होता है। कतिपय आचार्यों के अनुसार अर्धाणुमात्रिक होता है ॥ १२ ॥

[ संयोगाविधावविधानम् ]

## पूर्वस्वरं संयोगाविघातश्च ॥ १३ ॥

**सू० अ०**—( स्वरभक्ति तथा स्फोटन ) पूर्ववर्ती स्वर के ( अङ्ग होते हैं ) तथा संयोग का विनाश (विघात) नहीं करते।

### निर्मलभाष्यम्

स्वरभक्तिः स्फोटनश्च **पूर्वस्वरं** भजते। पूर्वस्वरस्याङ्गं भवतीत्यर्थः। 'संयोगादि पूर्वस्य' ( १.२.१५ ) इत्यनेन संयोगे प्रथमव्यञ्जनस्य पूर्वस्वराङ्गत्वमुक्तम्। अत्र स्वरभक्तेः स्फोटनस्य च पूर्वस्वराङ्गता विहिता। ननु स्वरभक्त्या स्फोटनेन च पूर्वेण व्यञ्जनेन परस्य व्यञ्जनस्य पृथक्त्वं भवतिः एवं संयोगः स्याद्, न वा। अत एवोच्यते—स्वरभक्तिः स्फोटनश्च **संयोगाविघातः** संयोगस्य अविघातः=विनाशं न करोति। स्वरभक्त्या स्फोटनेन च संयोगः विद्यमानः एव। न तस्य विनाशः ॥ १३ ॥

### शशिकला

स्वरभक्ति और स्फोटन पूर्ववर्ती स्वर को प्राप्त करते हैं। तात्पर्य यह है कि ये दोनों ही पूर्ववर्ती स्वर के अङ्ग होते हैं। 'संयोग का आदि (व्यञ्जन) पूर्ववर्ती स्वर का (अङ्ग होता है)' (१.२.१५) के द्वारा संयोग के आदि व्यञ्जन के पूर्व स्वर के अङ्ग होने का विधान किया गया है। यहाँ शङ्का हो सकती है कि स्वरभक्ति तथा स्फोटन तो संयोगादि व्यञ्जन

से बाद में होते हैं फिर वे किस स्वर के अङ्ग होते हैं। इसी के समाधान के लिए सूत्रकार ने स्वरभक्ति तथा स्फोटन के भी पूर्ववर्ती स्वर के अङ्ग होने का विधान किया है। स्वरभक्ति तथा स्फोटन होने पर पूर्ववर्ती व्यञ्जन का परवर्ती से पृथकत्व हो जाता है फिर संयोग की सत्ता विद्यमान रहती है या नहीं? इस विषय में यहाँ कहा गया है कि ये दोनों स्वरभक्ति तथा स्फोटन संयोग का विनाश ( विघात ) नहीं करते। संयोग की सत्ता बनी रहती है ॥ १३ ॥

[ संहितायां प्लुतस्वरस्य स्थलानि ]

**खण्वखा३इ खैमखा३इ मध्ये तदुरि, इदं भूया३इदा३मिति, ऊर्ध्वो नु सृष्टा३स्तिर्यङ् नु सृष्टा३ः सर्वा दिशः पुरुष आ बभूवाँ३, पराञ्चमोदनं प्राशी३ः प्रत्यञ्चा३मिति, त्वमोदनं प्राशी३स्त्वा-मोदना३ इति, वशेया३मवेशे३ति, यत्तदासी३दिदं नु ता३दिति, इति प्लुतानि ॥१४॥**

सू० अ०—(अथर्ववेद में अधोलिखित स्थलों पर प्लुत स्वर प्राप्त होता है– ) खण्वखा३इ खैमखा३इ मध्ये तदुरि, इदं भूया३इदामिति, ऊर्ध्वो नु सृष्टा३स्तिर्यङ् नु सृष्टा३ः सर्वा दिश पुरुष आ बभूवाँ३. पराञ्चमोदनं प्राशी३ः प्रत्यञ्चा३मिनि, त्वमोदनं प्राशी३स्त्वामोदना३ इति, वशेया३मवे-शे३ति, यत्तदासीऽदिदं नु ता३दिति ।

**निर्मलभाष्यम्**

अथर्ववेदचरणस्य संहितासु एषु पञ्चदशस्थलेषु प्लुतस्वराः प्राप्यन्ते। यथा—'खण्वखा३इ खैमखा३इ मध्ये तदुरि' (सं० ४.१५.१५ , 'इद भूया३-इदा३मिति' ( सं० ९.६.१८ ) 'ऊर्ध्वो नु सृष्टा३स्तिर्यङ् नु सृष्टा३ः सर्वा दिशः पुरुष आ बभूवाँ३' ( सं० १०.२.२८ ), 'पराञ्चमोदनं प्राशी३ प्रत्य-ञ्चा३मिति ( सं० ११.३.२६ ) 'त्वमोदनं प्राशी३स्त्वामोदना३ इति' ( सं० ११.३ २७). वशेया३मवशेति' (सं० १२.४.४२) 'यत्तदासी३दिदं नु ता३दिति' ( सं० १२.५.५० ) ॥ १४ ॥

**शशिकला**

खण्वखा३इ········ता३दिति—इन पन्द्रह स्थलों पर प्लुत स्वर प्राप्त होते हैं। जैसे ········॥ १४ ॥

## परिपाठ एतावत्स्वर्थेऽपि[1] ॥ १५ ॥

**सू० अ०**-प्रयोजन होने से इन प्लुतों का इकट्ठा पाठ किया गया है।

### निर्मलाभाष्यम्

**अर्थेऽपि** प्रयोजने सति च **एतावत्सु** एतेषां प्लुतानाम् ईदृशः **परिपाठः** अथर्वचरणात्समाहृत्य पाठः कृतः, पूर्वसूत्रे इति शेषः। कीदृशः अर्थः इत्युच्यते—॥ १५ ॥

### शशिकला

प्रयोजन होने के कारण इन प्लुतों को अथर्वचरण की संहिताओं से इकट्ठा करके पूर्ववर्ती सूत्र में पढ़ा गया है। 'किस प्रयोजन के कारण इनका परिपाठ किया गया है' इसको आगे के सूत्रों में बतलाया जाएगा·········॥ १५ ॥

## बहुविधास्त्रिविधा प्लुतयो भवन्ति।
## स्वरपरा अभिनिष्ठानपरा व्यञ्जनपराः[2] ॥ १६-१७ ॥

**सू० अ०**—अनेक प्रकार के प्लुत होते हैं। ( उनके ) मुख्य रूप से तीन भेद ( होते हैं )—स्वरपर, विसर्जनीयपर तथा व्यञ्जनपर।

### निर्मलभाष्यम्

**प्लुतयः** प्लुतस्वराः **बहुविधा** अनेकप्रकाराः **भवन्ति**। ताः प्लुतयः मुख्यतः **त्रिविधा** भेदत्रययुताः भवन्ति। तत्र **स्वरपराः** स्वरः परे येषां ते. **अभिनिष्ठानपराः** अभिनिष्ठानः विसर्जनीयः परे येषां ते, **व्यञ्जनपराः** व्यञ्जनं परे येषां ते इति। 'विसर्जनीयोऽभिनिष्ठानः' (१.२.१) इत्यनेनाभिनिष्ठान उक्तः। स्वरपरः यथा—'अवशेति' (सं० १२.४.४२)। अभिनिष्ठानपरः यथा—'भूया३इदा३म्' ( सं० ९.६.१८ )। व्यञ्जनपरः यथा ·'इदा३म्' ( सं० ९.६.१८ ) 'यत्तदासी३दिदम्' ( सं०१२.५.५० ) ॥ १६–१७ ॥

---

१. (क) किमर्थः परिपाठ ·····इति पाठः।
(ख) सूत्रमिदं नास्ति। 'किमर्थः' इत्यनेन ज्ञायते यद्भाष्यस्यांशोऽयम्। अत एव ह्विटनीमहाभागेन सूत्रान्तर्गतं न गृहीतम् (द्रष्टव्य १.४.१४ ह्विटनी॰ याख्या) परञ्च (क) पाण्डुलिप्यों इतः परं पादसमाप्तिपर्यन्तं पञ्च सूत्राणि सूत्ररूपेणोल्लिखितानि। अत एवात्र सूत्ररूपेण गृहीतानि।

२. (ख) सूत्रमिदं नास्ति। द्रष्टव्या १४.१५ भाष्ये टिप्पणी।

### शशिकला

प्लुत स्वर अनेक प्रकार के होते हैं। वे मुख्यतः तीन प्रकार के होते हैं। स्वरपर=स्वर हैं बाद में जिनके ऐसे, अभिनिष्ठानपर=विसर्जनीय हैं बाद में जिनके ऐसे, तथा व्यञ्जनपर=व्यञ्जन हैं बाद में जिनके ऐसे। 'विसर्जनीय अभिनिष्ठान कहलाता है' (१.२.१) के द्वारा अभिनिष्ठान संज्ञा को बतलाया गया है। स्वरपर जैसे—'अवशेति'[१]। अभिनिष्ठानपर जैसे—'भूयाऽइदा३म्'[२]। व्यञ्जनपर जैसे—'इदा३म्'[३] 'यत्तदासी३-दिदम्'[४] ॥ १६–१७ ॥

## तासां या समानाक्षरपरास्ता इतावप्लुतवद्भवन्ति[५] ॥ १८ ॥

सू० अ०—उन (प्लुतों) में जो समानाक्षरपर (प्लुत) हैं, वे इति बाद में होने पर अप्लुत के समान होते हैं।

### निर्मलभाष्यम्

**तासां** प्लुतानां **या समानाक्षरपराः** प्लुतयः सन्ति **ताः** प्लुतयः **इतौ** इति परे **अप्लुतवत्** प्लुतवद् न भवन्ति। दीर्घवद्भवन्तीत्यर्थः। तस्य इतेः इकारेण सह सन्धिः भवति। यथा—'अवशेति' (सं० १२.४.४२)। इत्यत्र 'अवशा आबभूवाँ इतीतावेकारोऽप्लुतः' (१.४.६) इत्यनेन सन्धिना प्राप्तः एकारः अप्लुतः भवति। एतावदेव परिपाठस्य प्रयोजनम् ॥ १८ ॥

### शशिकला

उन प्लुतों में जो समानाक्षरपर प्लुत हैं, वे इति बाद में होने पर अप्लुत के समान होते हैं, दीर्घ स्वर के समान रहते हैं-यह अर्थ है। उनकी इति के इकार के साथ सन्धि हो जाती है। जैसे—'अवशेति'[६]। यहाँ 'इति बाद में होने पर अवशा तथा अबभूवाँ का ( सन्धि से प्राप्त ) एकार प्लुत नहीं होता' से सन्धि से प्राप्त एकार प्लुत नहीं होता। यहीं प्लुत-स्वरों के परिपाठ का प्रयोजन है।

---

१. अवशा३। इति ( प० पा० )
२. भूया३ः। इदाम् ( प० पा० )
३ इदा३म् ( प० पा० )
४. यत्। तत्। आसी३त्। इदम् ( प० पा० )
५. (ख) नास्ति सूत्रमिदम्। द्रष्टव्या १.४.१५ भाष्ये टिप्पणी।
६. अवशा३। इति ( प० पा० )

## इत उत्तरमधिकम्[1] ॥१९॥

**सू० अ०**—( प्लुत स्वरों के विषय में ) इससे अन्य ( विधान ) भी किया गया है।

### निर्मलभाष्यम्

प्लुतस्वराणां परिपाठस्य प्रयोजनं पूर्वसूत्रे विहितम्। इतः तत्प्रयोजनाद् अधिकम् अन्यं विधानमप्यत्र उत्तरम् पूर्वं कृतम्। यथा–'दीर्घप्लुतयो पूर्वामात्रा' (१.१.३८) 'त्रिमात्रः प्लुतः' (१.२.२१) 'अवशा आबभूवाँ इतीतावेकारोऽप्लुतः' (१.४.६) इति ॥१९॥

॥ इति श्रीमत्पण्डितदशरथपाठकसूनुना डा० जमुनापाठकेन कृते निर्मलभाष्ये चतुरध्यायिकायाः प्रथमाध्यायस्य चतुर्थः पादः ॥

॥ इति प्रथमोऽध्यायः ॥

### शशिकला

प्लुत स्वरों के परिपाठ का प्रयोजन इसके पूर्ववर्ती सूत्र में कहा जा चुका है। इस प्रयोजन के अतिरिक्त प्लुतस्वर-विषयक अन्य भी विधान इस ग्रन्थ में किये गये हैं। जैसे—'दीर्घ और प्लुत ऋवर्ण में रेफ की पूर्ववर्ती एक मात्रा संश्लिष्ट होती है' 'प्लुत तीन मात्रा काल वाला होता है' 'इति वाद में होने पर अवशा३ तथा आबभूवाँ३ का (सन्धि से प्राप्त) एकार प्लुत नहीं होता' ॥ १९ ॥

॥ चतुरध्यायिका के प्रथम अध्याय के चतुर्थ पाद की डा० जमुनापाठक-कृत 'शशिकला' व्याख्या समाप्त ॥

॥ प्रथम अध्याय समाप्त ॥

---

१. (ख) सूत्रमिदं नास्ति। द्रष्टव्या १.४.१५ भाष्ये टिप्पणी।

# द्वितीयोऽध्यायः

## अथ प्रथमः पादः

[ संहिताधिकारकथनम् ]

**संहितायाम् ॥ १ ॥**

**सू० अ०—( आगे विहित विधान ) संहिता में (लागू होंगे) ।**

### निर्मलभाष्यम्

अधिकारोऽयम् । यदित उत्तरं वक्ष्यामः तत्संहितायामित्येदधिकृतं वेदितव्यम् । का पुनः संहिता ? उच्यते—संहिता अर्थद्वये प्रयुक्ता—सन्ध्यर्थं मन्त्राणां सङ्कलनार्थं च । सन्ध्यर्थं यथा—'संहिता' 'पदान्तान्पदादिभिः सन्दधतेति यत्सा कालाव्यवायेन' (ऋ० प्रा० २.१-२) इति शौनकः । 'नानापदसन्धानसंयोगः संहितेत्यभिधीयते' ( तै० प्रा० २४.३ ) इति तैत्तिरीयप्रातिशाख्यकारः । 'परस्सन्निकर्षस्संहिता' ( पा० १.४ १०९ ) इति वैयाकरणाः । तथा च मम वैदिकध्वनिविज्ञाने—

वर्णानामतिसामीप्यं संहिता उच्यते बुधैः ।
सन्धिनाम्ना तु सा ख्याता अन्यैः पूर्वमहर्षिभिः ॥
(वैदिकध्वनिविज्ञानम् ६.१)

मन्त्राणां सङ्कलनार्थं यथा—ऋग्वेदसंहिता, तैत्तिरीयसंहिता, शुक्लयजुर्वेदसंहिता इत्यादयः । अत्र संहितापदेनाथर्वचरणस्य शाखानां संहिता बोधव्या ।

प्रातिशाख्यकाराः 'पदाः सिद्धाः' इति मन्यन्ते । यथोक्तं यास्केन – 'पदप्रकृतिः संहिता । पदप्रकृतीनि सर्वचरणानां पार्षदानि' (नि० १.६) । पदानामेव सन्धिना संहिता निष्पद्यते । अतएव तन्मते, पदानि प्रकृतिर्यस्याः सेयं पदप्रकृतिः संहिता इति । ननु यज्ञादिषु संहितैव प्रयुज्यते न तु पदाः । अत एव पदाः कथं सिद्धाः ? उच्यते—वस्तुतस्तु संहितैव प्रकृतिः पदानाम् । परञ्च 'पदानां सन्धिना एव संहितायाः निष्पत्तिः' इति प्रातिशाख्यशास्त्रस्य प्रतिपाद्यविषयः । अत एव तत्र पद एव प्रकृतिः, संहिता विकृतिश्च । अस्मादेव सूत्रकारेणाप्यत्र संहितायामित्यधिकारः कृतः ॥ १ ॥

## शशिकला

यह अधिकार सूत्र है। इसके आगे जो विधान किया जाएगा, वह संहिता में लागू होग'-ऐसा जानना चाहिए। 'संहिता' क्या है ? 'संहिता' यह पद दो अर्थों में प्रयुक्त हुआ है—सन्धि के लिए और मन्त्रों के संकलन के लिए। सन्धि के लिए जैसे (१) 'काल के व्यवधान के बिना जो पदान्तों को पदादियों से मिलाती हुई चलती है, वह संहिता है'—यह शौनक का मत है। तैत्तिरीय प्रातिशाख्यकार के अनुसार 'अनेक पदों का सन्धान पद-संहिता कहलाता है' 'वर्णों का अतिशय सामीप्य संहिता कहलाता है' ऐसा वैयाकरण , पाणिनि ) का मत है। जैसा कि मेरे द्वारा रचित वैदिक-ध्वनिविज्ञानम् में कहा गया है—'वर्णों का अतिशय सामीप्य संहिता कहलाता है। वह ( संहिता ) अन्य पूर्ववर्ती महर्षियों के द्वारा सन्धि नाम से भी अभिहित की गई है'।

इन स्थलों पर 'संहिता' पद का प्रयोग सन्धि के लिए हुआ है। मन्त्रों के सङ्कलन के लिए जैसे—ऋग्वेदसंहिता, तैत्तिरीयसंहिता, शुक्ल-यजुर्वेदसंहिता इत्यादि। इन स्थलों पर 'संहिता' पद का प्रयोग मन्त्रों के सङ्कलन के लिए हुआ है। यहाँ सूत्र में 'संहिता' पद का प्रयोग अथर्वचरण की संहिता के लिए हुआ है।

प्रातिशाख्यकार पदों को सिद्ध मानते हैं। जैसा यास्क ने कहा है—पदप्रकृति संहिता है। पद है प्रकृति जिसकी वह संहिता है ऐसा सभी चरणों के प्रातिशाख्य मानते हैं'। अतएव प्रातिशाख्यकारों के अनुसार पद है प्रकृति जिसकी वह संहिता है। **शङ्का**—यज्ञ इत्यादि में संहिता का प्रयोग होता है, न कि पदों का। यदि पद संहिता की प्रकृति होते तो वहाँ पदों का ही प्रयोग होना चाहिए। किन्तु ऐसा नहीं होता तो पद सिद्ध ( प्रकृति ) कैसे हैं ? **समाधान**—वस्तुतः 'संहिता' ही पदों की प्रकृति है। संहिता से पद निष्पन्न होते हैं न कि पदों से संहिता। किन्तु पदों की सन्धि से संहिता का निर्माण बतलाना ही प्रातिशाख्य का मुख्य प्रतिपाद्य विषय है। अतएव प्रातिशाख्य-ग्रन्थों में पद को प्रकृति तथा संहिता को विकृति माना गया है। इसी लिए सूत्रकार ने यहाँ 'संहिता' का अधिकार किया है॥ १॥

[ तृतीयस्पर्शभावः ]

**पदान्तानामनुत्तमानां तृतीया घोषवत्स्वरेषु ॥ २ ॥**

**सू० अ०**—घोषव्यञ्जन तथा स्वरवर्ण बाद में होने पर पञ्चम से अन्य पदान्त (स्पर्श) का तृतीय (स्पर्श) हो जाता है।

## निर्मलभाष्यम्

'स्पर्शाः प्रथमोत्तमाः' (१.१.६) इत्यनेन प्रथमा उत्तमाश्च स्पर्शाः पदान्तीयाः भवन्तीत्युक्तम्। तत्र **पदान्तानां** पदान्तीयस्पर्शानां मध्ये **अनुत्तमानाम्** उत्तमव्यतिरिक्तानां प्रथमानां स्पर्शाणां स्थाने **घोषवत्स्वरेषु** घोषेषु स्वरेषु च **तृतीयाः** सस्थानीयाः तृतीयाः भवन्ति। 'आन्तर्येण वृत्तिः' (१.४.४) इत्यनया परिभाषया ककारस्य गकारः टकारस्य डकारः, तकारस्य दकार, पकारस्य बकारः भवति। चकारस्य जकारः न प्राप्तः। 'न चवर्गः' (१.१.७) इत्यनेन पदान्तत्वाभावात्। ककारस्य गकारः यथा—'सुहस्तो गोधुग् उत' (सं० ७.७३.७)। टकारस्य डकारः यथा—'सा विराड् ऋषयः' (सं० ८.९.८) तकारस्य दकारः यथा—'यद् यत्र विश्वम्' ( सं० २.१.१ ), 'यद् यामं चक्रुः' ( सं० ६.११६.१ ) 'यस्माद् वार्नाम' ( सं० ३.१३.३ ) 'यद् राजानः' (सं० ३.२९.१), पकारस्य बकारः यथा—'त्रिष्टुब् गायत्री' (सं० १४ २.६) ॥२॥

## शशिकला

'प्रथम तथा उत्तम स्पर्श पद्य होते हैं' (१.१६) इसके द्वारा प्रथम तथा उत्तम वर्णों के पदान्तीय होने का विधान किया जा चुका है। उन पदान्तीय प्रथम तथा उत्तम स्पर्शों में उत्तम स्पर्श से अन्य अर्थात् प्रथम-स्पर्श वर्ण, घोषव्यञ्जन तथा स्वर बाद में होने पर अपने संस्थानीय तृतीय स्पर्श को प्राप्त हो जाते हैं। 'आदेश समीपता के अनुमार होता है' इस परिभाषा के अनुसार ककार का गकार, टकार का डकार, तकार का दकार तथा पकार का बकार हो जाता है। 'चकार वर्ग का स्पर्श पद्य नहीं होता' (११.७) इससे चवर्ग के पदान्तीय न होने के कारण चकार का जकार होना प्राप्त नहीं होता। ककार का गकार जैसे—'सुहस्तो गोधुग् उत्'[1]। टकार का डकार जैसे—'सा विराड् ऋषयः'[2]। तकार का दकार जैसे—'यद् यत्र विश्वम्'[3], 'यद् यामं चक्रुः'[4], 'तस्माद् वार्नाम्'[5], 'यद् राजानः'[6]। पकार का बकार जैसे—'त्रिष्टुब् गायत्री'[7] ॥ २ ॥

---

१. सुहस्तः। गो-धुक्। उत् (प० पा०)
२. सा। वि-राट्। ऋषयः (प० पा०)
३. यत्। यत्र। विश्वम् (प० पा०)
४. यत्। यामम्। चक्रुः (प० पा०)
५. तस्मात्। वाः। नाम (प० पा०)
६. यत्। राजानः (प० पा०)
७. त्रिस्तुप्। गायत्री (प० पा०)

[ अघोषभावः ]

## पदान्ते चाघोषाः ॥ ३ ॥

**सू० अ०**—पदान्त में होने पर ( अनुत्तम स्पर्श का ) अघोष ही होता है।

### निर्मलभाष्यम्

**चेति** अनुत्तमानामन्वादेशकः। **पदान्ते** विद्यमाने अनुत्तमानां = प्रथमानां स्पर्शानां स्थाने **अघोषाः** एव भवन्ति। विकाररहिता एव सन्तीत्यर्थः। विधानमिदं पदपाठविषयकम्। यतो हि पदपाठे एव एते वर्णाः पदान्तीयाः। संहितायां तु घोषवत्स्वरेषु परेषु तृतीया भवन्ति एव। यथा— ,यद् यत्र विश्वम्' (सं० २.१.१) यद् यामं चक्रुः' (सं० ६ ११६.१), तस्माद् वार्नाम्' (सं० ३.१३.३), 'सा विराड् ऋषयः' (सं० ८.९८). 'यद् राजानः' (सं० ३.२९.१ , 'सुहस्तो गोधुग् उत्' (सं० ७.७३.७)। 'त्रिष्टुब् गायत्री' (सं० १८ २ ६) ॥ ३ ॥

### शशिकला

'च' यह शब्द पूर्वसूत्र से 'अनुत्तमानाम्' का अन्वादेश करता है। पदान्त में विद्यमान होने पर उत्तम से अन्य अर्थात् प्रथम स्पर्श अघोष ही होते हैं। विकाररहित होते हैं—यह अर्थ है। यह विधान पदपाठ-विषयक है। संहिता में तो स्वर तथा घोष वर्ण बाद में होने पर सस्थानीय तृतीय हो जाते हैं। जैसे—यद् यत्र विश्वम्'[1] यद् याम चक्रुः'[2], 'तस्माद् वार्नाम्[3], 'यद् राजानः'[4] 'सुहस्तो गोधुग् उत्'[5], 'सा विराड् ऋषयः'[6]: त्रिष्टुब् गायत्री'[7] ॥ ३॥

---

१. यत्। यत्र। विश्वम् (प० पा०)
२. यत्। यामम्। चक्रुः (प० पा०)
३. तस्मात्। वाः। नाम (प० पा०)
४. यत्। राजानः (प० पा०)
५ सुहस्तः। गो-धुक्। उत (प० पा०)
६. सा। वि-राट्। ऋषयः। (प० पा०)
७. त्रि-स्तुप्। गायत्री। (प० पा०)

## अघोषेषु च ॥ ४ ॥

सू० अ०—अघोष (वर्ण) बाद में होने पर भी (पदान्तीय पञ्चम से अन्य स्पर्श) अघोष ही (रहते हैं)।

### निर्मलभाष्यम्

**च** शब्दः 'अघोषाः' इत्यन्वादिशति। संहितायाम् **अघोषेषु** अघोषवर्णेषु परेषु च पदान्तीयानामनुत्तमानां प्रथमस्पर्शानां स्थाने अघोषाः एव भवन्ति। यथा—'वाक् चेन्द्रियं च' (सं० १२.५.७) 'विराट् प्रजापतिः' (सं० ९.१०.२४) 'त्रिष्टुप् पञ्चदशेन' (सं० ८.९.२०) ॥ ४ ॥

### शशिकला

च शब्द 'अघोष' का अन्वादेश करता है। संहिता में अघोषवर्ण बाद में होने पर पदान्तीय उत्तम से अन्य अर्थात् प्रथम स्पर्श अघोष ही होता है। जैसे –'वाक् चेन्द्रियं च'[1], 'विराट् प्रजापतिः'[2], 'त्रिष्टुप् पञ्च-दशेन'[3] ॥ ४ ॥

[ पञ्चमस्पर्शभावः ]

## उत्तमा उत्तमेषु ॥ ५ ॥

सू० अ० –पञ्चम (स्पर्श) बाद में होने पर (पदान्तीय पञ्चम से अन्य स्पर्श) उत्तम (स्पर्श) हो जाते हैं।

### निर्मलभाष्यम्

**उत्तमेषु** पञ्चमस्पर्शेषु परेषु पदान्तीयानाम् अपञ्चमानां = प्रथमानां स्पर्शाणां सस्थानीयाः **उत्तमाः** पञ्चमा भवन्ति। 'आन्तर्येण वृत्तिः' (१.४.४) इत्यनुसारं ककारस्य ङकारः टकारस्य णकारः तकारस्य नकारः पकारस्य च मकारः भवति। 'न चवर्गः' (१ १ ७) इत्यनेन चवर्गस्य पदान्तत्वाभावात् चकारस्य ञकारः न प्राप्तः। ककारस्य ङकारः यथा—'ऋधङ्मन्त्रो

---

१. वाक् । च । इन्द्रियम् । च (प० पा०)
२. वि-राट् । प्रजापतिः ( प० पा०)
३. त्रि-स्तुप् । पञ्चदशेन (प० पा०)

योनिम्' (सं० ५.१.१)। टकारस्य णकारः यथा—'य उधानण्न्यायनम्' ( सं० ६.७७.२ )। तकारस्य नकारः यथा—'अर्णवान् महतस्परि' (सं० १.१०.४, 'मदुधान् मधुमत्तरः' (सं० १.३४.४) 'मध्यान् नीचैः' (सं ४.१.३) 'यः स्तायन् मन्यते' (सं० ४.१६.१)। पकारस्य मकारः यथा–'त्रिष्टुम् नयति'। (लौकिकम्) आदेशोऽयं पदान्तपदाद्योः मध्ये भवति। समानपदे तु 'समानपदेऽनुत्तमात्स्पर्शादुत्तमे यमैर्यथासङ्ख्यम्' (१.४.८) इत्यनेन यम एव ॥ ५ ॥

**शशिकला**

पञ्चम स्पर्श बाद में होने पर पदान्तीय अपञ्चम =प्रथम स्पर्श का संस्थानीय पञ्चम स्पर्श हो जाता है। 'आदेश समीपता के अनुसार होता है' इस परिभाषा के अनुसार ककार का ङकार, टकार का णकार, तकार का नकार तथा पकार का मकार हो जाता है। 'चवर्ग पदान्तीय नहीं होता' इस विधान से चकार के पदान्तीय न होने से उसका ञकार होना प्राप्त नहीं होता। ककार का ङकार जैसे—'ऋधङ्मन्त्रो योनिम्'[1]। टकार का णकार जैसे—'य उधानण्न्यायनम्'[2]। तकार का नकार जैसे 'अर्णवान् महतस्परि'[3], 'मदुधान् मधुमत्तरः'[4] 'मध्यान् नीचैः'[5], 'यः स्तायन् मन्यते'[6]। पकार का मकार जैसे—'त्रिष्टुम् नयति'[7] (लौकिकम्) ॥ ५ ॥

[ द्वितीयस्पर्शभावः ]

## द्वितीयाः शषसेषु ॥ ६ ॥

सू० अ०—श, ष तथा स बाद में होने पर ( पदान्तीय पञ्चम से अन्य स्पर्श) द्वितीय (स्पर्श हो जाते हैं)।

**निर्मलभाष्यम्**

**शषसेषु** शकारे षकारे सकारे च परे पदान्तीयानां पञ्चमव्यतिरिक्तानां प्रथमानां स्थाने सस्थानीयाः **द्वितीयाः** द्वितीयस्पर्शवर्णाः भवन्ति।

---

१. ऋधक्। मन्त्रः योनिम् (प० पा०)
२. य। उधानट्। न्यायनम् (प० पा०)
३. अर्णवात्। महतः। परि (प० पा०)
४. मदुधात्। मधुमत्-तरः (प० पा०)
५. मध्यात्। नीचैः (प० पा०)
६. यः। स्तायत्। मन्यते (प० पा०)
७. त्रि-स्तुप्। नयति।

'आन्तर्येण वृत्ति' (१.४.४) इति परिभाषया ककारस्य खकारः, टकारस्य ठकारः, तकारस्य थकारः पकारस्य फकारश्च भवति। 'न चवर्गः (१.१७) इत्यनेन चकारस्य पदान्तत्वाभावात् छकार न प्राप्तः। ककारस्य खकारः यथा 'विश्वख्सत्यम्' ( सं० ३.१.४ )। टकारस्य ठकारः यथा—'विराठ् शिर (सं० ९.५,२१) 'विराठ् स्वराज्यम्' (सं० ८.९.९)। तकारस्य थकारः यथा –'तस्या अग्निर्वथ्सः' ( सं० ४.३९.२ )। पकारस्य फकारः यथा— 'अफ्सु' ( सं० १.६.२ ) इत्यादयः। उल्लेखनीयमत्र यत् शौनकशाखायाः विद्यमानसंहितायां शषसेषु परेष्वपि पदान्तीयस्य द्वितीयः न दृश्यते, प्रथमः एव। तत्र तु 'विष्वक् सत्यम्' 'विराट् शिरः' 'विराट् स्वराज्यम्' 'अग्नि-र्वत्सः' 'अप्सु' एव विद्यते। सम्भवतः अन्यासु लुप्तशाखासु द्वितीयः आसीत्। यस्मात्सूत्रकारेण विधानमिदं विहितम्। ननु वत्सः' 'अप्सु' इत्यत्र तकारः पकारश्च न पदान्तीयः कथन्तु तस्य द्वितीयः ? उच्यते—सावग्रहपदस्य पूर्वपदः पृथक्पदवद् भवति। अत एव 'वत्-सः' 'अप्-सु' इत्यत्रापि पदान्ती-यस्य द्वितीयः स्यादेव ॥ ६ ॥

## शशिकला

शकार, षकार तथा सकार बाद में होने पर पदान्तीय अपञ्चम अर्थात् प्रथमस्पर्श का सस्थानीय द्वितीय हो जाता है। 'आदेश समीपता के अनुसार होता है' ( १.४.४ ) इस परिभाषा के अनुसार ककार का खकार, टकार का ठकार, तकार का थकार तथा पकार का फकार होता है। 'चवर्ग (पदान्तीय) नहीं ( होता)' के अनुसार चवर्ग के पदान्तीय न होने से चकार का छकार नहीं प्राप्त होता। ककार का खकार जैसे—'विश्वख्सत्यम्'[1]। टकार का ठकार जैसे—'विराठ् शिरः'[2] विराठ् स्वराज्यम्'[3]। तकार का थकार जैसे –'अग्निर्वथ्सः'[4]। पकार का फकार जैसे—'अफ्सु'[5]। यहाँ यह उल्लेखनीय है कि शौनकशाखा की विद्यमान संहिता में शकार, सकार तथा षकार बाद में होने पर पदान्तीय प्रथम स्पर्श का द्वितीय नहीं प्राप्त होता—प्रथम ही उपलब्ध होता है। इस प्रकार विष्वक् सत्यम्' 'विराट्

---

१. विष्वक्। सत्यम् (प० पा०)
२. विराट्। शिरः (प० पा०)
३. विराट्। स्वराज्यम् (प० पा०)
४. अग्निः। वत्-सः (प० पा०)
५. अप्-सु ( प० पा०)

शिरः' 'विराट् स्वराज्यम्' 'अग्निर्वत्सः' 'अप्सु' ही रहता है। सम्भवतः अन्य शाखा की लुप्त संहिता में द्वितीय प्राप्त था। इसीलिए सूत्रकार ने यह विधान किया है। यहाँ **शङ्का** होती है कि 'वत्सः' तथा 'अप्सु' में तकार तथा पकार पदान्तीय नहीं है फिर कैसे उसका द्वितीय होना प्राप्त होता है। **समाधान** यह है कि सावग्रह पद का पूर्वपद पृथक्पद के समान होता है अतएव 'वत्-सः' 'अप् सु' यहाँ भी पदान्तीय स्पर्श का द्वितीय होना प्राप्त होता है॥ ६॥

[ हकारस्य परचतुर्थस्पर्शभावः ]

## तेभ्यः पूर्वचतुर्थो हकारस्य॥ ७॥

**सू० अ०**—उन (प्रथमस्पर्श) से परवर्ती हकार का पूर्ववर्ती (स्पर्श के वर्ग का) चतुर्थ (हो जाता है)।

### निर्मलभाष्यम्

**तेभ्यः** पदान्तीयेभ्यः अपञ्चमेभ्यः प्रथमस्पर्शेभ्यः परस्य **हकारस्य पूर्वचतुर्थः** पूर्वस्पर्शवर्गस्य चतुर्थः स्पर्शः भवति। 'आन्तर्येण वृत्तिः' (१.४.५) इत्यनुसारं ककाराद् घकार टकाराद् ढकारः तकाराद् धकारः पकाराद् भकारश्च। यथा—'उद्धर्षन्तां मघवन्' (सं० ३.१९.६) 'उद्धर्षस्य सत्वनाम' ( सं० ५ २०.८ ), 'उद्धर्षिणम् मुनिकेशम्' ( सं० ८.६.१७ ) 'कद्ध नूनम्' ( सं० १८.१.४ ) 'पृथिव्याम् अस्तु यद्धरः' (सं० १८.२.३६) 'तेजस्वद्धरः' (सं० १८.३.७१ )। 'न चवर्गः' (१.१.७) इत्यनेन चवर्गाद् हकारः न प्राप्तः चकारस्य पदान्तीयाभावात्॥ ७॥

### शशिकला

उन पदान्तीय अपञ्चम (प्रथम) स्पर्श से बाद में हकार का पूर्ववर्ती स्पर्श के वर्ग का चतुर्थ स्पर्श हो जाता है। 'आदेश समीपता के अनुसार होता है' (१.४.४) इसके अनुसार ककार से बाद में घकार, टकार से बाद में ढकार, तकार से बाद में धकार तथा पकार से बाद में भकार हो जाता है। जैसे 'उद्धर्षन्तां मघवन्[१]' उद्धर्षस्य सत्वनाम[२]' 'उद्धर्षिणम् मुनिकेशम्[३]' कद्ध नूनम्[४]' 'पृथिव्याम् अस्तु यद्धरः'[५] 'तेजस्वद्धरः'[६] ॥७॥

---

१. उत्-हर्षन्ताम्। मघवन् (प० पा०) २. उत्-हर्षस्य। सत्व-नाम (प० पा०)
३. उत्-हर्षिणम्। मुनि-केशम् (प० पा०) ४. कत्। ह। नूनम् (प० पा०)
५. पृथिव्याम्। अस्तु। यत्। हरः (प० पा०) ६. तेजस्वत्। हरः (प० पा०)

[ तकारागमविधानम् ]

## टकारात्सकारे तकारेण ॥ ८ ॥

सू० अ०—सकार बाद में होने पर टकार से बाद में तकार का (आगम होता है)।

### निर्मलभाष्यम्

सकारे परे टकारात् तकारेण व्यवच्छेदः भवति। तकारस्यागमः भवतीत्यर्थः। यथा—'विराट्त्स्वराजम्' ( सं० ८.९.९ ) 'पृतनाषाट्त्सुवीरः' ( सं० ११.१.२ ), त्रिशताः षट्त्सहस्राः, (सं० ११.५.२)। शौनकशाखायाः संहितायां तकारस्यागमः न दृश्यते। तत्र तु 'विराट् स्वराजम्' 'पृतनाषाट् सुवीरः' त्रिशता षट्सहस्राः' इत्येवमेव। प्रतीयते यत् तकारागमः शाखान्तरे आसीत्। यत्कृते सूत्रकारेण आगमस्य विधानः कृतः ॥ ८ ॥

### शशिकला

सकार बाद में होने पर टकार से बाद में तकार का आगम होता है। जैसे— विराट्त्स्वराजम्'[1] 'पृतनाषाट्त्सुवीरः'[2] 'त्रिशता षट्-त्सहस्राः[3]'। शौनकशाखा की संहिता में तकार का आगम नहीं दिखलाई पड़ता। वहाँ तो 'विराट् स्वराजम्' 'पृतनाषाट् सुवीरः' 'त्रिशता षट्सहस्राः' ही प्राप्त होता है। इससे प्रतीत होता है कि तकार का आगम अथर्ववेद की अन्य शाखा की संहिता में प्राप्त था, इसीलिए सूत्रकार ने इस आगम का विधान किया है ॥ ८ ॥

[ कटतागमविधानम् ]

## ङणनेभ्यः कटतैः शषसेषु ॥ ९ ॥

सू० अ० —शकार, षकार तथा सकार बाद में होने पर ङकार, णकार तथा नकार से बाद में ( क्रमशः ) ककार, टकार तथा तकार का ( आगम होता ) है।

---

१. विराट्। स्व-राजम् (प० पा०)
२. पृतना-षाट्। सुवीरः (प० पा०)
३. त्रि-शता। षट्-सहस्राः (प० पा०)

## निर्मलभाष्यम्

**शषसेषु** शकारे षकारे सकारे च परे **ङणनेभ्यः** ङकारात् णकारात् नकारात् च **कटतैः** ककारेण टकारेण तकारेण च व्यवच्छेदः भवति। 'आन्तर्येण वृत्तिः)' १:४.४) इति परिभाषया शषसेषु परेषु ङकारात् ककारस्य णकारात् टकारस्य नकारात् तकारस्यागमः भवति। ककारागमः यथा— 'प्रत्यङ्क्समाहितः' ( सं० ४.११.८ ) 'प्रत्यङ्क्सोमः' (सं० ६.५१.१) 'प्रत्यङ्क्स्वम्' ( सं० १८.१.२९ )। शषसेषु परेषु पदान्तः णकारः शौनकशाखायाः संहितायां न दृश्यते। तकारागमः यथा—'शीतान्त्षट् (सं० ८.९.१७) 'अन्वविन्दन्त्षडुर्वीः' ( सं० १३.१.४ )। उल्लेखनीयमत्र यत् शौनकशाखायाः संहितायां विधानानुसारमागमोऽयं न प्राप्तः तत्र तु 'प्रत्यङ्समाहितः' 'प्रत्यङ्सोमः' 'प्रत्यङ्स्वम्' 'शीतान्षट्' 'अन्वविन्दन्षडुर्वीः' इत्येव प्राप्यते। शकारे परे पदान्तीयः नकारः संहितायां न दृश्यते प्रत्युत 'नकारस्य शकारे ञकारम् ( २.१.१० ) इत्यनेन तस्य नकारस्य ञकारः जातः। निदर्शनानि तत्रैव द्रष्टव्यानि ॥ ९ ॥

## शशिकला

शकार, षकार तथा सकार बाद में होने पर ङकार, णकार तथा नकार से बाद में ककार, टकार तथा तकार से व्यवच्छेद होता है। 'आदेश समीपता के अनुसार होता है' ( १.४.४ ) इस परिभाषा के अनुसार शकार, षकार तथा सकार बाद में होने पर ङकार से बाद में ककार का, णकार से बाद में टकार का तथा नकार से बाद में तकार का आगम होता है— यह अर्थ है। ककार का आगम जैसे—'प्रत्यङ्क्समाहितः'[१] 'प्रत्यङ्क्सोमः'[२] प्रत्यङ्क्स्वम्'[३]। शकार, षकार तथा सकार बाद में होने पर पदान्तीय णकार शौनकशाखा की संहिता में नहीं प्राप्त होता। तकार का आगम जैसे—'शीतान्त्षट्'[४] 'अन्वविन्दन्त्षडुर्वी'[५]। यहाँ यह उल्लेखनीय है कि शौनकशाखा की संहिता में इस विधान के अनुसार ये आगम प्राप्त नहीं होते। वहाँ 'प्रत्यङ्सोमः' 'प्रत्यङ्स्वम्' शीतान्षट्' 'अन्वविन्दन्षडुर्वी' ही

---

१. प्रत्यङ्। समाहितः ( प० पा० )
२. प्रत्यङ्। सोमः ( प० पा० )
३. प्रत्यङ्। स्वम् ( प० पा० )
४. शीतान्। षट् ( प० पा० )
५. अनु-अविन्दन्। षडुर्वीः ( प० पा० )

प्राप्त होता है। शकार बाद में होने पर पदान्तीय नकार संहिता में नहीं दिखलाई देता प्रत्युत 'शकार बाद में होने पर नकार का ञकार हो जाता है' ( २.१.१० ) इस विधान के अनुसार उस नकार का ञकार हो जाता है। इसका उदाहरण उसी स्थल पर द्रष्टव्य है ॥ ९ ॥

[ नकारस्य ञकारभावः ]

## नकारस्य शकारे ञकारम् ॥ १० ॥

**सू० अ०**—शकार बाद में होने पर नकार का ञकार ( हो जाता है )।

### निर्मलभाष्यम्

**शकारे** परे **नकारस्य ञकारं** भवति। यथा—'अस्माञ्छत्रूयतीमभि' ( सं० ३.१.३ ) 'दिविषञ्छुक्रः' ( सं० १८.४.५९ ) इत्यत्र शकारे परे नकारस्य ञकारं भवति। तथा च 'तवर्गीयाच्छकारः शकारस्य' (२.१.१७) इत्यनेन तवर्गीयाद् नकारात् शकारस्य छकारोऽपि जायते ॥ १० ॥

### शशिकला

शकार बाद में होने पर नकार का ञकार हो जाता है। जैसे—'अस्माञ्छत्रूयतीमभि'[1] दिविषञ्छुक्रः'[2]। यहाँ शकार बाद में होने पर नकार का ञकार हो गया है तथा 'तवर्ग से बाद में होने पर शकार का छकार हो जाता है' ( २.१.१७ ) से शकार का छकार हो गया है ॥ १० ॥

## चवर्गीये घोषवति ॥ ११ ॥

**सू० अ०**—चवर्गीय घोष ( स्पर्श ) बाद में होने पर ( नकार का ञकार हो जाता है )।

### निर्मलभाष्यम्

**चवर्गीये घोषवति** चवर्गस्य सघोषस्पर्शे परे नकारस्य ञकारं भवति। ज झ ञ इति चवर्गस्य घोषस्पर्शः। एषु परेषु नकारस्य ञकारं भवति। यथा—'अवपश्यञ्जनानाम्' ( सं० १.३३ २ ) 'प्रैष्यञ्जनम् इव' ( सं० ५.२२.१४ ) 'विवाहाञ्ज्ञातीन्' ( सं० १२.५.४४ ) ॥ ११ ॥

---

१. अस्मान्। शत्रूयतीम् ( प० पा० )

२. दिवि-सन्। शुक्रः ( प० पा० )

### शशिकला

चवर्ग के सघोष स्पर्श बाद में होने पर नकार का ञकार हो जाता है। ज झ तथा ञ—ये चवर्ग के घोष स्पर्श है। इस प्रकार ज, झ तथा ञ बाद में होने पर नकार का ञकार हो जाता है। जैसे-'अवपश्यञ्जनानाम्'[1] 'प्रैष्यञ्जनम् इव'[2] 'विवाहाञ्ज्ञातीन्'[3] ॥ ११ ॥

[ नकारस्य णकारभावः ]

## टवर्गीये णकारः ॥ १२ ॥

**सू० अ०**—टवर्गीय ( स्पर्श ) बाद में होने पर नकार का णकार हो जाता है।

### निर्मलभाष्यम्

**टवर्गीये** टवर्गस्य स्पर्शे परे नकारस्य **णकारः** भवति। यथा—ताण्डमति ( लौकिकम् )। अथर्वचरणस्य शौनकशाखायाः विद्यमानसंहितायां विधानस्यास्य निदर्शनं न प्राप्यते। सम्भवतः शाखान्तरे भवितव्यम् ॥१२॥

### शशिकला

टवर्गीय स्पर्श बाद में होने पर नकार का णकार हो जाता है। जैसे—तान्+डमति=ताण्डमति' ( लौकिक उदाहरण )। अथर्वचरण की शौनक शाखा की संहिता में इस विधान का उदाहरण नहीं मिलता। सम्भव है—अन्य शाखाओं में रहा हो ॥ १२ ॥

[ तकारस्य परसस्थानभावः ]

## तकारस्य शकारलकारयोः परसस्थानः ॥ १३ ॥

**सू० अ०**—शकार तथा लकार बाद में होने पर तकार का परवर्ती के समान स्थान वाला ( वर्ण ) हो जाता है।

---

१. अव पश्यन्। जनानाम् ( प० पा० )

२. प्र। आ—इष्यन्। जनम्-इव ( प० पा० )

३. विवाहान्। ज्ञातीन् ( प० पा० )

### निर्मलभाष्यम्

शकारश्च लकारश्च शकारलकारौ। तयोः परयोः **तकारस्य पर-सस्थानः** परस्य शकारस्य लकारस्य च सस्थानः वर्णं भवति। यथा— 'उच्छिष्टे नाम' ( सं० ११.७.१ ) इत्यत्र 'तवर्गीयाच्छकारः शकारस्य' ( २.१.१७ ) इत्यनेन शकारस्य छकारः। घृताद् उल्लुप्तम्' ( सं० ५.२८.४ ) ॥ १३ ॥

### शशिकला

शकार तथा लकार बाद में होने पर तकार परवर्ती वर्ण के समान स्थान वाला वर्ण हो जाता है। जैसे—'उच्छिष्टे नाम'[1] यहाँ 'तवर्ग से बाद में शकार का छकार हो जाता है' से शकार का छकार भी हो गया है। 'घृताद् उल्लुप्तम्'[2] ॥ १३ ॥

## चटवर्गयोश्च ॥ १४ ॥

**सू० अ०**—चवर्ग तथा टवर्ग बाद में होने पर भी (तकार परवर्ती के समान स्थान वाला वर्ण हो जाता है)।

### निर्मलभाष्यम्

**चशब्दोऽत्र** तकारस्य परसस्थान इत्यन्वादिशति। **चटवर्गयोः** चवर्गे टवर्गे च परे तकारस्य परसस्थानः भवति। यथा–'उच्च तिष्ठा' (सं० २.६.२) 'बृहच्छन्दाः' (सं० ३.१२ ३) 'यज्जामयः' (सं० १४ २.६१)। टवर्गस्योदाहरणं शौनकशाखायाः संहितायां न प्राप्यते तत् शाखान्तरे भवितव्यम्। अत एव लौकिकं निदर्शनमत्र द्रष्टव्यम्—'अग्निचिट्टीकते' इति ॥ १४ ॥

### शशिकला

सूत्र में प्रयुक्त चशब्द 'तकार का परसस्थानीय वर्ण हो जाता है' का पूर्वसूत्र से अन्वादेश करता है। चवर्ग तथा टवर्ग के वर्ण बाद में होने पर तकार का परवर्ती वर्ण के समान स्थान वाला वर्ण हो जाता है। जैसे—'उच्च तिष्ठा'[3] 'बृहच्छन्दाः'[4] 'यज्जामयः[5]।' टवर्ग बाद में होने

---

१. उत्–शिष्टे। नाम ( प० पा० )
२ घृतात्। उत्-लुप्तम् ( प० पा० )
३. उत्। च। तिष्ठ ( प० पा० )
४. बृहत्—छन्दाः ( प० पा० )
५. यत्—जामय ( प० पा० )

पर तकार के परसस्थानीय वर्ण होने का उदाहरण शौनकशाखा की संहिता में नहीं प्राप्त होता। उसे अन्य शाखा में होना चाहिए। अत एव लौकिक उदाहरण दिया जा रहा है अग्निचित् + टीकते = अग्निचिट्टीकते ॥ १४ ॥

[ तवर्गीयस्य पूर्वसस्थानभावः ]

**ताभ्यां समानपदे तवर्गीयस्य पूर्वसस्थानः**[1] ॥ १५ ॥

**सू० अ०**—एकपद में उन ( चवर्ग तथा टवर्ग ) से बाद में तवर्ग का पूर्ववर्ती के समान स्थान वाला स्पर्श ( हो जाता है )।

## निर्मलभाष्यम्

**समानपदे** पदमध्ये **ताभ्यां** चटवर्गाभ्यां परस्य **तवर्गीयस्य** स्पर्शस्य **पूर्वसस्थानः** स्पर्शः भवति। चवर्गीयाद् यथा—'यज्ञेन यज्ञम्' ( सं० ७.५.१ ) इत्यत्र यज्धातुः नङ्प्रत्ययश्च। अत्र यज्धातोः चवर्गीयाज्जकारात् प्रत्ययस्य तवर्गीयस्य नकारस्य ञकारम्। 'सोमाय राज्ञः' ( सं० ६.६८.१ ) इत्यत्रापि चवर्गीयात् परस्य नकारस्य ञकारम्। **ननु** प्रातिशाख्यकारैः पदाः सिद्धाः मताः। व्याकरणस्य विषयोऽयम्। तदा सूत्रकारेण किमर्थं समानपदे विधानमिदं विहितम्। **उच्यते**—शिष्यावबोधनार्थम्। अथवा 'षकारान्नानापदेऽपि' ( २.१.१६ ) इत्यनेन पृथक्पदे षकारात् तवर्गीयस्य एकदेशीयः पूर्वसस्थानभावः कथनीयः अत एव पदमध्ये विधानमिदं विहितम्। टवर्गात् तवर्गीयस्य पूर्वसस्थानभावनिदर्शनं शौनकशाखायाः संहितायां न प्राप्यते। तत् शाखान्तरे भवितव्यम्। अत एव लौकिकोदाहरणं द्रष्टव्यम्—इट्टे ॥१५॥

## शशिकला

एकपद में चवर्ग तथा टवर्ग से बाद वाले तवर्ग के स्पर्श का पूर्ववर्ती के समान स्थान वाला वर्ण हो जाता है। चवर्ग से बाद में जैसे—'यज्ञेन यज्ञम्'। यहाँ यज् धातु तथा नङ् प्रत्यय से यज्ञ शब्द बना है। यज् धातु के चवर्गीय वर्ण जकार से बाद में प्रत्यय के तवर्गीय नकार का ञकार हो गया है। 'सोमाय राज्ञः' यहाँ भी चवर्गीय स्पर्श से बाद में तवर्ग वाले नकार का ञकार हो गया है। **शंका**—प्रातिशाख्यकारों ने तो पदों को सिद्ध माना है और पदों की व्युत्पत्ति बताना तो व्याकरण का विषय है फिर सूत्रकार

---

१. (क) 'तवर्गीयस्य पूर्वसस्थानः' इति नास्ति।

ने पद के मध्य में चवर्ग तथा टवर्ग से परवर्ती तवर्गीय वर्ण के पूर्वसस्थानीय वर्ण होने का विधान क्यों किया है। **समाधान**—शिष्यों के ज्ञान के लिए यह विधान किया गया है अथवा परवर्ती सूत्र 'पृथक्पद में भी षकार से बाद में तवर्गीय वर्ण का पूर्ववर्ती के समान स्थान वाला वर्ण हो जाने का विधान करना है, जो एकदेशीय है अतः उस विधान को समझने के लिए पद के मध्य में यह विधान किया गया है। टवर्ग से बाद में तवर्गीय वर्ण के पूर्वसस्थानीयभाव का उदाहरण शौनक शाखा की संहिता में नहीं मिलता उसे अन्य शाखा में होना चाहिए। अतः लौकिक उदाहरण दिया जा रहा है—इत् + ते - इट्टे ॥ १५ ॥

## षकारान्नानापदेऽपि ॥ १६ ॥

**सू० अ०**—अलग पद होने पर भी षकार से बाद में ( तवर्ग वाले वर्ण का पूर्ववर्ती के समान स्थान वाला वर्ण हो जाता है।

### निर्मलभाष्यम्

**नानापदेऽपि** पृथक्पदे विद्यमानेऽपि **षकारात्** तवर्गीयस्य स्पर्शस्य पूर्वसस्थानः मूर्धन्यः भवति। यथा—'बहिष्टे' ( सं० १.३.१ ) 'वायुष्टान्' ( सं० २.३४.४ ) 'निष्टं भज' (सं० ४.२२.२ ) 'अग्निष्टान्' (सं० २.३४ ३) 'अग्निष्टद्धोता' ( सं० ६.७१.१ ) ॥ १६ ॥

### शशिकला

अलग पद में विद्यमान होने पर भी षकार से बाद वाले तवर्गीय स्पर्श का पूर्ववर्ती के समान स्थान वाला वर्ण मूर्धन्य हो जाता है। जैसे 'बहिष्टे'[१] 'वायुष्टान्'[२] 'निष्टं भज'[३] 'अग्निष्टान्'[४] 'अग्निष्टद्धोता'[५] ॥ १६ ॥

[ शकारस्य छकारभावः ]

## तवर्गीयाच्छकारः शकारस्य ॥ १७ ॥

**सू० अ०**—तवर्गीय (स्पर्श) से बाद में शकार का छकार हो जाता है।

---

१. बहिः । ते ( प० पा० )
२. वायुः । तान् ( प० पा० )
३. निः । तम् ( प० पा० )
४. अग्निः । तान् ( प० पा० )
५. अग्निः । तत् । होता ( प० पा० )

### निर्मलभाष्यम्

**तवर्गीयाद्** वर्णात् परस्य **शकारस्य छकारः** भवति। यथा—'आराच्छरव्याः' ( सं० १.१९.१ ) 'देवाञ्छ्लोकः' ( सं० १८.१ ३३ ) 'अस्माच्छत्रूयतीम्' ( सं० ३ १ ३ ) 'दिविषञ्छुक्रः' ( सं० १८.४.५९ ) ॥ १७ ॥

### शशिकला

तवर्गीय स्पर्श से बाद में शकार का छकार हो जाता। जैसे—'आराच्छरव्याः'[1] 'देवाञ्छ्लोकः'[2] 'अस्माच्छत्रूयतीम्'[3] 'दिविषञ्छुक्रः'[4] ॥१७॥

### [ सकारस्य लोपविधानम् ]

## लोपः उदः स्थास्तम्भोः सकारस्य[5] ॥ १८ ॥

**सू० अ०**—उत् से बाद में स्था (धातु) तथा स्तम्भ (धातु) के सकार का लोप ( हो जाता है )।

### निर्मलभाष्यम्

**उदः** उत् उपसर्गात् **स्थास्तम्भोः** परस्य स्थाधातोः स्तम्भधातोश्च **सकारस्य** लोपः भवति। यथा—'मा घोषा उत् थुः' ( सं० ७.५२.२ ) 'ततस्त्वोत्थापयामसि' ( १०.१२९ )। उल्लेखनीयमत्र यत् शौनकशाखायाः संहितायामत्र सकारस्य लोपो न दृश्यते। तत्र तु 'उत् स्थुः' 'उत् स्थापयामसि' इत्येवमेव प्राप्यते। 'उत् थापय सीदतः' ( सं० १२ ३.३० ) 'सत्येनोत्तभिता' ( सं० १४.१.१ ) संहितायामत्रैव सकारस्य लोपः दृश्यते ॥१८॥

### शशिकला

उत् उपसर्ग से बाद में स्था धातु तथा स्तम्भ धातु के सकार का लोप हो जाता है। जैसे—'मा घोषा उत् थुः'[6] 'ततस्त्वोत्थापयामसि'[7]।

---

१. आरात् । शरव्याः ( प० पा० )
२. देवान् । श्लोकः ( प० पा० )
३. अस्मान् । शत्रूयतीम् ( प० पा० )
४. दिवि-सन् । शुक्रः ( प० पा० )
५. (क) लोपो दस्थास्तम्भोः सकारस्य इतिपाठः ।
६. मा । घोषाः । उत् —स्थुः ( प० पा० )
७. ततः । त्वा । उत्—स्थापयामसि ( प० पा० )

शौनक शाखा कि संहिता में इन उदाहरणों में सकार का लोप नहीं प्राप्त होता प्रत्युत सकार विद्यमान ही रहता है। वहाँ संहिता में 'उत् थापय सीदत:'[1] 'सत्येनोत्तभिता'[2] इन स्थलों पर ही सकार का लोप दिखाई पड़ता है ॥ १८ ॥

[ रेफस्य लोपविधानम् ]

## रेफस्य रेफे ॥ १९ ॥

सू० अ० –रेफ बाद में होने पर रेफ का ( लोप हो जाता है )।

### निर्मलभाष्यम्

**रेफे** परे **रेफस्य** लोपः भवति। यथा—'शरदः पुरूची रायः ( सं० २.१३.३ ) इत्यत्र रेफे परे सति विसर्जनीयस्थाने प्राप्तस्य रेफस्य लोप। 'रलोपे' ( ३.१.२० ) इत्यनेन ह्रस्वोपधायाः दीर्घत्वश्च जायते ॥ १९ ॥

### शशिकला

रेफ बाद में होने पर रेफ का लोप हो जाता है। जैसे–'शरदः पुरूची रायः'[3]। यहाँ रेफ बाद में होने पर विसर्जनीय के स्थान पर प्राप्त रेफ का लोप हो गया है। उपधा ह्रस्व होने से 'रेफ का लोप होने पर उपधा दीर्घ हो जाती है' से उपधा दीर्घ हो जाती है ॥ १९ ॥

[ अपञ्चमस्पर्शस्य लोपविधानम् ]

## स्पर्शादुत्तमादनुत्तमस्यानुत्तमे ॥ २० ॥

सू० अ०—अपञ्चम ( पञ्चम से अन्य स्पर्श ) बाद में होने पर पञ्चम स्पर्श से परवर्ती अपञ्चम स्पर्श का ( लोप हो जाता है )।

### निर्मलभाष्यम्

स्पर्शवर्णानां प्रथमाः द्वितीयाः तृतीयाः चतुर्थाश्च स्पर्शाः अनुत्तमाः स्पर्शाः। पञ्चमाश्चोत्तमाः। **अनुत्तमे** अपञ्चमे स्पर्शे परे **उत्तमात्**

---

१. उत्-स्थापय। सीदतः ( प० पा० )
२. सत्येन। उत्तभिता ( प० पा० )। यहाँ पदपाठ में भी सकार का लोप ही प्राप्त होता है।
३. शरदः। पुरूचीः। रायः ( प० पा० )

पञ्चमात् **स्पर्शात्** स्पर्शवर्णात् परस्य अनुत्तमस्य अपञ्चमस्पर्शस्य लोपः भवति। यथा—'पाङ्क्तं छन्दः' ( सं० '२.३.१० ) 'सपत्नान् मे भङ्ग्धि' ( सं० १०.३.१३ )। शौनकशाखायाः संहितायामत्रापि लोपः न प्राप्यते। तत्र तु 'पाङ्क्तम्' 'भङ्ग्ध' इत्येवमेव प्राप्यते ॥ २० ॥

**शशिकला**

स्पर्श वर्गों के प्रथम, द्वितीय, तृतीय तथा चतुर्थ स्पर्श अनुत्तम स्पर्श हैं तथा पञ्चम स्पर्श उत्तम कहलाते हैं। अपञ्चम स्पर्श बाद में होने पर पञ्चम स्पर्श से परवर्ती अपञ्चम स्पर्श का लोप हो जाता है। जैसे – 'पाङ्क्तं छन्दः'[1] 'सपत्नान् मे भङ्ग्धि'[2]। शौनकशाखा की संहिता में यहाँ पर लोप प्राप्त नहीं होता। वहाँ पाङ्क्तम्, भङ्ग्ध रूप ही मिलता है ॥ २० ॥

[ पदान्तयोः यवयोः लोपविधानम् ]

**स्वराद्यवयोः पदान्तयोः ॥ २१ ॥**

**सू० अ०**—स्वर से बाद में पदान्तीय यकार तथा वकार का ( लोप हो जाता है )।

**निर्मलभाष्यम्**

**स्वरात्** स्वरवर्णात् परयोः **पदान्तयोः** पदान्ते विद्यमानयोः **यवयोः** यकारस्य वकारस्य च लोपः भवति। यथा—'क आसञ्जन्याः के वराः' (सं० ११.८.१) 'उष्णेन वाय उदकेनेहि' (सं० ६.६८.१) 'अस्या इच्छन्नग्रु वै पतिम्' ( सं० ६.६०.१ ) इत्यत्र 'सन्ध्यक्षराणामयवायावः' ( ३.२ १५ ) इत्यनेन के इत्यस्य एकारस्थाने अय्भावे कय्, वायो इत्यस्यौकारस्य अव-भावे वायव्, अस्यै इत्यस्य ऐकारस्थाने आय्भावे अस्याय् प्राप्तः। एतेषां स्वराद् विद्यमानानां यवानां लोपः भवतिः। 'स उ एव महायमः' ( सं० १३.४.५ ) 'ता इमा आपः' ( सं० ११.१५.७ ) इत्यत्र 'स्वरे यकारः' (२.२.२) इत्यनेन स्वरे परे सः इत्यस्य ताः इमाः इत्येतयोः विसर्जनीययोः च यकारः जातः। स्वरात् पदान्तीयस्य यकारस्य लोपः भवति ॥ २१ ॥

---

१. पाङ्क्तम्। छन्द (प० पा०)
२. सपत्नान्। मे। भङ्ग्ध (प० पा०)

**शशिकला**

स्वरवर्ण से बाद में पदान्तीय यकार तथा वकार का लोप हो जाता है। जैसे—'क आसञ्जन्या के वरा:'[१] 'उष्णेन वाय उदकेनेहि[२]' 'अस्या इच्छन्नग्रुवै पतिम्[३] यहाँ 'स्वर बाद में होने पर सन्ध्यक्षर क्रमशः अय्, अव्, आय् तथा आव् हो जाते हैं' इस विधान के अनुसार 'के' में एकार के स्थान पर अय् होने से कय्, 'वायो' में ओकार के स्थान पर अव् होने से वायव् तथा अस्यै में ऐकार के स्थान पर आय् होने से अस्याय् प्राप्त होता है। प्रस्तुत विधान के अनुसार स्वर से बाद में होने से उन पदान्तीय यकार तथा वकार का लोप हो जाता है। 'स उ एव महा-यमः'[४] तथा 'ता इमा आप.,[५] इन उदाहरणों में 'स्वर बाद में होने पर विसर्जनीय का यकार हो जाता है' इस विधान के अनुसार स्वर बाद में होने से सः, ताः, इमाः के विसर्जनीय का यकार हो जाने से क्रमशः सय्, ताय्, तथा इमाय् रूप प्राप्त होता है तथा स्वर से बाद में होने के कारण प्रस्तुत विधान से उस यकार का लोप हो जाता है॥ २१॥

[ वकारस्य लोपनिषेधः ]

## नाकाराद्वकारस्य ॥ २२ ॥

**सू० अ०**—आकार से बाद में ( पदान्तीय ) वकार का ( लोप ) नहीं होता।

**निर्मलभाष्यम्**

पूर्वस्यापवादोऽयम्। आकारात् पदान्तस्य वकारस्य लोपः न भवति। यथा—'इन्द्रवायू उभाविह' (सं० ३.२०.६) 'द्वाविमौ वातौ वातः' (सं० ४ १३.२) 'उभाविन्द्राग्नी आ भरताम् (सं० ५.७ ६)। अत्र 'सन्ध्यक्षराणा-मयवायावः' (३.२.१५) इत्यनेन उभौ द्वौ उभौ इत्येतेषामौकारस्य स्थाने आव्भावे क्रमश उभाव्, द्वाव्, उभाव् प्राप्तः। स्वराद्यवयोः पदान्तयोः' इत्यनेन स्वरात् पदान्तस्य वकारस्य लोपः भवति। तन्निषिध्यते॥ २२॥

१. के। आसन्। जन्याः। के। वराः (प० पा०)
२. उष्णेन। वायो। उदकेन। इहि (प० पा०)
३. अस्यै। इच्छन्। अग्रुवै। पतिम् (प० पा०)
४. सः। उ। एव। महायमः (प० पा०)
५. ताः। इमाः। आपः (प० पा०)

### शशिकला

यह पूर्व सूत्र का अपवाद है। आकार से बाद में पदान्तीय वकार का लोप नहीं होता। जैसे—'इन्द्रवायू उभाविह'[1] 'द्वाविमौ वातौ वातः'[2] 'उभाविन्द्राग्नी आ भरताम्'[3]। यहाँ 'स्वर बाद में होने पर सन्ध्यक्षर अय् अव्, आय् तथा आव् हो जाते हैं' से उभौ, द्वौ तथा उभौ के औकार के स्थान पर आव् हो जाने से क्रमशः उभाव्, द्वाव् तथा उभाव् रूप प्राप्त होता है। 'स्वर से बाद में पदान्तीय यकार तथा वकार का लोप हो जाता है' से पदान्तीय वकार के प्राप्त लोप का प्रस्तुत विधान से निषेध हो जाता है॥ २२॥

## गविष्टौ गवेषण इति च ॥ २३ ॥

**सू० अ०**—गविष्टौ तथा गवेषणः में भी (पदान्तीय वकार का लोप नहीं होता)।

### निर्मलभाष्यम्

चशब्दोऽत्र वकारस्य इत्यन्वादिशति। गविष्टौ गवेषणः इत्यत्र वकारस्य लोपः न भवति। यथा—'इषुमन्तं गविष्टौ' (सं० ४.२४.५) 'गवेषणः सहमानः' (सं० ५.२०.११)। 'सन्ध्यक्षराणामयवायावः' (३.२.१५) इत्यनेन गविष्टौ गवेषणः इत्यत्र गो इत्यस्य ओकारः स्वरे परे सति अव्भावेन गव् इति प्राप्तः। 'स्वराद्यवयोः पदान्तयोः' (२.१.२१) इत्यनेन वकारस्य लोपश्च। परञ्च प्रस्तुतविधानेन वकारलोपः निषिध्यते। ननु गविष्टौ गवेषणः इत्यत्र प्राप्तः वकारस्तु पदमध्ये विद्यमानः न तु पदान्ते। तत्कथं 'स्वराद् यवयोः पदान्तयोः' इत्यनेन वकारस्य लोपः भवितुम् अर्हति ? यस्य निषेधः प्रस्तुतविधानेन कृतः। उच्यते—सावग्रहपदस्य पूर्वपदः पदवद्भवति। अत गो इत्यस्य पूर्वपदस्यान्ते विकाररूपेण प्राप्तः वकारः पदान्तीयः एव। अतएव तस्य लोपः प्राप्तः। तन्निषिध्यते॥ २३॥

### शशिकला

गविष्टौ तथा गवेषणः में पदान्तीय वकार का लोप नहीं होता। जैसे—'इषुमन्तं गविष्टौ'[4] 'गवेषणः सहमानः'[5] स्वर बाद में होने पर

---

१. इन्द्रवायू इति। उभौ। इह (प० पा०)
२. द्वौ। इमौ। वातौ। वातः (प० पा०)
३. उभौ। इन्द्राग्नी इति। आ। भरताम् (प० पा०)
४. गविगष्टौ (प० पा०)
५. गवेषणः। सहमानः (प० पा०)

सन्ध्यक्षरों का क्रमशः अय्, अव्, आय् तथा आव्' हो जाता है से गविष्टौ तथा गवेषणः में गो के ओकार का, स्वर बाद में होने के कारण अव् होकर गव् रूप बनता है। 'स्वर से बाद में पदान्तीय यकार तथा वकार का लोप हो जाता है' से वकार का लोप प्राप्त होता है जिसका प्रस्तुत विधान से निषेध हो जाता है। **शङ्का**—गविष्टौ तथा गवेषणः में प्राप्त वकार तो पद के मध्य में विद्यमान है, पदान्त में नहीं। तो फिर पदान्तीय न होने पर भी वकार का कैसे लोप प्राप्त होता है जिसका निषेध यहाँ किया गया है। **समाधान**—सावग्रह पद का पूर्वपद पद के समान होता है। इस प्रकार इन दोनों पदों में गो यह पूर्व पद है अतः इसके ओकार के स्थान प्राप्त अव् का वकार पदान्तीय है जिससे उसका लोप प्राप्त होता है। उसी का निषेध यहाँ किया गया है ॥ २३ ॥

[ यवलोपविषये शाकटायनमतम् ]

## लेशवृत्तिरधिस्पर्शं[1] शाकटायनः ॥ २४ ॥

**सू० अ०**—शाकटायन के मत में (स्वर से बाद में पदान्त यकार तथा वकार का) लुप्तवदुच्चारण होता है, (वह लुप्तवदुच्चारण) अधिस्पर्श (कहलाता है)।

### निर्मलभाष्यम्

स्वरात् पदान्तस्य यकारस्य वकारस्य च 'स्वराद्यवयोः पदान्तयोः (२.१.२१) इत्यनेन लोपः विहितः। परञ्च तस्य यकारस्य वकारस्य च **लेशवृत्तिः** लुप्तवदुच्चारणं भवतीति **शाकटायनः** मन्यते। तद्यकारवकारयोः लेशवृत्तिः=लुप्तवदुच्चारणम् **अधिस्पर्शम्** अधिस्पर्शसंज्ञकः भवति। यथा—'क आसञ्जन्याः के वराः' (सं० ११.८.१) 'उष्णेन वाय उदकेनेहि' (सं० ६.६८.१) 'अस्या इच्छन्नग्रु वै पतिम्' (सं० ६.७.१)। सूत्रकारस्य मते तु स्वराद्यवयोः पदान्तयोः लोप एव, न तु लेशवृत्तिः। अत एवोक्तम्—'अधिस्पर्शञ्च' (१.१.६) इति ॥ २४ ॥

### शशिकला

'स्वर से बाद में पदान्त यकार तथा वकार का (लोप हो जाता है)' (२.१.२१) से स्वर से बाद में पदान्तीय यकार तथा वकार का लोप कहा

---

१. (क) रधिस्पर्शं इति पाठः।

गया है। किन्तु शाकटायन के मत में उस यकार तथा वकार का लुप्तवदुच्चारण होता है। वह लुप्तवदुच्चारण अधिस्पर्श कहलाता है। जैसे—'क आसञ्जन्याः के वराः,'[२] 'उष्णेन वाय उदकेनेहि'[३] 'अस्या इच्छन्नग्रु वै पतिम्'[४]। सूत्रकार के मत में तो स्वर से बाद में पदान्त यकार तथा वकार का लोप हो जाता है। इसीलिए कहा गया है—'अधिस्पर्श ज्ञान के लिए है, प्रयोग के लिए नहीं'[५] ॥ २४ ॥

[ मकारस्य विसर्जनीयभावः ]

**पुमो मकारस्य स्पर्शेऽघोषेऽनूष्मपरे विसर्जनीयोऽपुंश्चादिषु ॥ २५ ॥**

सू० अ०—ऊष्म से अन्य वर्ण बाद में है जिसके ऐसा अघोष स्पर्श बाद में होने पर पुम् के मकार का विसर्जनीय हो जाता है ( किन्तु ) पुंश्च इत्यादि में ( मकार का विसर्जनीय नहीं हुआ है )।

## निर्मलभाष्यम्

वर्गाणां प्रथमः द्वितीयश्च अघोषः स्पर्शः। जिह्वामूलीयः शकारः षकारः सकारः उपध्मानीय हकारश्चेति ऊष्मवर्णः। **अनूष्मपरे** ऊष्मव्यतिरिक्तः वर्णः परं यस्य तस्मिन् **अघोषे स्पर्शे** परे पुमः पुमित्यस्य **मकारस्य** विसर्जनीयः भवति। परञ्च **अपुंश्चादिषु** पुंश्च इत्यादिषु पुमः मकारस्य विसर्जनीयः न भवति। अथर्वचरणस्य शौनकशाखायाः संहितायां पुमः मकारस्थाने विसर्जनीयभावस्य निदर्शनं न प्राप्यते। अपुंश्चादिषु इत्यस्य निदर्शनम् —'पुंश्चली' ( सं० १५.२.१ )। प्रो० डब्लू० डी० ह्विटनीमहाभागेन विधानमिदम् अनावश्यकमवाञ्छितञ्चोक्तम् (ह्विटनी व्याख्या)। यतो हि संहितायाम् एकमेव स्थलं दृश्यते—'पुंश्चली' ( सं० १५.२.१ ) इति। ह्विटनीमहाभागस्य व्याख्यया ज्ञायते यत् पूर्वभाष्यकारमतानुसारं पुंश्चली इति 'पुमो मकारस्य स्पर्शेऽघोषेऽनूष्मपरे विसर्जनीयः' इत्यस्य सूत्रभागस्य निदर्शनं विद्यते। तत्र संहितायाम् 'अपुंश्चादिषु' इत्यस्य निदर्शनं नस्ति। ह्विटनीमहाभागानुसारम् एकस्यैवोदाहरणस्यार्थम् ईदृशं विस्तृतं विधानं नोचितम्। परञ्च एवं न। 'पुंश्चली' अपुंश्चादिषु इत्यस्य निदर्शनम्।

---

२. के। आसन्। जन्याः (प० पा०)
३. उष्णेन। वायो। उदकेन। इहि (प० पा०)
४. अस्यै। इच्छन्। अग्रुवै। पतिम् (प० पा०)
५. द्रष्टव्य १.१.९ पर भाष्य तथा व्याख्या

सूत्रकारस्याभिप्रायोऽयम्—पुंश्चली इत्यादिषु मकारस्य विसर्जनीयः न भवति। अत एव पदपाठेऽपि संहितावत् 'पुंश्चली' रूपमेव प्राप्यते। अत्र मकारस्य विसर्जनीयश्चेत् पदपाठे पुम्—चली इत्येवं रूपं भवितव्यम्। तन्न। वस्तुतस्तु 'पुमो मकारस्य स्पर्शेऽघोषेऽनूष्मपरे विसर्जनीयः' इति सामान्यविधानम्। 'अपुंश्चादिषु' इति सामान्यस्यापवादः। सामान्यं बिना अपवादविधानं कथितुं न शक्यते। अत्रापवादकथनम् एव सूत्रकारस्याभीष्टम्। तत्तु सामान्यं बिना न सम्भवति। अतः एवापवादस्यावबोधनार्थं सूत्रकारेण एकस्मिन्नेव सूत्रे सामान्यविधानं कृत्वा पुनश्च तत्रैव अपपवादोऽपि योजितः। ननु संहितायां अपवादस्य 'पुंश्चली' इत्येकमेव निदर्शनं प्राप्यते, तत्कथं सूत्रे अपुंश्चादिषु बहुवचनस्य प्रयोगः। उच्यते—'पुत्रः' (सं० ७.१.२) इत्यादिषु पुम्=नाम नरकं, तस्मात् त्र=त्रायते इति पुत्रः। अत्र अनूष्मपरे अघोषे स्पर्शेऽपि पुमः मकारस्य विसर्जनीयः न। अत एव बहुवचनं प्रयुक्तम्॥ २५॥

## शशिकला

वर्गों के प्रथम तथा द्वितीय अघोष स्पर्श हैं। जिह्वामूलीय, शकार, षकार, सकार, उपध्मानीय हकार तथा विसर्जनीय-ये ऊष्म वर्ण हैं। अनूष्म (ऊष्म से व्यतिरिक्त) वर्ण बाद में है जिसके ऐसा अघोष स्पर्श बाद में होने पर पुम् के मकार का विसर्जनीय हो जाता है किन्तु पुंश्च इत्यादि में मकार का विसर्जनीय नहीं होता है। अथर्वचरण की शौनकशाखा की संहिता में पुम् के मकार के स्थान पर विसर्जनीय होने का उदाहरण नहीं मिलता। अपुंश्चादिषु का उदाहरण—'पुंश्चली' है। प्रो०डब्लू० डी० ह्विटनी ने इस विधान को अनावश्यक और अवाञ्छित कहा है क्योंकि संहिता में 'पुंश्चली'—यह एक ही उदाहरण प्राप्त होता है। ह्विटनी महाभाग की व्याख्या से ज्ञात होता है कि पूर्वभाष्यकार के अनुसार 'पुंश्चली' पुम् के मकार के विसर्जनीय होने का उदाहरण है। अपुंश्चादिषु सूत्र के इस भाग का उदाहरण वहाँ संहिता में नहीं है। ह्विटनी महाभाग के अनुसार केवल एक ही उदाहरण के लिए इतने विस्तृत सूत्र का विधान करना उचित नहीं है। किन्तु ऐसी बात नहीं है। पुंश्चली यह अपुंश्चादिषु का उदाहरण है। सूत्रकार का अभिप्राय है कि पुंश्चली इत्यादि में मकार का विसर्जनीय नहीं हुआ है। इसी लिए पदपाठ में भी संहिता के समान 'पुंश्चली' रूप ही प्राप्त होता है। यदि यहाँ मकार का विसर्जनीय हुआ होता तो पदपाठ

में 'पुम्-चली' ऐसा रूप हुआ होता। किन्तु वहाँ 'पुम्-चली' ऐसा रूप नहीं है। वस्तुतः 'ऊष्म से अन्य वर्ण बाद में है जिसके ऐसा अघोष स्पर्श बाद में होने पर पुम् के मकार का विसर्जनीय हो जाता है'—यह सामान्य विधान है तथा 'पुंश्चादि में नहीं' यह उस सामान्य विधान का अपवाद है। सामान्य विधान के कथन के बिना उसके अपवाद को नहीं कहा जा सकता। यहाँ अपवाद का कथन ही सूत्रकार को अभीष्ट है जो सामान्य विधान के कथन के बिना असम्भव है। इसलिए अपवाद के कथन के लिए सूत्रकार ने एक ही सूत्र में पहले सामान्य विधान का कथन करके तत्पश्चात् इसी में इसका अपवाद भी जोड़ दिया है। **शंका**—जब संहिता में 'पुंश्चली' यह एक ही अपवाद का उदाहरण मिलता है तब अपुंश्चादिषु में बहुवचन का प्रयोग क्यों किया गया ? **समाधान**—'पुत्रः'। पुत्र की व्युत्पत्ति है—पुम् = नरक, उससे पिण्डदानादि के द्वारा त्र = रक्षा करता है इसलिए पुम् + त्र पुत्र कहा जाता है। यहाँ अनूष्म है बाद में जिसके ऐसा अघोष स्पर्श तकार बाद में होने पर भी पुम् के मकार का विसर्जनीय नहीं होता। इसी लिए अपुंश्चादिषु (पुंश्च इत्यादि में नहीं) में बहुवचन का प्रयोग हुआ है ॥ २५ ॥

[ नकारस्य विसर्जनीयभावः ]

## नकारस्य चटतवर्गेष्वघोषेष्वनूष्मपरेषु विसर्जनीयः[1] ॥ २६ ॥

**सू० अ०**—ऊष्म बाद में नहीं है जिसके ऐसे चवर्ग, टवर्ग तथा तवर्ग वाले स्पर्श बाद में होने पर नकार का विसर्जनीय हो जाता है।

### निर्मलभाष्यम्

**अनूष्मपरेषु** अनूष्मणः ऊष्मवर्णव्यतिरिक्ताः वर्णाः परे येषां तेषु **अघोषेषु चटतवर्गेषु** परेषु **नकारस्य विसर्जनीयः** भवति। पुनश्च 'विसर्जनीयस्य परस्थानोऽघोषे (२.२.१) इत्यनेन नकारस्थाने प्राप्तस्य विसर्जनीयस्य परसस्थानीयः ऊष्मन् भवति। तस्य विसर्जनीयस्य ऊष्मभावे 'यरोष्मापत्तौ च' (१.३.६) इत्यनेन पूर्ववर्णस्यानुनासिकोऽपि भवति। यथा—'अमीषांश्चित्तानि' (सं० ३.२.५) 'यांश्च' (सं० १८.१.४७) 'कुरुंदारांश्च' (सं० ११.९.२२,२४) 'तांस्त्वम्' (सं० १.८.४)[2] 'सर्वांस्तान्' (सं० ४.

---

१. (क) नकारस्य चटतवर्गेषु इतिपाठः।

२. सं० १०.३ १६, १९.३५.३०

२२.१ )[1] 'अधरांस्तथा' ( सं० ५.८.८ ) 'पाशांस्त्वम्' ( सं० ६.११२.२ ) 'देवांस्तान्' ( सं० ७.९७.३ ) 'क्लीबरूपांस्तिरीटिनः' ( सं० ८.६.७ ) 'सपत्नांस्त्वम्' ( सं० १०.३.१५ ) 'सजातांस्ते' ( सं० ११.१.६ ) 'यतमांस्त्वम्' ( सं० ११.१.१० ) 'आर्षेयांस्तपसः' ( सं० ११.१.२६ ) 'देवांस्तपसा' ( सं० ११.५.२ ) 'लोकांस्तपसा' ( सं० ११.५.४ ) 'असुरांस्ततर्हं' ( सं० ११.५.७) 'मासांस्ते' ( सं० ११.६.१७ ) 'देवांस्त्वचः' ( सं० १२.३.५३ ) 'देवांस्ते' ( सं० १८.१.४७ ) 'यांस्ते' ( सं० १८.३.६८ ) 'उभयांस्तर्पयन्तु' ( सं० १८.४.३९ ) 'युष्मांस्ते ( सं० १८.४.८६ ) 'अस्मांस्ते' ( सं० १८.४.८७ ) 'सर्वांस्त्वम्' ( सं० १९.२८.२ ) 'सर्वांस्तान्' ( सं० १९.३५ ५ ) 'सर्वांस्तृडहान्' ( सं० १९.३६.५ ) 'वनस्पतींस्तेभ्यः' ( सं० ३.२१.१ ) 'जालेनामूंस्तमसाभिः' ( सं० ८.८.८ ) 'तान्तूंस्तिरते' ( सं० १०.७.४२ ) 'अमूंस्ते' ( सं० ११.१.२० ) 'पशूंस्ताम्' ( सं० १९.६.१४ ) 'मातॄंस्ते' ( सं० ४.२७.२ ) 'उद्यंस्तेजः' ( सं० ७.१३.१ ) 'नग्रंस्तताप' ( सं० ७.१८.२ ) 'उद्यंस्त्वम्' ( सं० १३.१.३२ ) 'संस्तानि' ( सं० १३.१.३९ ) 'जीवन्तांस्ते' ( सं० १८.२.२० ) 'तक्मंस्तावानपि ( सं० ५.२२.५ ) 'कस्मिंस्ते' ( सं० ११.८.१० ) 'क्रामंस्त्वा' ( सं० १९.१९.१० ) 'प्रत्यायंस्ताम्' ( सं० २०.१३५.६ ) 'प्रत्यगृभ्णंस्ताम्' ( सं० २०.१३५.७ ) ।

उल्लेखनीयमत्र यत् संहितायामधोलिखितेषु स्थलेषु नकारस्य विसर्जनीयः न प्राप्यते प्रत्युत प्रकृतया एव दृश्यते । यत्कृते सूत्रकारेण विधानं न कृतम्—'तवीयान्तपसा' ( सं० ४.३२.३ ) 'विश्वान्देवानाम्' ( सं० ७.३८.३ ) 'ऋषीन्तपस्वतः' ( सं० १८.२.१५, १८ ) 'शत्रून्ताढि' ( सं० ७.८४.३ ) 'विभ्राजन्तन्वम्' ( सं० १३.२.३३ ) 'शृण्वन्तिष्ठसि' ( सं० १४.१.५ ) उद्यन्त्वचम्' ( सं० १९.२८.४ ) 'विवस्वान्ततः' ( सं० १८.२.३२ ) 'पूषन्तव' ( सं० ७.९.३ ) 'अस्मिन्तद्दक्षमाणः ( सं० १.३५.३ ) 'अस्मिन्त्रिवृत्' ( सं० ५.२८.४ ) 'अस्मिन्तासाम्' ( सं० ७.४३.१ ) 'अस्मिन्तेजः' ( सं० १०.३.१७) 'अधारयन्तथा' ( सं० ३.९.२ ) 'आयन्तेन' ( सं० ३.२२ २, ४.१४.१ ) 'दभन्तद्धः' ( सं० ४.७.७ ) 'अन्वविन्दन्तपसा' ( सं० ४.३५.२ ) 'अभवन्तरसा' ( सं० १०.१०.२४ ) ॥२६ ॥

**शशिकला**

अनूष्म ( ऊष्म से अन्य ) वर्ण बाद में है जिसके ऐसे अघोष चवर्ग, टवर्ग तथा तवर्ग के वर्णों के बाद में होने पर नकार का विसर्जनीय हो

---

१. सं० ४.३६ ३. ११.१७.२३, १२.३.४०, १८.२.३४

जाता है। 'अघोष वर्ण बाद में होने पर विसर्जनीय परवर्ती के समान स्थान वाला ऊष्म वर्ण हो जाता है' से विसर्जनीय का परसस्थानीय ऊष्म वर्ण हो जाता है तथा विसर्जनीय के ऊष्म हो जाने पर 'यकार, रेफ तथा ऊष्म होने पर पूर्ववर्ती स्वर अनुनासिक हो जाता है' से पूर्ववर्ती उपधा अनुनासिक हो जाता है। जैसे—'अमीषांश्चितानि'.........।'[1]

यहाँ यह उल्लेखनीय है कि शौनकशाखा की संहिता में अधोलिखित स्थलों पर नकार का विसर्जनीय नहीं मिलता प्रत्युत नकार प्रकृतिभाव से ही रहता है जिसके लिए सूत्रकार ने कोई विधान नहीं किया है—'तवीयान्तपसा'..........'[2] ॥ २६ ॥

---

१. अमीषान्। चित्तानि ( प० पा० ) यान्। च ( प० पा० ) कुरुदारान्। च ( प० पा० ) तान्। त्वम् ( प० पा० ) सर्वान्। तान् ( प० पा० ) अघरान्। तथा ( प० पा० ) पाशान्। त्वम् (प० पा०) देवान्। तान् (प० पा०) क्लीव-रूपान्। तिरीटिनः ( प० पा० ) स-पत्नान्। त्वम् ( प० पा० ) स-जातान्। ते ( प० पा० )। यतमान्। त्वम् ( प० पा० ) आर्षेयान्। तपसः ( प० पा० ) देवान्। तपसः ( प० पा० ) लोकान्। तपसा ( प० पा० ) असुरान्। ततहं (प० पा०) मासान्। ते (प० पा०) देवान्। त्वचः (प० पा०) देवान्। ते ( प० पा० ) यान्। ते ( प० पा० ) उभयान् तर्पयन्तु (प० पा०) युष्मान्। ते ( प० पा०) अस्मान्। ते ( प० पा०) सर्वान्। त्वम् (प० पा०) सर्वान्। तान् ( प० पा० ) सर्वान्। वृंहान् ( प० पा० ) वनस्पतीन्। तेभ्यः ( प० पा० ) जालेन। अमून्। तमसाभिः ( प० पा० ) तान्तून्। तिरते ( प० पा० ) अमून्। ते ( प० पा० ) पशून्। ताम् ( प० पा० ) मान्तून्। ते ( प० पा० ) उद्यन्। तेजः ( प० पा० ) नघ्नन्। तताप ( प० पा० ) उद्यन्। त्वम् ( प० पा०) सन्। तानि (प० पा०) जीवन्तान्। ते (प० पा०) तक्मन्। तावानसि ( प० पा० ) कस्मिन्। ते ( प० पा० ) क्रामन्। त्वा ( प० पा० ) प्रत्यायन्। ताम् (प० पा०) प्रति-अगृभ्णन्। ताम् (प० पा०)।

२. तवीयान्। तपसा ( प० पा० ) विश्वान्। देवानाम् ( प० पा० ) ऋषीन्। तपस्वतः ( प० पा० ) शत्रून्। ताढि ( प० पा० ) विभ्राजन्। तन्वम् ( प० पा० ) शृण्वन्। तिष्ठसि ( प० पा० ) उद्यन्। त्वचम् ( प० पा० ) विवस्वान्। ततः ( प० पा० ) पूषन्। तव ( प० पा० ) अस्मिन्। तत्। दक्षमाणः ( प० पा० ) अस्मिन्। त्रिवृत् ( प० पा० ) अस्मिन्। तासाम् ( प० पा० ) अस्मिन्। तेजः ( प० पा० ) अधारयन्। तथा ( प० पा० ) दभन्। तत् ( प० पा० )। अनु-अविदन्। तपसा ( प० पा० ) अभवन्। तरसा ( प० पा० )।

## आकारोपधस्योपबद्धादीनां स्वरे ॥ २७ ॥

**सू० अ०**—स्वर बाद में होने पर 'उपबद्ध' आदि से सम्बन्धित आकार उपधा वाले ( नकार ) का (विसर्जनीय हो जाता है) ।

### निर्मलभाष्यम्

**स्वरे** परे **उपबद्धादीनाम् आकारोपधस्य** नकारस्य विसर्जनीयः भवति । ततश्च 'स्वरे यकारः' ( २.२.२ ) इत्यनेन विसर्जनीयस्य यकारः भवति । पुनश्च 'यरोष्मापत्तौ' ( १.३.६ ) इत्यनेन पूर्वस्वरस्यानुसिकश्च भवति । 'स्वराद्यवयोः पदान्तयोः' ( २.१.२१ ) इत्यनेन यकारस्य लोपः । यथा—'उपबद्धाँ इहावह' (सं० १.७.७ ) । सूत्रे प्रयुक्तेन 'आदीनाम्' इत्यनेन ज्ञायते यदतोऽन्यत्रापि भवति । तद्विषये इमानि निदर्शनानि द्रष्टव्यानि—अकारपरे यथा—अस्माँ अभिदासति' ( सं० १.१९.३ )[1] 'महाँ असि' ( सं० १.२०.४ ) 'सर्वां मत्सपत्नाँ अधि ( सं० २.७.१ ) 'आदित्याँ अहम्' ( सं० ३.८.३ ) 'भगवाँ अस्तु' ( सं० ३.१६.५ ) 'सपथाँ अधि' ( सं० ४.१९.७ )[2] 'वृक्षाँ अभि' ( सं० ५.५.९ )[3] 'वैतहव्याँ अवतिरत्' ( सं० ५.१८.११ ) 'अमित्राँ अव' ( सं० ५.२०.८ ) 'मर्त्यां अभि' ( सं० ६.४१.३ ) 'जनाँ अनु' ( सं० ६.६९.४ )[4] 'वशाँ अनु' ( सं० ६.७२.१ )[5] 'जनाँ अति' ( सं० ६.७५.३ ) 'सन्नाँ अव' ( सं० ६.७६.४ ) 'अश्वाँ अतिष्ठिपम्' ( सं० ६.७७.१) 'फेनाँ अनु' ( सं० ६.११३.२ ) सर्वां अनु' ( सं० ६.१२१.४ ) 'अस्माँ अभयतमेन' ( सं० ७.२.९ ) अस्माँ अनु' ( सं० ७.२७.१ ) 'जनाँ अनु' ( सं० ७.५७.१ )[6] 'अस्माँ अभिक्षरः' ( सं० ७.१०९.४ ) 'शल्याँ अशनिभिः' (सं० ८.३.६) 'मर्त्तां अमर्त्यः' (सं० ८.३.२ ) 'देवाँ अपि (सं० ८.४.१४)[7] 'मनुष्याँ असुरान्' ( सं० ८.९.२४ ) 'अस्माँ अभि संविशस्व ( सं० ९.२०.५) 'देवाँ अनु' (सं० १०.२.२२-२३) 'ब्राह्मणाँ अभ्यावर्ते' ( सं० १०.५.४१ ) 'अधराँ अकः' ( सं० १०.६.१९, ३० ) 'सर्वां अधारयत्' ( सं० १०.१०७ )

---

१. सं० १.२१.२, ४.१९.५, ६.१५ १-२, ६ ५४.३
२. सं० ७ ६५.१
३. सं० ६.१२९.२
४ सं० ९ १.१९, १४ २ १०, १८ २.१३, १९.२६.३
५. सं० ९.४ २४
६. सं० १३.२.१८
७. सं० १०.१०.६, १२.४ ३१

'कम्बूकाँ अप' ( सं० ११ १.२९) 'कुम्भमुष्काँ असृङ्मुखान्' (सं० ११.१.१३) 'ताँ अर्बुदे' ( सं० ११.९ २२ )[1] 'अस्माँ अपि' ( सं० १२.१.२८ ) 'अस्माँ अशस्त्या' ( सं० १२.२.१२ ) 'लोकाँ अभि' ( सं० १२.३.१५ ) 'ताँ ज्वान' ( सं० १२.३.८ ) 'अध्वाँ अकल्पयत्' ( सं० १३.१.५३ ) 'दुर्गां अति' ( सं० १३.२.५ ) 'अन्ताँ अभितः ( सं० १४ १.४५ ) 'केशाँ अकल्पयत् ( सं० १४. १.५५ ) 'दुर्याँ अशीमहि' ( सं० १४.२.५ ) 'सुविदत्राँ अवित्सि' ( सं० १८. १.४५ ) 'सुविदत्राँ अपि' ( सं० १८.२.११ ) 'तपोजाँ अपि' ( सं० १८ २. १५-१८ ) 'कलशाँ अचिक्रदत्' ( सं० १८.४ ५८ ) 'प्रियाँ अधूषत्' ( सं० १८. ४.६१ ) 'लोकाँ अकल्पयन्' ( सं० १९.६.८ ) 'अमित्राँ अपबाधमानः' ( सं० १९ १३.८ ) 'जनाँ असनम्' ( सं० १९ ३२ ७ ) 'अस्माँ अभ्यघायति' ( सं० १९.५० ४ ) 'मर्त्याँ अति' ( सं० २०.१२७ ७ ) 'देवाँ अदाशुरिः' ( सं० २० १२८ ४ ) 'महाँ अभिक्तः' ( सं० २०.१३६.१५ )। **आकारपरे यथा**—'एनाँ आ वेशय' ( सं० २.२५.४ ) 'इमाँ आ' ( सं० ६ २८ २ ) 'ब्राह्मणाँ आ विवेश' ( सं० १८.३ ५५ )। **इकारपरे यथा**—'सालावृकाँ इव' ( सं० २ २७.५ ) 'खल्वाँ इव' ( सं० २.२११ )[2] 'ताँ इह' ( सं० ७ ११७ १ )। **उकारपरे यथा**—'पूर्णाँ उदकेन' ( सं० ४ ३४ ७ ) 'अयक्ष्माँ उत' ( सं० ६. ५९ २ ) 'ताँ उ' ( सं० ८.९.२३ )[3] 'जाताँ उत' ( सं० १० ३.१३-१५ ) 'ज्योतिष्माँ उत' (सं० १२ ३ १६) 'ताँ उप' ( सं० १२.३ ४० ) 'मधुमाँ उत्' ( सं० १८.१.४८ ) 'गृहाँ उप' ( सं० १८ २.२१ )। **ऋकारपरे यथा**— 'उतारेभाणाँ ऋषिभिः' ( सं० ८ ३.६ ) 'यज्ञियाँ ऋतून् ( सं० १८ १ १८)। **एकारपरे यथा**—'यज्ञियाँ एह' ( सं० ११ १ ४ )॥ २७॥

**शशिकला**

स्वर बाद में होने पर 'उपबद्ध' इत्यादि से सम्बन्धित आकार उपधा वाले नकार का विसर्जनीय हो जाता है। 'स्वर बाद में होने पर विसर्जनीय का यकार हो जाता है' इस विधान से उस विसर्जनीय का यकार हो जाता है। 'नकार का यकार, रेफ तथा ऊष्म होने पर पूर्ववर्ती स्वर अनुनासिक हो जाता है' से पूर्ववर्ती स्वर अनुनासिक हो जाता है तथा 'स्वर से परवर्ती पदान्त यकार तथा वकार का लोप हो जाता है'

---

१. स० ११.९.२४, ११.१०.२३

२. सं० ५.२३.८

३. सं ९.९.१५, १९

से यकार का लोप हो जाता है। जैसे—'उपबद्धाँ इहावह'[१]। सूत्र में प्रयुक्त 'उपबद्ध इत्यादि से सम्बन्धित' से ज्ञात होता है कि अन्य स्थलों पर-स्वर बाद में होने पर नकार का विसर्जनीय हो जाता है। इस विषय में ये उदाहरण द्रष्टव्य हैं **अकार बाद में होने पर जैसे**—'अस्माँ अभिदासति'......'[२]। **आकार बाद में होने पर जैसे**—'एनाँ आवेशय ...'[३]। **इकार बाद में** होने पर जैसे 'सालावृकाँ इव ...'।[४] **उकार बाद में**

---

१. उपबद्धान्। इह (प० पा० )

२. अस्मान्। अभि-दासति (प० पा०) महान्। असि (प० पा०) सर्वान्। मत्— सपत्नान्। अधि (प० पा०) आदित्यान्। अहम् (प० पा०) भगवान्। अस्तु (प० पा०) शपथान्। अधि (प० पा०) वृक्षान्। अभि (प० पा०) वैतहव्यान्। अव-तिरत् (प० पा०) अमित्रान्। अव (प० पा०) मर्त्यान्। अभि (प० पा०) जनान्। अनु (प० पा०) सन्नान्। अव (प० पा०) अश्वान्। अतिष्ठिपत् (प० पा०) फेनान्। अनु (प० पा०) सर्वान्। अनु (प० पा०) अस्मान्। अभय-तमेन (प० पा०) अस्मान्। अनु (प० पा०) जनान्। अनु (प० पा०) अस्मान्। अभि। क्षर (प० पा०) शल्यान्। अशनि-भिः (प० पा०) मर्त्तान्। अमर्त्यः (प० पा०) देवान्। अपि (प० पा०) मनुष्यान्। असुरान् (प० पा०) अस्मान्। अभि-संविशस्व (प० पा०) देवान्। अनु (प० पा०) ब्राह्मणान्। अभि—आवर्तें (प० पा०) अधरान्। अकः (प० पा०) सर्वान्। अधारयत् (प० पा०) कम्बूकान्। अप (प० पा०) कुम्भ-मुष्कान्। असृङ्-मुखान् (प० पा०) तान्। अर्बुदे (प० पा०) अस्मान्। अपि (प० पा०) अस्मान्। अशस्त्याः (प० पा०) लोकान्। अभि (प० पा०) तान्। अपाम् (प० पा०) अध्वान्। अकल्पयत् (प० पा०) दुर्गान्। अति (प० पा०) अन्तान्। अभितः (प० पा०) केशान्। अकल्पयत् (प० पा०) दुर्यान्। अशीमहि (प० पा०) सु-विदत्रान्। अवित्सि (प० पा०) सु-विदत्रान्। अपि (प० पा०) तपोजान्। अपि (प० पा०) कलशान्। अचिक्रदत् (प० पा०) प्रियान्। अधूषत (प० पा०) लोकान्। अकल्पयन् (प० पा०) अमित्रान्। अप—बाधमानः (प० पा०) जनान्। असनम् (प० पा०) अस्मान्। अभि—अघायति (प० पा०) मर्त्यान्। अति (प० पा०) देवान्। अदाशुरिः (प० पा०) महान्। अभिक्तः (प० पा०)।

३. एनान्। आ (प० पा०) इमान्। आ (प० पा०) ब्राह्मणान्। अः (प० पा०)।

४. सालावृकान्-इव (प० पा०) खलान्-इव (प० पा०) तान्। इह (प० पा०)।

होने पर जैसे—'पूर्णाँ उदकेन……'[1]। ऋकार बाद में होने पर जैसे—'उतारेभमाणाँ ऋषिभिः ……'[2]। एकार बाद में होने पर जैसे—'यज्ञियाँ एह'[3] ॥ २७ ॥

## वृक्षाँ वनानीति[4] वकारे ॥ २८ ॥

सू० अ०—वृक्षाँ वनानि में वकार बाद में होने पर (नकार का विसर्जनीय हो गया है)।

### निर्मलभाष्यम्

वनानि इत्यस्य वकारे परे **वृक्षाँ वनानि** इत्यत्र वृक्षान् इत्यस्य नकारस्य विसर्जनीयः भवति। यथा—'वृक्षाँ वनानि संचर ( ६.४५.१ )। वनानीति वकारे इति किम्? 'वृक्षान्नि मृणीहि' (सं० १०.१.१७) 'वृक्षान्भनक्ति' (सं० १०.३.१३) 'वृक्षान्साताः' ( सं० १०.३.१५ ) इत्यत्र माभूत् ॥ २८ ॥

### शशिकला

वृक्षाँ वनानि में वनानि का वकार बाद में होने पर वृक्षान् का नकार विसर्जनीय हो गया है। जैसे—'वृक्षाँ वनानि संचर[5]। सूत्र में वनानि का वकार बाद में होने पर यह क्यों कहा गया। 'वृक्षान्निमृणीहि'[6] 'वृक्षान्भनक्ति'[7] वृक्षान्साताः'[8] में नकार का विसर्जनीय न हो ॥ २८ ॥

[ नकारस्य रेफभावः ]

## नाम्युपधस्य रेफ ऋतूँरुत्सृजते वशीत्येवमादीनाम् ॥ २९ ॥

सू० अ०—ऋतूरुत्सृजते वशी' इत्यादि ऐसे स्थलों में नामिन् उपधा वाले ( नकार का ) रेफ ( हो जाता है )।

---

१. पूर्णान्। उदकेन (प० पा०) अयक्ष्मान्। उत (प० पा०) तान्। ॐ इत्यूँ (प० पा०) जातान्। उत (प० पा०) ज्योतिष्मान्। उत (प० पा०) गृहान्। उप (प० पा०)।

२. उत। आ-रेभमाणान्। ऋषि-भिः (प० पा०) यज्ञियान्। ऋतून् (प० पा०)।

३. यज्ञियान्। आ। इह (प० पा०)

४. (क) 'वृक्षं वनानाति इति पाठः

५. वृक्षान्। वनानि (प० पा०)

६. वृक्षान्। नि। मृणीहि (प० पा०)

७. वृक्षान्। भनक्ति (प० पा०)

८. वृक्षान्। शाताः (प० पा०)

## निर्मलभाष्यम्

नामिन् उपधा यस्य सः नाम्युपधः । अवर्णव्यतिरिक्ताः वर्णाः नामिनः । 'ऋतूँरुत्सृजते वशी' इति एवमादीनां नाम्युपधस्य नकारस्य रेफः भवति । 'यरोष्मापत्तौ च' (१.३.६) इत्यनेन पूर्वस्वरस्यानुनासिकं च भवति । यथा—'ऋतूँरुत्सृजते वशी (सं० ६.३६.२ । एवमादीनाम् इत्यनेन ज्ञायते यदन्यत्रापि नकारस्य नाम्युपधस्य रेफः भवति । तद्विषये इमानि निदर्शनानि द्रष्टव्यानि—'मो षु पणीँरभि' (सं० ५.११ ७) 'दस्यूँरुत बोधि' (सं० ४ ३२.६) 'ऋतूँरजनयम्' ( सं० ६.६१ २-३ ) 'ऋतूँरन्यः' (सं० ७ ८१.१) 'पितॄँरुप' (सं० १८.२.४, २३) 'पितॄँरुपेमम्' (सं० १८ ४.४०) ॥२९॥

## शशिकला

नामिन् है उपधा जिसकी वह नाम्युपध है। अवर्ण से अन्य स्वर नामिन् कहलाते हैं। ऋतूँरुत्सृजते वशी' इत्यादि में नामिन् उपधा वाले नकार का रेफ हो जाता है। 'नकार का यकार, रेफ तथा ऊष्म होने पर पूर्ववर्ती स्वर अनुनासिक हो जाता है' से पूर्ववर्ती स्वर अनुनासिक हो जाता है। जैसे—ऋतूँरुत्सृजते वशी'[1]। सूत्र में प्रयुक्त 'ऐसे इत्यादि में' से ज्ञात होता है कि अन्यत्र भी नामिन् उपधा वाले नकार का रेफ हो जाता है। इस विषय में ये उदाहरण द्रष्टव्य हैं—'मो षु पणीँरभि'[2] दस्यूँरुत बोधि'[3] 'ऋतूँरजनयम्'[4] 'ऋतूँरन्यः'[5] 'पितॄँरुप'[6] 'पितॄँरूपेमम्'[7] ॥२९॥

[ तन्निषेधः ]

### न समैरयन्तादीनाम् ॥ ३० ॥

सू० अ०—समैरयन्त इत्यादि से सम्बन्धित ( नकार का विसर्जनीय अथवा रेफ ) नहीं होता।

---

१. ऋतून् । उत्-सृजते । (प० पा०)
२. मो इति । पणीन् । अभि (प० पा०)
३. दस्यून् । उत (प० पा०)
४. ऋतून् । अजनयम् (प० पा०)
५. ऋतून् । अन्यः (प० पा०)
६. पितॄन् । उप (प० पा०)
७ पितॄन् । उप । इमम् (प० पा०)

## निर्मलभाष्यम्

'समैरयन्त' इत्यादीनां नकारस्य विसर्जनीयः रेफो वा न भवति। यथा—'समैरयन्तां व्युर्णुवन्तु' (सं० १.११.२)। सूत्रे प्रयुक्तेनादीनामित्यनेन ज्ञायते यदन्यत्रापि नकारस्य रेफः विसर्जनीयो वा न भवति। तद्विषये इमानि निदर्शनानि द्रष्टव्यानि— कुलपा राजन्तामु ते' (सं० १ १४.३) 'अस्मिन्तिष्ठतु या' (सं० १ १५ २) 'बृहन्दक्षिणया' (सं० ६.५३.१)। 'नकारस्य चटतवर्गेष्वघोषेष्वनूष्मपरेषु विसर्जनीयः' ( २.१.२६ ) इत्यादिना नकारस्य विसर्जनीयः 'नाम्युधस्य रेफः ऋतूँ सत्सृजते वशीत्येवमादीनाम्' (२ १.२९) इत्यनेन नकारस्य रेफः विहितः। तेषामपवादोऽयम् ॥३०॥

## शशिकला

'समैरयन्त' इत्यादि से सम्बन्धित नकार का विसर्जनीय अथवा रेफ नहीं होता। जैसे—'समैरयन्तां व्युर्णुवन्तु'[1]। सूत्र में प्रयुक्त 'आदि से सम्बधिन्त' से ज्ञात होता है कि अन्यत्र भी नकार का विसर्जनीय अथवा रेफ नहीं होता। इस विषय में ये उदाहरण द्रष्टव्य हैं— कुलपा राजन्तामु ते'[2] 'अस्मिन्तिष्ठतु या'[3] 'बृहन्दक्षिणया'[4] ॥ ३० ॥

[ मकारस्य परसस्थानभावः ]

**सू० अ०**—स्पर्श बाद में होने पर मकार का परवर्ती के समान स्थान वाला ( वर्ण ) हो जाता है।

## मकारस्य स्पर्शे परसस्थानः ॥३१॥

## निर्मलभाष्यम्

**स्पर्शे** स्पर्शवर्णे परे **मकारस्य परसस्थानः** स्पर्शः भवति। 'आन्तर्येण वृत्ति' (१.४ ४) इति परिभाषानुसारं कवर्गे परे ङकारः, चवर्गे ञकारः, टवर्गे णकारः, तवर्गे नकारश्च भवति। पवर्गे परे सति मकारः एव। कवर्गे परे यथा—'सङ्काशयामि बहतुम्' (सं० १४.२.१२)। चवर्गे परे यथा— 'उदागाञ्जीवः (सं० १४.२.४४)। टवर्गे परे मकारस्थाने परसस्थानीयस्य

---

१. सम्–ऐरयन्। ताम्। वि–ऊर्णुवन्तु (प० पा०)
२. कुलपा। राजन्। ॐमित्यूँ। ते (प० पा०)
३. अस्मिन्। तिष्ठतु। या (प० पा०)
४. बृहन्। दक्षिणया (प० पा०)

निदर्शनं शौनकशाखायाः संहितायां न प्राप्यते। तवर्गे यथा—'सन्नस्तेभिः' (सं० २.३.५२) 'सन्तैः पशुभिः' (सं० ४.३६ ५) 'सन्नष्टेन' (सं० ७.९.४)। पवर्गे यथा–'मा त्वा वृक्षः सम्बधिष्ट' (सं० १८.२.२५)। ननु 'दुर्नाम्नी सर्वाः' (सं० १४.१७.५) इत्यादिषु पदेषु मकारस्य परसस्थानः कथं न। **उच्यते**— 'पदान्तपदाद्योः सन्धिः' इत्युक्तम्। एवं विधानमिदं पदान्तपदाद्योः एव भवति। न तु पदमध्ये। प्रातिशाख्यकारानुसारं पदाः सिद्धाः एव। स्थलेऽस्मिन् मकारः पदमध्ये विद्यते न तु पदान्ते। अत एवानेन विधानेन अस्य मकारस्य परसस्थानीयत्वं न विहितम्॥३१॥

## शशिकला

स्पर्श वर्ण बाद में होने पर मकार का परवर्ती स्पर्श के समान स्थान वाला वर्ण हो जाता है। 'आदेश समीपता के अनुसार होता है' के अनुसार कवर्ग का स्पर्श बाद में होने पर मकार का ङकार चवर्ग बाद में होने पर ञकार, टवर्ग बाद में होने पर णकार तथा तवर्ग बाद में होने पर नकार हो जाता है। पवर्ग बाद में होने पर मकार ही होता है। कवर्ग बाद में होने पर जैसे—'सङ्काशयामि'[1]। चवर्ग बाद में होने पर जैसे—'उदागाञ्जीवः'[2]। टवर्ग बाद में होने पर मकार के परसस्थान होने का उदाहरण संहिता में नहीं प्राप्त होता। तवर्ग बाद में होने पर जैसे— सन्नस्तेभिः[3] सन्तैः पशुभिः[4], 'सन्नष्टेन'[5]। पवर्ग बाद में होने पर जैसे— मा त्वा वृक्षः सम्बधिष्ट[6]। यहाँ शंका होती है कि 'दुर्नाम्नीः सर्वाः'[7] इत्यादि स्थलों पर मकार का परसस्थानीय वर्ण क्यों नहीं हुआ है। **समाधान**—'सन्धि पदान्त तथा पदादि में होती है' के अनुसार सन्धि पदान्त और पदान्त में होती है, पद के मध्य में नहीं। प्रातिशाख्य के अनुसार तो पद सिद्ध होते हैं। 'दुर्नाम्नी' में मकार पद के मध्य में स्थित है. पदान्त में नहीं। अतः यहाँ उसके परसस्थान होने का विधान नहीं किया गया है॥ ३१॥

---

१. सङ्काशयामीति सम्–काशयामि (प० पा०)
२. उदागामिति उत-अगाम। जीव (प० पा०)
३. सम्। नः। तेभिः (प० पा०)
४. सम्। तैः। पशुभिः (प० पा०)
५. सम्। नष्टेन (प० पा०)
६. मा। त्वा। सम्-बधिष्ट (प० पा०)
७. दुर्नाम्नीरिति दुः-नाम्नीः। सर्वाः (प० पा०)

[ मकारस्य लोपविधानम् ]

## अन्तःस्थोष्मसु लोपः ॥ ३२ ॥

सू० अ०—अन्तःस्थ और ऊष्म (वर्ण) बाद में होने पर (मकार का) लोप हो जाता है।

### निर्मलभाष्यम्

अन्तःस्थोष्मसु अन्तस्थाश्चोष्माणश्च तेषु परेषु मकारस्य लोपः भवति। 'नकारमकारयोर्लोपे पूर्वस्यानुनासिक' (१.२.३) इत्यनेन पूर्वस्य स्वरस्यानुनासिकः भवति। अन्तःस्थेषु यथा—'वृक्षं यद्गावः' (सं० १.२.३) 'संराधयन्तः सधुराः' (सं० ३.३०५) 'पितरं वरुणम्' (सं० १३.३)। ऊष्मसु यथा—'पराद्य देवा वृजिनं शृणन्तु' (सं० ८३१४) 'सं सुभूत्या' (सं० ३१४.१) 'भवसि सं समृद्ध्या' (सं० १२.३२१) 'न्योषितं हतम्' (सं० ८.४.१)। लोपविषयकविधानमिदं पदान्तपदाद्योः भवति। ऊष्मषु परेषु पदमध्येऽपि मकारस्य लोपः भवति। यत्परसूत्रे विहितं भविष्यति ॥ ३२ ॥

### शशिकला

अन्तःस्थ तथा ऊष्म वर्ण बाद में होने पर मकार का लोप हो जाता है। 'नकार तथा मकार का लोप होने पर पूर्ववर्ती अनुनासिक हो जाता है' से पूर्ववर्ती स्वर अनुनासिक हो जाता है। अन्तःस्थ बाद में होने पर जैसे—'वृक्षं यद्गावः'[1] 'सं राधयन्तः सधुराः'[2] 'पितरं वरुणम्'[3]। ऊष्म बाद में होने पर जैसे—'पराद्य देवा वृजिनं शृणन्तु'[4] 'सं सुभूत्या'[5] भवसि संसमृद्ध्या' 'न्योषितं हतम्'[6]। लोप-विषयक यह विधान पदान्त तथा पदादि में ही लागू होता है। ऊष्म बाद में होने पर पद के मध्य में भी मकार का लोप हो जाता है जो परवर्ती सूत्र में कहा जायेगा ॥ ३२ ॥

## ऊष्मस्वेवान्तःपदे ॥ ३३ ।

सू० अ०—ऊष्म (वर्ण) बाद में होने पर ही पद के मध्य में (मकार का लोप होता है)।

---

१. वृक्षम्। यत्। गावः (प० पा०)
२. सम्-राधयन्तः। सधुराः (प० पा०)
३. पितरम्। वरुणम् (प० पा०)
४ परा। अद्य। देवाः। वृजिनम्। शृणन्तु (प० पा०)
५. सम्। सु-भूत्या (प० पा०) ६. भवसि। सम्। समृद्ध्या (प० पा०)

## निर्मलभाष्यम्

ऊष्मसु ऊष्मवर्णेषु परेषु सत्सु **एव अन्तःपदे** पदमध्ये मकारस्य लोपः भवति। 'नकारमकारयोर्लोपे पूर्वस्यानुनासिकः' (१.३५) इत्यनेन पूर्व-स्वरस्य अनुनासिकः। यथा—'विंशतिश्च' (सं० ५.१५.२) 'त्रिंशच्च' (सं० ५.१५.२) 'चत्वारिंशश्च' (सं० ४.१५४) 'पुमान् पुंसः' (सं० ३.६.१) 'पुंसुवनम्' (सं० ६.११.१) 'पुंसि वै रेतः' (सं० ६ ११ २)। अत्र एव-पदः अन्तःस्थेषु परेषु इत्यस्य निवारकः। अन्तःस्थेषु परेषु पदमध्ये मकारस्य लोपः न भवति। तत्र तु पररूपम्। ननु प्रातिशाख्यानुसारं तु पदाः सिद्धाः? कथमत्र अन्तःपदे विधानं कृतम्। **उच्यते**—शिष्याणाम वबोधनार्थम् इति। अत एव पदपाठे संहितावदेव रूपं प्राप्यते॥ ३३॥

## शशिकला

ऊष्म वर्ण बाद में होने पर ही पद के मध्य में मकार का लोप हो जाता है। 'नकार तथा मकार का लोप होने पर पूर्ववर्ती अनुनासिक हो जाता है' से पूर्ववर्ती स्वर अनुनासिक हो जाता है। जैसे—'विंशतिश्च'[1] 'त्रिंशच्च'[2] 'चत्वारिंशच्च'[3] 'पुमान् पुंसः'[4] 'पुंसुवनम्'[5] 'पुंसि वै रेतः'[6]। सूत्र में प्रयुक्त 'एव' पद 'अन्तःस्थ बाद में होने पर' का निवारण करता है। अन्तःस्थ बाद में होने पर तो मकार का पररूप हो जाता है। **शङ्का**—प्रातिशाख्य के अनुसार तो पद सिद्ध होते हैं। फिर यहाँ पद के मध्य में मकार के लोप होने का विधान क्यों किया गया? **समाधान**—यहाँ अन्तः पद में मकार के लोप होने का विधान शिष्यों के अवबोधन के लिए किया गया है। मूलरूप से तो पद सिद्ध होते हैं, इसलिए पदपाठ में संहिता के समान ही रूप प्राप्त होता है॥ ३३॥

[ नकारस्य लोपविधानम् ]

### नकारस्य च॥ ३४॥

---

१. विंशतिः। च (प० पा०)
२. त्रिंशत्। च (प० पा०)
३. चत्वारिंशत्। च (प० पा०)
४. पुमान्। पुंसि (प० पा०)
५. पुम्-सुवनम् (प० पा०)
६. पुंस। वै। रेतः (प० पा०)

सू० अ०—( ऊष्म वर्ण बाद के होने पर ही पद के मध्य में) नकार का भी लोप हो जाता है।

## निर्मलभाष्यम्

चशब्दोऽत्र पूर्वसूत्रस्यान्वादेशकः। अन्त पदे ऊष्मवर्णेषु परेषु नकारस्य च लोपः भवति। 'नकारमकारयोर्लोपे पूर्वस्यानुनासिकः' ( १३५ ) इत्यनेन पूर्वस्य स्वरस्य अनुनासिकश्च भवति। यथा— परूंसि यस्य' (सं० ९.६.१) 'यजूँषि होत्रा' (सं० ११.६.१४) अत्तो हवींषि' (सं० १८.३.४४) ।।३४।।

## शशिकला

सूत्र में प्रयुक्त च शब्द पूर्ववर्ती सूत्र का अन्वादेशक है। पद के मध्य में ऊष्म वर्ण बाद में होने पर नकार का भी लोप हो जाता है। 'नकार तथा मकार का लोप होने पर पूर्ववर्ती अनुनासिक हो जाता है' से पूर्व स्वर अनुनासिक भी हो जाता है। जैसे—'परूंसि यस्य'[1] 'यजूंषि होत्रा[2] 'अतो हवींषि'[3] ।। ३४ ।।

[ नकारमकारयोरनुनासिकलकार-विधानम् ]

## उभयोर्लँकारे लकारोऽनुनासिकः ॥ ३५ ॥

सू० अ०—लकार बाद में होने पर (नकार तथा मकार) दोनों का अनुनासिक लकार (हो जाता है)।

## निर्मलभाष्यम्

लकारे परे उभयोः नकारमकारयोः अनुनासिकः अनुनासिकगुण-युक्तः लकारः भवति। नकारस्य यथा—'दुर्गन्धीँल्लोहितास्यान्' ( सं० ८.६.१२ ) सर्वाँल्लोकान्' (सं० ४ ३८.५) 'अविँल्लोकेन' (सं० ३ २९.३) 'प्रतिमाँल्लोकाः' (सं० १८.४.५) मकारस्य यथा–'ताँल्लोकम्' (सं०३.८९.५) शौनकसंहितायां तु नकारमकारयोरनुननासिकलकारः न प्राप्यते। तत्र तु द्वयोर्लोपः पूर्वस्वरस्यानुनासिकश्च प्राप्तः। शाखान्तरे भवितव्यम्।।३५।।

---

१. परूंसि। यस्य (प० पा०)

२. यजूंषि। होत्रा (प० पा०)

३. अत्तो इति। हवींषि (प० पा०)

### शशिकला

लकार बाद में होने पर नकार तथा मकार इन दोनों का अनुनासिक लकार (ल्ँ) हो जाता है। नकार का जैसे—'दुर्गन्धीँल्लोहितास्यान्'[1] 'सर्वाँल्लोकान्'[2]। आविँल्लोकेन'[3] 'प्रतिमाँल्लोकान्'[4]। मकार का जैसे— 'ताँल्लोकम्'[5]। शौनक शाखा की संहिता में नकार तथा मकार का अनुनासिक लकार नहीं प्राप्त होता। वहाँ तो दोनों का लोप तथा पूर्ववर्ती स्वर का अनुनासिकत्व ही प्राप्त होता है। सम्भवतः सूत्रकार के इस विधान को बनाने का कारण दूसरी शाखा में अनुनासिक लकार का प्राप्त होना है॥ ३५ ॥

[ मकारलोपनिषेधः ]

## न समो राजतौ ॥ ३६ ॥

सू० अ०—राज् बाद में होने पर सम् ( के मकार ) का लोप नहीं होता।

### निर्मलभाष्यम्

'अन्तःस्थोष्मसु लोपः' (२.१.३२) इत्यस्यापवादोऽयम्। **राजतौ** राज् परे **समः** समित्यस्य मकारस्य लोपः न भवति। यथा—सम्राडेको वि राजति' (सं० ६.३१ ३) 'सम्राज्ञ्येधि श्वसुरेषु सम्राज्ञ्युत देवृषु। ननान्दुः सम्राज्ञ्येधि सम्राज्ञ्युत श्वश्र्वा' (सं० १४.१.४४) 'साम्राज्यस्य सूषुवे' (सं० १४.१.४३) ॥ ३६ ॥

### शशिकला

'अन्तःस्थ तथा ऊष्म बाद में होने पर (मकार का) लोप हो जाता है' का यह अपवाद है। राज् बाद में होने पर सम् के मकार का लोप नहीं

---

१. दुर्गन्धीन्। लोहित-आस्यान् (प० पा०)
२. सर्वान्। लोकान् (प० पा०)
३. आविन्। लोकेन (प० पा०)
४. प्रतिमान्। लोकेन (प० पा०)
५. ताम्। लोकम् (प० पा०)

होता। जैसे--'सम्राडेको वि राजति'[1] 'सम्राज्ञ्येधि श्वसुरेषु सम्राज्ञ्युत देवृषु। ननान्दुः सम्राज्ञ्येधि समाज्ञ्युत श्वश्र्वा'[2]। 'साम्राज्यस्य सुषुवे'[3] ॥ ३६ ॥

## सन्ध्ये च वकारे ॥ ३७ ॥

**सू० अ०**—सन्धि विषयक (सन्धि से होने वाला वकार बाद में होने पर (मकार का लोप) नहीं होता।

### निर्मलभाष्यम्

'अन्तःस्थोष्मसु लोपः' (२.१.३२) इत्यस्यापवादोऽयम्। सूत्रे प्रयुक्तः चशब्दः नेत्यस्यान्वादेशकः। सन्धौ भवः सन्ध्यः। **सन्ध्ये** सन्धिना प्राप्ते **वकारे** परे मकारस्य लोपः न भवति। यथा—'सम् वास्ना ह आस्याम्' (सं० ६.५६.३) इत्यत्र उकारस्य आकारे परे सति वकारः सन्ध्यः। तस्मिन् वकारे परे समित्यस्य मकारस्य लोपः न भवति। सन्ध्ये इति किम्? सं वर्चसा' (सं० ६.५३.३) बृहतं विषूचीम्' (सं० ४.४२.१) 'एकं वसवः' (सं० ८.८.१२) इत्यादिषु असन्ध्ये वकारे परस्य मकारस्य लोपनिषेधः न भवतु ॥३७॥

### शशिकला

'अन्तःस्थ तथा ऊष्म वर्ण बाद में होने पर मकार का लोप हो जाता है' का यह अपवाद है। सूत्र में प्रयुक्त चशब्द पूर्ववर्ती सूत्र से 'न' का अन्वादेशक है। सन्धि से होने वाला सन्ध्य है। सन्ध्य वकार बाद में होने परमकार का लोप नहीं होता। जैसे --'सम् वास्ना ह आस्यम्'[4] यहाँ वास्ना का वकार आकार बाद में होने से उकार के स्थान पर सन्धि से प्राप्त है। अतः उस वकार के बाद में होने पर सम् के मकार का लोप नहीं हुआ

---

१. सम्-राट्। एकः। वि-राजति (प० पा०)

२. सम्-राज्ञी। एधि। श्वसुरेषु। सम्-राज्ञी। उत। देवृषु। ननान्दुः। सम्-राज्ञी। एधि। सम्-राज्ञी। उत। श्वश्र्वा (प० पा०)

३. साम्-राज्यम्। सुसुवे (प० पा०)

४. सम्। ॐ इति। वास्ना। ह। आस्यम् (प० पा०)

है। सूत्र में 'सन्ध्य' यह क्यों कहा गया ? 'सं वर्चसा'[१] बृहतं विषूचीम्'[२] 'एकं वसवः'[३] इत्यादि में मकार के लोप का निषेध न होवे ।। ३७ ।।

[ स्फोटनविधानम् ]

## वर्गविपर्यये स्फोटनः पूर्वेण चेद्विरामः ।। ३८ ।।

**सू० अ०**—(संयोग के स्थल पर) वर्ग का विपर्यय होने पर पूर्ववर्ती (वर्ण) के साथ स्फोटन करना चाहिए, यदि (वह पूर्ववर्ती वर्ण पद के) अवसान (अन्त) वाला हो ।

### निर्मलभाष्यम्

स्फोटनः नाम स्थानात् करणस्य विमोक्षः । **वर्गविपर्यये** संयोगे **पूर्वेण** स्पर्शेन सह **स्फोटनः**, कर्त्तव्यः इति शेषः । **चेत्** पूर्वः स्पर्शः **विरामः** पदस्यावसानस्थः । पदान्त्यः इत्यर्थः । **यथा**—'वषट्कारेण' (सं० ५.२६.१२) 'भव त्कम्' ( सं० २.३.१ ) 'एजत्कः' ( सं० ५.२३.७ ) 'त्रिष्टुब् गायत्री' ( सं० १८.२.६) 'यद्गायत्रे' ( सं० ९.१०.१ ) 'अनुष्टुप् कथम्' ( सं० ८.९.२० ) 'उत्खिदन्' (सं० ४.११.१०) 'यद्घोषैः' (सं० ५.२४.८) । **नन्वत्र** वर्गविपर्यये संयोगे पूर्वस्तु न पदान्तः तत्कथं स्फोटनः । **उच्यते**—समस्तपदस्य पूर्वपदः पदवद्भवति । अतएव संयोगस्य पूर्वः स्पर्शः पदान्ते एव विद्यमानः । विराम इति किम् ? 'वेनोरद्गा' (सं० १.२६.३) इत्यत्र माभूत् प्रत्युत अभिनिधानः भवति । वर्गविपर्यये इति किम् ? मरुद्भिः' ( सं० २.२९.४ ) इत्यत्र स्फोटन तु न ।

वस्तुतस्तु कवर्गः चवर्गः टवर्गः तवर्गः पवर्गश्च इति वर्गाणां क्रममिदं मुखस्थस्योच्चारणस्थानस्य क्रमेण निर्धारितमस्ति । मुखेऽभ्यन्तरात् क्रमशः जिह्वामूल. तालुः, मूर्धा, दन्ताः, ओष्ठश्च क्रमेण स्थितः । तत्र प्रथमः जिह्वामूलः तत्रोच्चारितः कवर्गः प्रथमः वर्गः । तत्पश्चात् द्वितीयः तालुः । तत्रोच्चारितः चवर्गः द्वितीयः । तृतीये स्थाने मूर्धनि उच्चारितः टवर्गः तृतीयः । एवमेव चतुर्थे दन्तस्थाने उच्चारितः तवर्गः चतुर्थः तथा च क्रमेण

---

१. सम् । वर्चसा (प० पा०)

२. बृहतम् । विषूचीम् (प० पा०)

३. एकम् । वसवः (प० पा०)

पञ्चमे स्थाने ओष्ठे उच्चारितः पवर्गः पञ्चमः। वर्गानुक्रमे संयोगे तु पूर्वेण स्फोटनः स्वभावतः भवत्येव। यतो हि पूर्वस्य स्फोटनं विना संयोगस्य द्वितीयस्पर्शस्योच्चारणस्थाने वायोः गमनं न सम्भवम्, यत्र करणस्यस्पर्शेन तस्यावरोधः जायते। यथा—'मरुद्भिः' इत्यत्र दकारोच्चारणार्थं दन्ते जिह्वाग्रेण स्पर्शः भवति। स्फोटनात्पूर्वं भकारोच्चारणार्थं ओष्ठस्थाने वाय्वाभावः एव। दकारस्य स्फोटनानन्तरमेव तत्र वायोः गमनं सम्भवम्। अत एव भकारोच्चारणस्य स्पर्शार्थं तु पूर्वं दन्ताद् जिह्वाग्रस्य स्फोटनं स्वाभाविकम्।

परञ्च वर्गविपर्यये संयोगे तन्न। यतो हि परवर्गस्य पूर्वस्पर्शस्य उच्चारणार्थं स्थानकरणयोः स्पर्शकाले एव पूर्ववर्गस्य परस्पर्शस्य स्थानेऽपि वायुः विद्यमानः एव भवति। अत एव परवर्गस्य पूर्वस्पर्शस्य स्फोटनं बिनापि पूर्ववर्गस्य परस्पर्शस्योच्चारणार्थं स्थाने करणेन स्पर्शः सम्भवम्, येन परवर्गस्य पूर्वस्पर्शस्य पूर्णोच्चारणं भवितुं न शक्नोति। अत एव वर्गविपर्यये संयोगे परवर्गस्य पूर्वस्पर्शस्य पूर्णोच्चारणार्थं स्फोटनः कर्त्तव्यः। यथा—'वषट्कारेण' इत्यत्र वर्गविपर्ययेन टकारककारयोः संयोगः। यदा टकारोच्चारणार्थं मूर्धनि प्रतिवेष्टितजिह्वाग्रेण स्पर्शः भवति तदा ककारस्य स्थाने जिह्वामूलेऽपि वायुः विद्यते एव। अत एव मूर्धस्थानात् प्रतिवेष्टितजिह्वाग्रस्य स्फोटनं बिना एव ककारोच्चारणार्थं जिह्वामूले हनुमूलेन स्पर्शं सम्भवं जातं, येन टकारस्य पूर्णोच्चारणं भवितुं न शक्नोति। अत एव अत्र टकारस्य पूर्णोच्चारणार्थं मूर्धस्थानात् प्रतिवेष्टितजिह्वाग्रस्य स्फोटनः कर्त्तव्यः। तदनन्तरं ककारोच्चारणार्थं प्रयत्नो विधेयः ॥ ३८ ॥

**शशिकला**

स्फोटन का अर्थ है—स्थान से करण का विमोक्ष=अलगाव[1]।

1. स्पर्श वर्णों के उच्चारण में मुख में तीन क्रियाएँ होती हैं—(क) बाह्य-प्रयत्न द्वारा विकृत श्वास अथवा नाद नामक वायु-द्रव्य का मुख में आना (ख) स्पृष्ट नामक आभ्यन्तर प्रयत्न से स्थान पर करण का स्पर्श, जिससे मुख में वायु अवरुद्ध हो जाता है तथा (ग) स्थान से करण का अलगाव, जिससे वायु स्फुटित होकर मुख से बाहर निकल जाता है। इन तीनों क्रियाओं में द्वितीय क्रिया अर्थात् स्थान पर करण के स्पर्श से जब तक वायु मुख में अवरुद्ध रहती है तब तक ध्वनि सुनाई नहीं पड़ती। ज्यों ही तीसरी क्रिया सम्पन्न होती है—स्थान से करण के बिलगाव के कारण वायु मुख से बाहर निकलती है त्यों ही श्रुतिगोचर हो जाता है। इस प्रकार स्पर्श वर्ण के पूर्ण उच्चारण के लिए तीनों क्रियाएँ पूर्णरूपेण सम्पन्न होनी चाहिए।

वर्गविपर्यय वाले संयोग में पूर्ववर्ती स्पर्श वर्ण के साथ स्फोटन करना चाहिए। यदि वह पूर्ववर्ती स्पर्श पदावसान में स्थित हो। जैसे—'वषट्-कारेण'[१] 'भवत्कम्'[२] 'एजत्कः'[३] 'त्रिष्टुब् गायत्री'[४] 'यद् गायत्रे'[५] 'अनुष्टुप्-कथम्'[६] 'उत्खिदत्'[७] 'यद्घोषैः'[८]। **शंका**—यहाँ वर्गविपर्यय वाले संयोग में पूर्ववर्ती स्पर्श पदावसान वाला नहीं है तो फिर कैसे स्फोटन का स्थल हो सकता है। **समाधान**—समस्त (समासयुक्त, सावग्रह) पद का पूर्वपद पद के समान होता है। अत एव पूर्वपद के अवसान में विद्यमान पूर्ववर्ती स्पर्श भी पदान्त ही है। सूत्र में 'विराम' यह क्यों कहा गया ? 'वेनोद्गा' यहाँ स्फोटन न होवे। वर्गविपर्यय में यह क्यों कहा गया ? 'मरुद्भिः'[९] यहाँ स्फोटन नहीं, प्रत्युत अभिनिधान होता है[१०]।

वस्तुतः कवर्ग, चवर्ग टवर्ग, तथा पवर्ग–ये वर्गों का क्रम है। वर्गों का यह क्रम मुख में स्थित उच्चारण स्थान के क्रम से निर्धारित है। मुख में भीतर की ओर से क्रमशः जिह्वामूल, तालु, मूर्धा, दन्त तथा ओष्ठ स्थित हैं। उनमें जिह्वामूल प्रथम है अतः वहाँ उच्चारित होने वाला कवर्ग प्रथम वर्ग है। उसके बाद दूसरा तालु है अतः वहाँ से उच्चारित होने वाला चवर्ग द्वितीय स्थान पर है। तीसरे स्थान पर मूर्धा होने के कारण वहाँ से उच्चारित होने वाला टवर्ग तृतीय है। चतुर्थ दन्त स्थान से उच्चारित होने वाला तवर्ग चतुर्थ तथा पञ्चम ओष्ठ स्थान से उच्चारित होने वाला पवर्ग पञ्चम है। वर्गानुक्रम के संयोग में पूर्ववर्ती स्पर्श का स्फोटन करना तो स्वाभाविक है क्योंकि पूर्ववर्ती स्पर्श के स्फोटन के बिना संयोग के द्वितीय स्पर्श के स्थान तक वायु का अभाव ही रहता है। स्फोटन के बाद ही द्वितीय स्पर्श के उच्चारण-स्थान तक वायु का जाना सम्भव है।

---

१. वषट्–कारेण (प० पा०)
२. भवत्–कम् (प० पा०)
३. एजत्–कः (प० पा०)
४ त्रिष्टुप्–गायत्री (प० पा०)
५. यत्–गायत्रे (प० पा०)
६. अनुष्टुप्–कथम् (प० पा०)
७. उत्–खिदत् (प० पा०)
८. यत्–घोषैः (प० पा०)
९. मरुत्–भिः (प० पा०)
१०. द्रष्टव्यः १ २.३

जहाँ करण के द्वारा स्पर्श से उसका अवरोध होता है। जैसे—'मरुद्भिः' में दकार के उच्चारण के लिए दन्त पर प्रतिवेष्टित जिह्वाग्र से स्पर्श होता है। स्फोटन से पहले भकार के उच्चारण स्थान ओष्ठ में वायु का अभाव रहता है। दकार के स्फोटन के पश्चात् ही वहाँ ओष्ठ स्थान पर वायु का जाना सम्भव है। अत एव भकार के उच्चारण के स्पर्श के लिए तो पहले दन्त से जिह्वाग्र का स्फोटन स्वाभाविक है।

किन्तु वर्गविपर्यय वाले संयोग में ऐसी बात नहीं है। क्योंकि परवर्ती वर्ग वाले संयोग के प्रथमस्पर्श के उच्चारण के लिए स्थान पर करण के स्पर्श होने के समय ही पूर्ववर्ग वाले परवर्ती स्पर्श के स्थान पर भी वायु विद्यमान ही रहती है। अतएव परवर्ती वर्ग वाले प्रथम स्पर्श के स्फोटन के बिना भी पूर्व वर्ग वाले परवर्ती स्पर्श के उच्चारण स्थान पर करण से स्पर्श हो जाना सम्भव है। परवर्ती वर्ग वाले प्रथम स्पर्श का पूर्ण उच्चारण नहीं हो सकता[1]। जैसे–वषट्कारेण में वर्गविपर्यय से टकार तथा ककार का संयोग है। जब टकार के उच्चारण के लिए मूर्धा पर प्रतिवेष्टित जिह्वाग्र से स्पर्श होता है उस समय ककार के उच्चारण-स्थान जिह्वामूल पर भी वायु रहती है। अत एव मूर्धा से प्रतिवेष्टित जिह्वाग के स्फोटन हुए बिना ही ककार के उच्चारण के लिए जिह्वामूल पर हनुमूल से स्पर्श करने की सम्भावना रहती है जिससे टकार का पूर्ण उच्चारण नहीं हो सकता। इसलिए यहाँ टकार के पूर्ण उच्चारण के लिए मूर्धा से जिह्वाग्र का स्फोटन करना चाहिए। तत्पश्चात् ककार के उच्चारण के लिए प्रयत्न करना चाहिए ॥ ३८ ॥

[ कर्षणविधानम् ]

**न टवर्गस्य चवर्गे कालविप्रकर्षस्त्वत्र भवति तमाहुः कर्षणः इति ॥ ३९ ॥**

**सू० अ०**—चवर्ग बाद में होने पर टवर्ग का स्फोटन नहीं होता। इसमें (स्फोटन की अपेक्षा) समय का आधिक्य ( कालविप्रकर्ष ) होता है। उसको 'कर्षण' कहा जाता है।

---

१. पूर्ण उच्चारण होने के लिए स्पर्श के बाद स्फोटन होना आवश्यक है। क्योंकि स्फोटन होने पर वायु के मुख से बाहर निकलते समय ही स्पर्श ध्वनि सुनाई पड़ती है।

## निर्मलभाष्यम्

कर्षण संज्ञात्र विहिता। कर्षणस्य स्वरूपं वोक्तम्। 'वर्गविपर्यये स्फोटनः पूर्वेण चेद्विरामः' (२.१ ३८) इत्यनेन वर्गविपर्यये सति चवर्गे टकारस्यापि स्फोटनः प्राप्तः। तन्न भवति। अत्र तु **चवर्गे** परे जाते टवर्गस्य तु स्फोटनापेक्षया **कालविप्रकर्षः** कालस्य उच्चारणकालस्य विप्रकर्षः आधिक्यं भवति। प्रतिवेष्टितजिह्वाग्रेण स्पर्शनात्। तत्कालविप्रकर्षः **कर्षणः इत्याहुः**। कर्षणः उच्यते इत्यर्थः। यथा– षट्चेमाः' (सं० ४.२०.२) 'षट् च मे' (सं० ५.१५.६) 'षड्जाता' (सं० ८.९.१६) 'षट् च' (सं० १९ ४७.४)। चवर्गे इति किम्? वषट्कारेण' (सं० ५.२६.१२) इत्यत्र माभूत्॥ ३९॥

॥ इति श्रीमत्पण्डितदशरथपाठकसूनुना डा० जमुनापाठकेन कृते निर्मलभाष्ये चतुरध्यायिकायाः द्वितीयाध्यायस्य प्रथमः पादः ॥३९॥

## शशिकला

यहाँ कर्षण संज्ञा का विधान किया गया है अथवा कर्षण का स्वरूप बतलाया गया है। 'वर्गविपर्यय होने पर (संयोग के) पूर्ववर्ती स्पर्श से स्फोटन करना चाहिए, यदि वह (पूर्ववर्ती स्पर्श) पदावसान वाला हो' के द्वारा चवर्गीय स्पर्श बाद में होने पर टवर्गीय स्पर्श का भी स्फोटन प्राप्त होता है किन्तु वह स्फोटन नहीं होता। यहाँ चवर्गीय स्पर्श बाद में होने पर टवर्गीय स्पर्श का उच्चारण उस स्फोटन की अपेक्षा प्रतिवेष्टित जिह्वाग्र द्वारा स्पर्श के कारण अधिक समय में होता है।[1] वह टवर्ग के उच्चारण में स्फोटन की अपेक्षा लगा कालाधिक्य कर्षण कहलाता है। जैसे—'षट् चेमाः'[2] 'षट् च मे'[3] 'षड् जाता'[4] 'षट् च'। सूत्र में चवर्ग बाद में होने पर यह क्यों कहा? वषट्कारेण'[5] में कर्षण न होवे॥ ३९॥

॥ चतुरध्यायिका के द्वितीय अध्याय के प्रथम पाद की डा० जमुनापाठक–कृत शशिकला व्याख्या समाप्त ॥१॥

---

१. टवर्ग के उच्चारण में मूर्धा पर प्रतिवेष्टित (मुड़ी हुई) जिह्वाग्र से स्पर्श होता है। स्पर्श के पश्चात् मुड़ी हुई जिह्वा के सीधे होने तथा स्थान से विलगाव में अन्य वर्गों के स्पर्श की अपेक्षा टवर्ग के उच्चारण में अधिक समय लगना स्वाभाविक है क्योंकि अन्य वर्गों के उच्चारण में करण प्रतिवेष्टित नहीं होता, केवल स्थान से उसका विलगाव ही होता है।

२. षट्। च। इमाः (प० पा०) ३. षट्। च (प० पा०)

४. षट्। जाता (प० पा०) ५. वषट्–कारेण (प० पा०)

## अथ द्वितीयः पादः

[ विसर्जनीयस्य परसस्थानभावः ]

### विसर्जनीयस्य परसस्थानोऽघोषे ॥ १ ॥

सू०अ०—अघोष बाद में होने पर विसर्जनीय का परवर्ती के समान स्थान वाला ( वर्ण ) हो ( जाता है ) ।

### निर्मलभाष्यम्

स्पर्शवर्गाणां प्रथमश्च द्वितीयश्च स्पर्शः हकारव्यक्तिरिक्तश्चोष्मणः अघोषः । एतस्मिन् **अघोषे** परे **विसर्जनीयस्य परसस्थानः** परस्थानीयः ऊष्मन् भवति । 'आन्तर्येण वृत्तिः' ( १.४.४ ) इत्यनेन कवर्गे परे जिह्वामूलीयः, चवर्गे शकारे च परे शकारः, टवर्गे षकारे च परे षकारः, तवर्गे सकारे च परे सकारः, पवर्गे परे उपध्मानीयः भवति । कवर्गे यथा—'अन्त ≍ कोशमिव' ( सं० १.१४.४ ) । चवर्गे यथा—'यश्च द्विषन्' ( सं० ११९.४ ) । टवर्गे यथा—'वृक्षष्टीकते' ( लौकिकम् ) । तवर्गे यथा—'मयस्तोकेभ्यः' ( सं० १.१३.२ ) 'आविस्तोकानि' ( सं० ५.१९.२ ) 'परस्तराम्' ( सं० ५ २२ ७ ) 'नस्तुजये' ( सं० ७ ४९ १ )' त्रयस्त्रिंशेन जगोति' ( सं० ८.९ २० ) 'मखस्तविष्यते' ( सं० १८ १ २३ ) । पवर्गे यथा—'तत≍परि प्रजातेन' ( सं० ६ ८९.१ ) । शकारे यथा—'वावृधानश्शवसा' ( सं० ५. २ २ ) 'यश्श्यावः' ( सं० ५.५.८) । षकारे यथा—'वृक्षष्षोडशम्' ( लौकिकम् ) । सकारे यथा—'वाताभ्रजास्स्तनयन्' ( सं० ११२.१ ) 'अरुस्स्राणम्' ( सं० २.३.३ ) 'विव्रतास्स्थानम्' ( सं० ३ ८.५ ) 'अति दुर्गास्स्रोत्याः' ( सं० १०.१.१६ ) । अघोषे इति किम् ? 'अग्निर्भागस्स्थ' ( सं० १० ५.७) 'अरातीयोर्भ्रातृव्यस्य' ( सं० १०.६.१ ) 'तैर्मेदिनो अङ्गिरसः' ( सं० १०.६. २० ) इत्यादिषु माभूत् ॥ १ ॥

### शशिकला

स्पर्श वर्गों के प्रथम तथा द्वितीय स्पर्श और हकारव्यतिरिक्त अर्थात् ≍ क श ष स ≍ प—ये ऊष्म वर्ण अघोष हैं । इन अघोष वर्णों के बाद में होने पर विसर्जनीय का परवर्ती वर्ण के समान स्थान वाला ऊष्म वर्ण हो

जाता है। 'आदेश समीपता के अनुसार होता है' इस परिभाषा के अनुसार कवर्ग बाद में होने पर जिह्वामूलीय (≍क), चवर्ग तथा शकार बाद में होने पर शकार, टवर्ग तथा षकार बाद में होने पर षकार, तवर्ग तथा सकार बाद में होने पर सकार और पवर्ग बाद में होने पर उपध्मानीय (≍प) हो जाता है। कवर्ग बाद में होने पर जैसे—'अन्त≍कोशम्'[१]। चवर्ग बाद में जैसे—'यश्च द्विषन्'। टवर्ग बाद में होने पर जैसे—'वृक्षष्टीकते'[३]। तवर्ग बाद में होने पर जैसे—'मयस्तोकेभ्यः'[४] 'आविस्तोकानि'[५] 'परस्तराम्'[६] 'नस्तुजये'[७] 'त्रयस्त्रिंशेन जगोति'[८] 'मखस्तविष्यते'[९]। पकार बाद में होने पर जैसे—तत≍परि प्रजातेन'[१०]। शकार बाद में होने पर जैसे–'वावृधानश्शवसा'[११] 'यश्श्यावः'[१२]। षकार बाद में होने पर जैसे—'वृक्षष्षोडशम्'। सकार बाद में होने पर जैसे–'वातभ्रजास्स्तनयन्'[१३] 'अरुस्स्नाणम्'[१४] 'विव्रतास्स्थानम्'[१५] 'अति दुर्गास्स्रोत्याः'[१६]। सूत्र में अघोष बाद में होने पर—यह क्यों कहा गया? 'अग्निर्भागस्स्थ'[१७] 'अरातीयोर्भ्रातृव्यस्य'[१८] 'तैर्मेदिनो अङ्गिरसः'[१९] इत्यादि में विसर्जनीय का परसस्थानीय वर्ण न होवे ॥ १ ॥

---

१. अन्तः–कोशम् (प० पा०) २. यः । च । द्विषन् (प० पा०)
३. वृक्षः+टीकते
४. मयः—तोकेभ्यः (प० पा०)
५. आविः—तोकानि (प० पा०)
६. परः–तराम् (प० पा०)
७. नः । तुजये (प० पा०)
८. त्रयः–त्रिंशेन (प० पा०)
९. मखः । तविष्यते (प० पा०)
१०. ततः । परि । प्रजातेन (प० पा०)
११. ववृधानः । शवसा (प० पा०)
१२. यः । श्यावः (प० पा०)
१३. वातभ्रजाः । स्तनयन् (प० पा०)
१४. अरुः । स्नानम् (प० पा०)
१५. वि-व्रताः । स्थानम् (प० पा०)
१६. अति । दुर्गाः । स्रोत्याः (प० पा०)
१७. अग्निः । भागः । स्थ (प० पा०)
१८. अरातीयोः । भ्रातृव्यस्य (प० पा०)
१९ तैः । मेदिनः । अङ्गिरसः (प० पा०)

[ विसर्जनीयस्य यकारभावः ]

## स्वरे यकारः ॥ २ ॥

**सू० अ०**—स्वर बाद में होने पर (विसर्जनीय का) यकार हो जाता है।

### निर्मलभाष्यम्

**स्वरे** स्वरवर्णे परे सति विसर्जनीयस्य **यकारः** भवति। 'स्वराद्य-वयोः पदान्तयोः' ( २.१.२१ ) इत्यनेन स्वरात् पदान्तस्य तस्य यकारस्य लोपश्च जायते। यथा—'यस्या उपस्थ उर्वन्तरिक्षम्' (सं० ७.६.४) 'माध्य-न्दिन उद्गायति' (सं० ९.६.४६) 'अभिपश्यत एव' (सं० १०.८.२४) 'व आपः' (सं० ३.१३.७) 'न आपः' (सं० १२.१.३०) इत्यत्र विसर्जनीयस्य स्वरे यकारः तल्लोपश्च। स्वरे इति किम्? अग्निर्भागः' (सं० १०.५.७) 'अरातीयोर्भ्रातृव्यस्य' (सं० १०.६.१) 'तैर्मेदिनो अङ्गिरसः (सं० १०.६.२०) इत्यादिषु माभूत् ॥ २ ॥

### शशिकला

स्वर वर्ण बाद में होने पर विसर्जनीय का यकार हो जाता है। 'स्वर से बाद में पदान्त यकार तथा वकार का लोप हो जाता है' से उस यकार का लोप हो जाता है। जैसे—'यस्या उपस्थ उर्वन्तरिक्षम्'[1] 'माध्य-न्दिन उद्गायति'[2] 'अभिपश्यत एव'[3] 'व आपः'[4] 'न आपः'[5] । यहाँ स्वर बाद में होने पर–यह क्यों कहा गया? 'अग्निर्भागः'[6] 'अरातीयो-र्भ्रातृव्यस्य'[7] 'तैर्मेदिनो अङ्गिरसः'[8] इत्यादि में यकार न होवे ॥ २ ॥

---

१. यस्याः। उप-स्थः। उरु। अन्तरिक्षम् (प० पा०)
२. मध्यन्दिनः। उत्—गायति (प० पा०)
३ अभि। पश्यतः। एव (प० पा०)
४. वः। आपः (प० पा०)
५. नः। आपः ( प० पा० )
६. अग्निः। भाग. ( प० पा० )
७ अरातीयोः। भ्रातृव्यस्य (प० पा०)
८. तैः। मेदिनः। अङ्गिरसः प० पा०)

[ विसर्जनीयस्य रेफभावः ]

## नाम्युपधस्य रेफः ॥ ३ ॥

### निर्मलभाष्यम्

स्वरे परे **नाम्युपधस्य** नामिन् एव उपधा यस्य तस्य विसर्जनीयस्य **रेफः** भवति। यथा—'अग्निरासीनः' (सं० ९.७.१९) 'वायुरमित्रान्' (सं० ११.१०.१६) 'अहं मन्योरव ज्यामिव' ( सं० ५.१३.६ ) 'तैरमित्राः' (सं० ५.२१.८)। नाम्युपधस्येति किम्? 'अभिपश्यत एव' (सं० १० ८.२४) 'परोऽपेह्यसमृद्धे' (सं० ५.७.७) इत्यादिषु माभूत् ॥ ३ ॥

### शशिकला

स्वर बाद में होने पर नामिन् (अवर्ण से अन्य सभी स्वर वर्ण) उपधा वाले विसर्जनीय का रेफ हो जाता है। जैसे—'अग्निरासीनः'[1] 'वायुरमित्रान्'[2] 'अहं मन्योरव ज्यामिव'[3] 'तैरमित्राः'[4]। सूत्र में 'नामिन् उपधा वाले का' यह क्यों कहा गया? 'अभिपश्यत एव'[5] 'परोऽपेह्यसमृद्धे'[6] इत्यादि में न होवे ॥ ३ ॥

## घोषवति च ॥ ४ ॥

**सू० अ०**—घोष व्यञ्जन बाद में होने पर भी (नामिन् उपधा वाले विसर्जनीय का रेफ हो जाता है)।

### निर्मलभाष्यम्

चशब्दोऽत्र रेफःइत्यन्वादिशति। वर्गाणां तृतीयः, चतुर्थः पञ्चमश्च स्पर्शः, अन्तःस्थः, हकारश्चेति घोषः। **घोषवति** तस्मिन् घोषे परे सति नाम्युपधस्य विसर्जनीयस्य च रेफः भवति। यथा—'तस्या अग्निर्वत्सः ( सं० ४.३९.२ ) 'अग्निर्भागःस्थ' (सं० १०.५७) 'अरातीयोर्भ्रातृव्यस्य' (सं० १०.६.१) ॥ ४ ॥

---

१. अग्निः। आसीनः। (प० पा०)
२. वायुः। अमित्रान् (प० पा०)
३. अहम्। मन्योः। अव। ज्याम्—इव (प० पा०)
४. तैः। अमित्राः (प० पा०)
५. अभि—पश्यतः। एव (प० पा०)　६. परः। अपेहि। असमृद्धे (प० पा०)

### शशिकला

चशब्द 'रेफ' इसका अन्वादेशक है। वर्गों के तृतीय, चतुर्थ तथा पञ्चम स्पर्श, अन्तःस्थ तथा हकार—ये घोष वर्ण हैं। उन घोष वर्णों के बाद में होने पर नामिन् उपधा वाले विसर्जनीय का रेफ हो जाता है। जैसे—'तस्या अग्निर्वत्सः'[1] अग्निर्भागः स्थ'[2] 'अरातीयोर्भ्रातृव्यस्य'[3] ॥४॥

## आवः करकश्च विवरबिभरसर्वनाम्नः ॥ ५ ॥

**सू० अ०**—( स्वर तथा घोष व्यञ्जन बाद में होने पर ) आवः, कः, अकः, च वि वः और अबिभः का विसर्जनीय रेफ हो जाता है यदि ये सर्वनाम न हों।

### निर्मलभाष्यम्

**असर्वनाम्नः** सर्वनामव्यतिरिक्तः आवः, कः, अकः, च वि वः अबिभः इत्येतेषां विसर्जनीयस्य स्वरे घोषे वा परे रेफः भवति। **यथा**—'व्यावर्देव्या मतिम्' ( सं० २.१४२.१ ) 'कर्देवस्त्वष्टा' ( सं० १८.१.५ ) अत्र कः इत्ययं पदः प्रजापतिपर्यायः। 'आर्कवि हिं' ( सं० २०.९१.४ ) 'अकरयम्' ( सं० ७.३०.१ ) 'अविभरदितिः' ( सं० ६.८१.३ )। च वि वः इत्यस्य निदर्शनं शौनकशाखायाः संहितायां न प्राप्यते। ह्विटनीमहाभागस्य व्याख्यया ज्ञायते यत्पूर्वभाष्यकारेण निदर्शनमिदमपि दत्तम्—'सुरुचो वेन आवः' ( सं० ४.११ ) 'सरस्वति तमिह धातवे कः' ( सं० ७.१०.१ ) 'अशं निर्ऋत्या अकः' ( सं० २.२५.१ ) 'सतश्च योनिमसतश्च वि वः'। उल्लेखनीयमत्र यत्संहितायाम् आवः, कः, अकः, च वि वः' अवसाने विद्यते। अत एव स्वरघोषपरत्वाभावेन विसर्जनीयस्य रेफः न प्राप्यते। पदपाठेऽपि परिहाराभावात् तेषां रेफभावः न लक्ष्यते। 'प्रगृह्यावगृह्यसमापाद्यान्तगतानां द्विवचनं परिहार इतिमध्ये ( ४.४.१८ ) इत्यनेन क्रमपाठे विसर्जनीयस्य रेफ प्राप्यते ॥ ५ ॥

### शशिकला

स्वर तथा घोष व्यञ्जन बाद में होने पर आवः, कः, अकः, च वि वः, अबिभः के विसर्जनीय का रेफ हो जाता है, यदि ये सर्वनामवाची न

---

१. तस्याः। अग्निः। वत्सः (प० पा०)
२. अग्निः। भागः। स्थ (प० पा०)
३. अरातीयोः। भ्रातृव्यस्य (प० पा०)

हो। जैसे—'व्यावर्देव्या मतिम्'[१] 'कर्देवस्त्वष्टा'[२] यहाँ कः पद प्रजापति का वाचक है। 'आकर्वि हि'[३] 'अकरयम्'[४] 'अबिभरदितिः'[५]। 'च वि वः' का उदाहरण शौनकशाखा की संहिता में नहीं मिलता। ह्विटनी की व्याख्या से ज्ञात होता है कि पूर्वभाष्यकार के द्वारा ये भी उदाहरण दिए गए हैं—'सुरुचो वेन आवः'[६] तमिह धातवे कः'[७] 'अशं निर्ऋत्या अकः'[८] 'सतश्च योनिमसतश्च वि वः'[९]। यहाँ यह उल्लेखनीय है कि इन उदाहरणों में आवः, कः तथा अकः संहिता में अवसान में विद्यमान हैं। अत एव स्वर तथा घोष व्यञ्जन बाद में न रहने से वहाँ विसर्जनीय का रेफ नहीं प्राप्त होता। पदपाठ में भी परिहार के अभाव के कारण इनका रेफभाव नहीं दिखाई पड़ता। 'प्रगृह्य, अवगृह्य, समापाद्य तथा अवसानस्थ पदों का इति मध्य में रखकर परिहार करना चाहिए' इस विधान के अनुसार क्रमपाठ में इति बाद में रखकर परिहार द्वारा दो बार पाठ होने से विसर्जनीय का रेफ प्राप्त होता है॥ ६॥

## द्वार्वारिति ॥ ६ ॥

सू० अ०—( स्वर तथा घोष व्यञ्जन बाद में होने पर द्वाः तथा वाः ( के विसर्जनीय का रेफ हो जाता है )।

---

१. वि। आव॰। देवि। आ। मतिम् ( प० पा० )
२. कः। देवः। त्वष्टा ( प० पा० )
३. आ। अकः। वि। हि ( प० पा० )
४. अकः। अयम् ( प० पा० )
५. अबिभः। अदितिः ( प० पा० )
६. सुरुचः। वेनः। आवः ( प० पा० )
सुरुचो वेनः। सुरुचः इति सु—रुचः। वेन आवः। आवरित्यावः ( क्र० पा० )
७. तम्। इह। धातवे। कः ( प० पा० )
तमिह। इह धातवे। धातवे कः। करिति कः ( क्र० पा० )
८. अशम्। निर्ऋत्यै। अकः ( प० पा० )
अशं निर्ऋत्यै। निर्ऋत्या अकः। अकरित्यकः ( क्र० पा० )
९. सतः। च। योनिम्। असतः। च। वि। वः ( प० पा० )
सतश्च। च योनिम्। योनिमसतः। असतश्च। च वि। वि वः। वरिति वः ( क्र० पा० )

## निर्मलभाष्यम्

स्वरे घोषवति च परे सति द्वाः वाः इत्यनयोः विसर्जनीयस्य रेफः भवति। यथा—'तस्माद्वार्णाम' ( सं० ३ १३.३० )। द्वाः इत्यस्य निदर्शनं स्वरे घोषवति वा परे संहितायां न प्राप्यते। ह्विटनीमहाभागस्य व्याख्यया ज्ञायते यत् पूर्वभाष्यकारेण निदर्शनद्वयं दत्तम्—'प्रथमा द्वाः' ( सं० ९.३.२२ ) 'दिव्यं घृतं वाः' ( सं० १८.१.३२ )। उल्लेखनीयमत्र यत् द्वाः, वाः इति अवसाने विद्यते। अत एव स्वरघोषपरत्वाभावेन विसर्जनीयस्य रेफः संहितायां न प्राप्यते। पदपाठेऽपि परिहाराभावात् तयोः रेफभावः न दृश्यते। 'प्रगृह्यावगृह्यसमापाद्यान्तगतानां द्विवचनं परिहार इतिमध्ये ( ४ ४.१८ ) इत्यनेन क्रमपाठे विसर्जनीयस्य रेफ प्राप्यते ॥ ६ ॥

## शशिकला

स्वर तथा घोष व्यञ्जन बाद में होने पर द्वाः तथा वाः के विसर्जनीय का रेफ हो जाता है। जैसे—'तस्माद् वार्णाम'[१]। द्वाः के विसर्जनीय के रेफ होने का उदाहरण संहिता में नहीं मिलता। ह्विटनी की व्याख्या से ज्ञात होता है कि पूर्वभाष्यकार ने ये दो उदाहरण दिए हैं—'प्रथमा द्वाः'[२] 'दिव्यं घृतं वाः'[३]। यहाँ यह उल्लेखनीय है कि इन उदाहरणों में द्वाः तथा वाः अवसान में विद्यमान है। अतः संहिता में स्वर अथवा घोष बाद में होने का अभाव होने से विसर्जनीय का रेफ नहीं प्राप्त होता। पदपाठ में भी परिहार न होने के कारण दोनों के विसर्जनीय का रेफ होना नहीं प्राप्त होता। 'प्रगृह्य अवगृह्य, समापाद्य तथा अवसानस्थ पदों का इति मध्य में रखकर परिहार करना चाहिए' इस विधान के अनुसार क्रमपाठ में इति बाद में रख कर परिहार द्वारा दो बार पाठ होने से विसर्जनीय का रेफ प्राप्त होता है ॥ ६ ॥

## अजहातेरहाः ॥ ७ ॥

**सू० अ०**—( स्वर तथा घोष व्यञ्जन बाद में होने पर ) हा ( धातु से ) अन्य अहाः ( के विसर्जनीय का रेफ हो जाता है )।

---

१. तस्मात् । वाः । नाम ( प० पा० )

२. प्रथमा । द्वाः । ( प० पा० )
प्रथमा द्वाः । द्वारिति द्वाः ( क्र० पा० )

३. दिव्यम् । घृतम् । वाः ( प० पा० )
दिव्यं घृतम् । घृतं वाः । वारिति वाः ( क्र० पा० )

## निर्मलभाष्यम्

स्वरे घोषवति च परे ह्वाधातुव्यतिरिक्तस्य अह्वाः इत्यस्य विसर्जनीयस्य रेफः भवति। यथा—'इन्द्रस्तान् पर्यह्वार्दाम्ना' ( सं० ६.१०३.२,३ ) 'अग्निष्टदाह्वार्निर्ऋतेः' ( सं० ७.५३.३ )। अजह्वातेरिति किम् ? 'अह्वा अरातिम्' ( सं० २.१०.७ ) इत्यत्र माभूत् ॥ ७ ॥

## शशिकला

स्वर तथा घोष व्यञ्जन बाद में होने पर ह्वा धातु से अन्य अह्वाः के विसर्जनीय का रेफ हो जाता है। जैसे—'इन्द्रस्तान् पर्यह्वार्दाम्ना'[१] 'अग्निष्टदाह्वार्निर्ऋते'[२]। सूत्र में 'अजह्वातेः (ह्वा धातु के रूप का नहीं)'—ऐसा क्यों कहा गया ? 'अह्वा अरातिम्'[३] यहाँ न होवे ॥ ७ ॥

## एकामन्त्रिते रौद्विवचनान्तस्य[४] ॥ ८ ॥

सू० अ०—रौ है द्विवचन वाले ( नामपद ) के अन्त में जिसके उस (नामपद के) सम्बोधन के एक ( वचन ) में प्राप्त ( विसर्जनीय का रेफ हो जाता है, यदि उसके बाद में स्वर तथा घोष व्यञ्जन हो)।

## निर्मलभाष्यम्

स्वरे घोषवति च परे **रौद्विवचनान्तस्य** प्रथमाविभक्तौ रौ द्विवचनस्य अन्ते यस्य तस्य नामपदस्य **एकामन्त्रिते** आमन्त्रिते एकवचने यः विसर्जनीयः तस्य रेफः भवति। यथा—'भूमे मातर्निधेहि' ( सं० १२.१.६३ ) 'एतां विशस्तर्यथापर्वसिना' (सं० ९.५.४)। एकामन्त्रिते इति किम् ? 'दैव्या होतार ऊर्ध्वम्' (सं० ४.२७.९) इत्यत्र माभूत्। रौद्विवचनान्तस्येति किम् ? क्रमपाठे 'तविषस्य प्रचेतः' (सं० ४.३२.५) इत्यत्र माभूत् ॥ ८ ॥

## शशिकला

जिन नाम पदों के प्रथमाविभक्ति के द्विवचन में अन्त में 'रौ' होता है, ऐसे पदों के सम्बोधन एकवचन में प्राप्त विसर्जनीय का रेफ हो जाता

---

१. इन्द्रः। तान्। परि। अह्वाः। दाम्ना ( प० पा० )
२. अग्निः। तत्। आ। अह्वाः। निर्ऋते ( प० पा० )
३. अह्वाः। अरातिम् ( प० पा० )
४. (क) रोद्विवचनान्तस्य इति पाठः।

है यदि उनके बाद स्वर तथा घोषव्यञ्जन हों। जैसे—'भूमे मातर्निधेहि'[1] 'एतां विशस्तर्यथापर्वसिना'[2]। सूत्र में 'सम्बोधन एकवचन में' यह क्यों कहा गया? 'दैव्या होतार ऊर्ध्वम्' यहाँ रेफ न हो। 'द्विवचन में अन्त में रौ है जिसके ऐसे पदों का' यह क्यों कहा गया? 'तविषस्य प्रचेतः'[3] यहाँ क्रम-पाठ में न होवे ॥ ८ ॥

## अन्तः पुनः प्रातः सनुतः स्वरव्ययानाम् ॥९॥

**सू० अ०**—अव्यय ( पद ) अन्तः, पुनः, प्रातः, सनुतः तथा स्वः (के विसर्जनीय) का (रेफ हो जाता है)।

### निर्मलभाष्यम्

स्वरे घोषवति च परे **अन्तः पुनः प्रातः सनुतः स्वः** इत्येषाम् **अव्ययानां** विसर्जनीयस्य रेफः भवति। यथा—'अन्तर्दावे जुहुता' ( सं० ६.३२.१) 'पुनर्मैत्विन्द्रियम्' ( सं० ७ ६७.१ ) 'प्रातर्भगं पूषणम्' ( सं० ३.१६.१) 'सनुतर्युयोतु' (सं० ७.९२.१) 'स्वर्णोप त्वा' (सं० २.५.२। अव्ययानामिति किम्? 'यो नः स्वो यो अरणः सजातः' (सं० १.१९.३) 'समग्रः समन्तो भूयासम्' (सं० ७.८१.४) इत्यत्र माभूत् ॥ ९ ॥

### शशिकला

स्वर तथा घोष व्यञ्जन बाद में होने पर अन्तः, पुनः, प्रातः, सनुतः तथा स्वः-इन अव्यय पदों के विसर्जनीय का रेफ हो जाता है। जैसे—'अन्तर्दावे जुहुता'[4] 'पुनर्मैत्विन्द्रियम्'[5] 'प्रातर्भगं पूषणम्'[6] 'सनुतर्युयोतु'[7]

---

१. भूमेः। मातः। नि—धेहि (प० पा०)

२. वि-शस्तः। यथा (प० पा०)

३. तविषस्य। प्रचेतः (प० पा०)
तविषस्य प्रचेतः। प्रचेत इति प्र—चेतः (क्र० पा०)
यहाँ क्रमपाठ में प्रचेतः के विसर्जनीय के पश्चात् 'इति' का स्वर है किन्तु प्रथमा विभक्ति के द्विवचन में इस पद के अन्त में रौ नहीं होता। अतः यहाँ सम्बोधन एकवचन में इस पद के अन्त वाले विसर्जनीय का रेफ नहीं होता।

४. अन्तः— दावे। जुहुतः ( प० पा० )

५. पुनः। मा। आ। एतु। इन्द्रियम् (प० पा०)

६. प्रातः। भगम्। पूषणम् (प० पा०)

७. सनुतः। युयोतु (प० पा०)

'स्वर्णोप त्वा'[१]। सूत्र में अव्ययों का—यह क्यों कहा गया ? 'यो नः स्वो यो अरणः सजातः'[२] 'समग्रः समन्तो भूयासम्'[३] यहाँ न होवे ॥९॥

## स्वर्षाश्च ॥ १० ॥

सू० अ०—स्वर्षाः में भी (स्वः के विसर्जनीय का रेफ हो जाता है)।

### निर्मलभाष्यम्

**स्वर्षाः** इत्यत्र स्वः इत्यस्य विसर्जनीयस्य रेफः भवति। यथा—'शूषम् अग्रियः स्वर्षाः' (सं० ५·२·८) ॥१०॥

### शशिकला

स्वर्षाः में भी स्वः के विसर्जनीय का रेफ हुआ है। जैसे—'शूषम् अग्रियः स्वर्षाः'[४] ॥ १० ॥

## अहर्नपुंसकम् ॥ ११ ॥

सू० अ०—(स्वर तथा घोषव्यञ्जन बाद में होने पर) नपुंसक लिङ्ग वाले अहः (के विसर्जनीय का रेफ हो जाता है)।

### निर्मलभाष्यम्

नपुंसकलिङ्गस्य अहः इत्यस्य विसर्जनीयस्य रेफः भवति। **यथा**—'अहरहरभिगच्छामि' (संन् १६ ७.११) 'अहर्मात्यपीपरः' ( सं० १७.१.२५)। नपुंसकमिति किम् ? 'द्वादशाहोऽपि' ( सं० ११.९.१२ ) इत्यत्र माभूत् ॥११।

### शशिकला

स्वर तथा घोषव्यञ्जन बाद में होने पर नपुंसक लिङ्ग वाले अहः के विसर्जनीय का रेफ हो जाता है। जैसे—'अहरहरभिगच्छामि'[५] 'अहर्मात्यपीपरः'[६]। सूत्र में नपुंसक लिङ्ग वाला—यह क्यों कहा गया ? 'द्वादशाहोऽपि'[७] यहाँ न होवे ॥ ११ ॥

---

१. स्वः। नः। उप। त्वा (प० पा०)
२. यः। नः। स्वः। यः। अरणः (प० पा०)
३. समग्रः। सम्—अन्तः। भूयासम् (प० पा०)
४. शूषम्। अग्रियः। स्वः—सा (प० पा०)
५. अहः—अहः। अभि—गच्छामि (प० पा०)
६. अहः। मा। अति। अपीपरः (प० पा०)
७. द्वादश—अहः। अपि (प० पा०)

## न विभक्तिरूपरात्रिरथन्तरेषु ॥ १२ ॥

सू० अ०—विभक्ति ( प्रत्यय ) तथा रूप, रात्रि और रथन्तर ( ये पद ) बाद में होने पर ( अहः के विसर्जनीय का रेफ नहीं होता )

### निर्मलभाष्यम्

विभक्तिप्रत्यये परे रूप, रात्रि, रथन्तर च इत्येतेषु परेषु अहः इत्यस्य विसर्जनीयस्य रेफः न भवति । यथा—'अहोभिः' ( सं० १८.१.५५ ) 'अहो रात्राभ्याम्' ( सं० ६.१२८.२ ) 'अहोरात्रे' ( सं० ११.६.५ ) । रूपपरे रथन्तरपरे च अहः इत्यस्य विसर्जनीयस्य रेफनिषेधोदाहरणं शौनकशाखायाः संहितायां न प्राप्यते । शाखान्तरे भवितव्यम् ॥ १२ ॥

### शशिकला

विभक्ति प्रत्यय बाद में होने पर तथा रूप, रात्रि और रथन्तर—ये पद बाद में होने पर अहः के विसर्जनीय का रेफ नहीं होता । जैसे—'अहोभिः अहो रात्राभ्याम्[२] 'अहोरात्रे'[३] । रूप तथा रथन्तर बाद में होने पर अहः के विसर्जनीय के रेफ न होने का उदाहरण शौनकशाखा की संहिता में नहीं मिलता । दूसरी शाखाओं में होना चाहिए ॥ १२ ॥

## अधोऽम्नोभुवसाम्[१] ॥ १३ ॥

सू० अ०—अधः, अम्नः तथा भुवः के ( विसर्जनीय का रेफ नहीं होता ) ।

### निर्मलभाष्यम्

अधः अम्नः भुवः इत्यस्य विसर्जनीयस्य रेफः न भवति । यथा—'यो अस्या अधो न वेद' (सं० १.२४.१८) 'ये अम्नो जातान्' (सं० ८.६.१९) 'भुवो विवस्वान्' ( सं० १८.२.३२ ) ॥ १३ ॥

---

४. अहोभिः ( प० पा० )

५. अहः । रात्र-भ्याम् ( प० पा० )

६. अहः—रात्रे ( प० पा० )

१. (क) उधो इति पाठः ।

### शशिकला

अधः, अम्नः तथा भुवः इनका विसर्जनीय रेफ नहीं होता। जैसे—'यो अस्या अधो न वेद'[1] 'ये अम्नो जातान्'[2] 'भुवो विवस्वान्'[3] ॥ १३ ॥

[ विसर्जनीनस्य उकारभावः ]

## अकारोपधस्योकारोऽकारे ॥ १४ ॥

सू० अ०—अकार बाद में होने पर अकार उपधा वाले (विसर्जनीय) का उकार (हो जाता है)।

### निर्मलभाष्यम्

**अकारोपधस्य** अकारः एव उपधा यस्य तस्य विसर्जनीयस्य **अकारे** परे उकारः भवति। ततश्च अकारोकारयोः एकीभावे 'उवर्णं ओकारः' (३.२.२०) इत्यनेन ओकार भवति। यथा—'परोऽपेह्यसमृद्धे' (सं० ५.७.७) 'परोऽपेहि मनस्पापः' (सं० ६.४५.१)। अकारोपधस्य इति किम् ? 'तैरमित्रा' (सं० ५ २१.८) 'वायुरमित्राणाम्' (सं० ११.१०.१६) इत्यादिषु माभूत्। अकारे इति किम् ? 'न ऐतु' (सं० ६ ५३ २) 'व आकूतिः' (सं० ६.६४ ३) 'सर्वंत इन्द्रः' (सं० ६.६७.१) इत्यादिषु माभूत् ॥ १४ ॥

### शशिकला

अकार है उपधा जिसकी ऐसे विसर्जनीय का, अकार बाद में होने पर उकार हो जाता है। तत्पश्चात् अकार तथा उकार के एकीभाव में 'उवर्ण बाद में होने पर अकार का एकादेश ओकार हो जाता है' से ओकार हो जाता है। जैसे—'परोऽपेह्यसमृद्धे'[4] परोऽपेहि मनस्पापः'[5]। सूत्र में 'अकार उपधा वाले का' यह क्यों कहा गया ? 'तैरमित्रा'[6] वायुरमित्राणाम्'[7]

---

१. य । अस्याः । अधः । न । वेद (प० पा०)
२. ये । अम्नः । जातान् (प० पा०)
३. भुवः । विवस्वान् (प० पा०)
४. परः । अपेहि । असमृद्धे (प० पा०)
५. परः । अपेहि । मनस्पाप इति मनः–पापः (प० पा०)
६. तैः । अमित्राः (प० पा०)
७. वायुः । अमित्राणाम् (प० पा०)

इत्यादि में विसर्जनीय का उकार न होवे। पुनः सूत्र में 'अकार बाद में होने पर' यह क्यों कहा गया ? 'न ऐतु'[1] 'व आकूतिः'[2] 'सर्वंत इन्द्र'[3] में विसर्जनीय का उकार न होवे ॥ १४ ॥

## घोषवति च ॥ १५ ॥

सू० अ०—घोष ( व्यञ्जन ) बाद में होने पर भी (अकार उपधा वाले विसर्जनीय का उकार हो जाता है)।

### निर्मलभाष्यम्

चशब्दः अकारोपधस्य अन्वादेशकः। **घोषवति** घोषे व्यञ्जने परे अकारोपधस्य विसर्जनीयस्य उकारः भवति। ततश्च 'उवर्ण ओकारः' (३.२.२०) इत्यनेन अकारोकारयोः ओकारश्च। यथा—'ऋषयो विदुः' (सं० ४.११.९) 'ब्रह्मविदो विदुः' (सं० १०.८.४३) 'नरो वपत बीजम् (सं० १४.२.१४) ॥१५॥

### शशिकला

चशब्द अकार उपधा वाले का अन्वादेशक है। घोष व्यञ्जन बाद में होने पर अकार उपधा वाले विसर्जनीय का उकार हो जाता है। तत्पश्चात् अकार तथा उकार दोनों का एकीभाव ओकार हो जाता है। जैसे—'ऋषयो विदुः'[4] 'ब्रह्मविदो विदुः'[5] 'नरो वपत'[6] ॥ १५ ॥

[ विसर्जनीयस्य लोपविधानम् ]

## आकारोपधस्य लोपः ॥ १६ ॥

सू० अ०—(घोष बाद में होने पर) आकार उपधा वाले विसर्जनीय) का लोप हो जाता है।

---

१. नः। आ। एतु (प० पा०)
२. वः। आकूतिः (प० पा०)
३. सर्वंतः। इन्द्रः (प० पा०)
४. ऋषयः। विदुः (प० पा०)
५. ब्रह्म—विदः। विदुः (प० पा०)
६. नरः। वपत (प० पा०)

### निर्मलभाष्यम्

**आकारोपधस्य** आकारः एव उपधा यस्य तस्य विसर्जनीयस्य घोषवति परे लोपः भवति। यथा—'अनमीवा विवक्षवः' (सं० २.३०.३) 'धीरा देवेषु' (सं० ३.१७.१) 'ता जानता या भूमि. (सं० ५.१८.१२) ॥ १६ ॥

### शशिकला

घोष व्यञ्जन बाद में होने पर आकार उपधा वाले विसर्जनीय का लोप हो जाता है। जैसे—'अनमीवा विवक्षवः'[१] 'धीरा देवेषु'[२] 'ता जानता या भूमिः'[३] ॥ १६ ॥

## शेपहर्षणींवन्दनेव वृक्षम् ॥ १७ ॥

**सू० अ०**—'शेपहर्षणीम्' तथा 'वन्दनेववृक्षम्' में ( विसर्जनीय का लोप हो गया है।

### निर्मलभाष्यम्

**शेपहर्षणीम् वन्दनेव वृक्षम्** इत्यत्र शेपः वन्दनः इत्यस्य विसर्जनीयस्य लोपः जातः। यथा--'ओषधीं शेपहर्षणीम्' ( सं० ४.४.१ ) 'वन्दनेव वृक्षम्' ( सं० ७.११५.१ )। ननु 'वन्दनेव' इत्यत्र पदान्तस्य विसर्जनीयस्य लोपे सति पुनश्च सन्धिविषयकः एकारभावः कथं भवति ? यतो हि वर्णस्यादर्शनं लोपः, न तु विनाशः। उच्यते—तत्सत्यम्। लोपे सति वर्णः विद्यमानवद् भवति तत्सामान्यविधानः। प्रातिशाख्यशास्त्रं तु स्वचरणसंहितामधिकृत्य विशिष्टं विधानं करोति। यथोक्तं च—'एवमिहेति च विभाषाप्राप्तं सामान्ये' ( ११.२ )। 'वन्दनेव' इत्यत्र संहितायां सन्धिकार्यं प्राप्तं भवति। अत एव सूत्रकारेण संहितामधिकृत्य विधानः कृतः ॥ १७ ॥

### शशिकला

'शेपहर्षणीम्' तथा 'वन्दनेव वृक्षम्' इन दोनों में शेपः तथा वन्दनः के विसर्जनीय का लोप हो गया है। जैसे --'ओषधीं शेपहर्षणीम्'[४] 'वन्दनेव

---

१. अनमीवाः। विवक्षवः (प० पा०)

२. धीराः। देवेषु (प० पा०)

३. ताः। जानताः। याः। भूमिः (प० पा०)

४. ओषधीम्। शेप—हर्षणीम् (प० पा०)

वृक्षम्'[1]। शंका—'वन्दनेव वृक्षम्' में पदान्त विसर्जनीय का लोप होने पर पुनः सन्धिविषयक कार्य एकार कैसे हो जाता है क्योंकि वर्ण का अदर्शन ही लोप है, विनाश नहीं। समाधान—वर्ण का लोप होने पर भी वह वर्ण यथास्थान विद्यमान रहता है यह सामान्य नियम है किन्तु प्रातिशाख्य तो अपने चरण की संहिताओं के विषय में विशेष विधान करता है जैसा सूत्रकार ने कहा भी है—'व्याकरणशास्त्र में प्राप्त विकल्प इस चरण की संहिता में इस प्रकार है' यह प्रातिशाख्य की रचना का प्रयोजन है। वन्द-नेव' में लोप के पश्चात् भी सन्धि-विषयक कार्य प्राप्त होता है। इसीलिए सूत्रकार ने अपनी चरण की संहिता के लिए विशेष प्रकार के विधान को किया है ॥ १७ ॥

## एष स व्यञ्जने ॥ १८ ॥

सू० अ०—व्यञ्जन बाद में होने पर एषः तथा सः ( के विसर्जनीय का ) लोप हो जाता है।

### निर्मलभाष्यम्

व्यञ्जने परे एषः सः इत्यस्य विसर्जनीयस्य लोपः भवति। यथा—'एष प्रियः' (सं० २.३६.४) 'स सेनां मोहयतु' (सं० ३.१.१) ॥१८॥

### शशिकला

व्यञ्जन बाद में होने पर एषः तथा सः के विसर्जनीय का लोप हो जाता है। जैसे—'एष प्रियः'[2] 'स सेनां मोहयतु'[3] ॥ १८ ॥

## न सस्पदीष्ट[4] ॥ १९ ॥

सू० अ०—'सस्पदीष्ट' ( में सः के विसर्जनीय का लोप ) नहीं होता।

---

१. वन्दनः–इव। वृक्षम् (प० पा०)। यहाँ उल्लेखनीय है कि विश्वेश्वरानन्द वैदिक शोध-संस्थान होशियारपुर से प्रकाशित शौनकशाखा की संहिता के पदपाठ में 'वन्दनाऽइव' पाठ ग्रहण किया गया है। वहाँ पाठभेद में 'वन्दनः इव' पाठ भी निर्दिष्ट है जो प्रस्तुत विधान के अनुसार समीचीन है। सायण ने 'वन्दना-इव' पाठ को ग्रहण करके इसका अर्थ किया है अन्य संस्करणों में 'वन्दनः इव' पाठ ही उपलब्ध होता है।

२. एषः। प्रियः (प० पा०)

३. सः। सेनाम्। मोहयतु (प० पा०)

४. (क) न सस्यपदीष्य इति पाठः।

### निर्मलभाष्यम्

पूर्वस्यापवादोऽयम् । 'सस्पदीष्ट' इत्यत्र सः इत्यस्य विसर्जनीयस्य लोपः न भवति । यथा—'अधरः सस्पदीष्ट' ( सं० ७.३१.१ ) ॥ १९ ॥

### शशिकला

यह पूर्ववर्ती सूत्र का अपवाद है । 'सस्पदीष्ट' में सः के विसर्जनीय का लोप नहीं होता । जैसे—'सस्पदीष्ट'[1] ॥ १९ ॥

## दीर्घायुत्वायादिषु ॥ २० ॥

**सू० अ०**—दीर्घायुत्वाय इत्यादि में (विसर्जनीय का लोप हो जाता है)।

### निर्मलभाष्यम्

**दीर्घायुत्वायादिषु** दीर्घायुत्वाय इत्यादिषु पदेषु दीर्घायुः इत्यादीनां विसर्जनीयस्य लोपः भवति । यथा—'दीर्घायुत्वाय' ( सं० १.२२.२ ) । सूत्रे आदिषु प्रयोगेन ज्ञायते यदन्यत्रापि भवति । तद्विषये निदर्शनं द्रष्टव्यम्—'सहस्रचक्षो त्वाम्' ( सं० ४.२०.४ ) 'बर्हिषदः' ( सं० १८.१.४५,५१ ) ॥ २० ॥

॥ इति श्रीमत्पण्डितदशरथपाठकसूनुना डा० जमुनापाठकेन कृते निर्मलभाष्ये चतुरध्यायिकायाः द्वितीयाध्यायस्य द्वितीयः पादः ॥

### शशिकला

'दीर्घायुत्वाय' इत्यादि पदों में दीर्घायुः इत्यादि के विसर्जनीय का लोप हो जाता है । जैसे—'दीर्घायुत्वाय'[2] । सूत्र में प्रयुक्त आदिषु से ज्ञात होता है कि इससे अन्यत्र भी हो जाता है। इस विषय में ये उदाहरण द्रष्टव्य हैं—'सहस्रचक्षो त्वाम्'[3] 'बर्हिषदः'[4] ॥ २१ ॥

॥ चतुरध्यायिका के द्वितीय अध्याय के द्वितीय पाद की डा० जमुनापाठक कृत शशिकला व्याख्या समाप्त ॥

---

१. सः—पदीष्ट (प० पा०)
२. दीर्घायुत्वाय (प० पा०)
३. सहस्रचक्षो इति । त्वाम् (प० पा०)
४. बर्हिषदः (प० पा०)
पदपाठ से यह स्पष्ट नहीं हो पाता कि इन उदाहरणों में क्रमशः दीर्घायुः; सहस्रः तथा बर्हिः के विसर्जनीय का लोप हुआ है । इनके विसर्जनीयान्त होने का ज्ञान प्रस्तुत विधान से ही होता है ।

# अथ तृतीयः पादः

[ विसर्जनीयस्य उकारभावः ]

## दुर उकारो दाशे परस्य मूर्धन्यः ॥ १ ॥

सू० अ०—दाश बाद में होने पर दुः ( के विसर्जनीय ) का उकार हो जाता है तथा परवर्ती का मूर्धन्य हो जाता है।

### निर्मलभाष्यम्

दाशे परे सति दुरः दुः इत्यस्य विसर्जनीयस्य उकारः भवति। परस्य विसर्जनीयात्परस्य दकारस्य मूर्धन्यः डकारश्च भवति। तत्र 'समानाक्षरस्य सवर्णे दीर्घः' (३.२.१९) इत्यनेन पूर्वपरयोः उकारयोः दीर्घः ऊकारः भवति। यथा—'येना दूडाशे अस्यसि' ( सं० १.१३.१ )। दाशे इति किम् ? 'दुष्कृतम्' ( सं० ४ २५ ४ ) 'दुष्प्रतिग्रहा' ( सं० १०.१०.२८ ) इत्यत्र माभूत् ॥ १ ॥

### शशिकला

दाश बाद में होने पर दुः के विसर्जनीय का उकार हो जाता है तथा विसर्जनीय से परवर्ती दकार का मूर्धन्य डकार हो जाता है। वहाँ 'सवर्ण बाद में होने पर समानाक्षर का एकादेश दीर्घ हो जाता है' से पूर्ववर्ती तथा परवर्ती दोनों उकारों के स्थान पर एकादेश दीर्घ ऊकार हो जाता है। जैसे—'येना दूडाशे अस्यसि'[1]। 'दाश बाद में होने पर' यह क्यों कहा गया ? 'दुष्कृतम्'[2] 'दुष्प्रतिग्रहा'[3] इत्यादि में न होवे ॥ १ ॥

[ विसर्जनीयस्य तकारभावः ]

## शुनि तकारः ॥ २ ॥

सू० अ०—शुन् बाद में होने पर ( दुः के विसर्जनीय का ) तकार हो जाता है।

---

१. येन । दुः-दाशे । अस्यसि (प० पा०)

२. दुः–कृतम् (प० पा०)

३. दुः–प्रतिग्रहा (प० पा०)

## निर्मलभाष्यम्

**शुनि** परे सति दुः इत्यस्य विसर्जनीयस्य **तकारः** भवति। ततश्च 'तवर्गीयाच्छकारः शकारस्य' ( २.१.१७ ) इत्यनेन शकारस्य छकारः 'चटवर्गयोश्च' ( २.१.१४ ) इत्यनेन तकारस्य चकारः भवति। यथा—'दुच्छुनां ग्रामम्' ( सं० ५.१७४ ) 'तद्राष्ट्रं हन्ति दुच्छुना' ( सं० ५.१९.८ ) ॥ २ ॥

## शशिकला

शुन् बाद में होने पर दुः के विसर्जनीय का तकार हो जाता है। तदनन्तर 'तवर्ग के बाद में शकार का छकार हो जाता है' से शकार का छकार तथा 'चवर्ग तथा टवर्ग बाद में होने पर तकार परवर्ती के समान स्थान वाला वर्ण हो जाता है' से तकार का चकार हो जाता है। जैसे—'दुच्छुनां ग्रामम्'[1] 'तद्राष्ट्रं हन्ति दुच्छुना'[2] ॥ २ ॥

[ विसर्जनीयस्य सकारभावः ]

### समासे सकारः कपयोरनन्तःसद्यःश्रेयश्छन्दसाम् ॥३॥

**सू० अ०**—समास में ककार तथा पकार बाद में होने पर अन्तः, सद्यः, श्रेयः तथा छन्दः से अन्य (विसर्जनीय) का (सकार हो जाता है)।

## निर्मलभाष्यम्

**समासे** समस्तपदे पूर्वपदान्तस्य विसर्जनीयस्य **कपयोः** ककारे पकारे च परे सति सकारः भवति। परञ्च **अनन्तःसद्यःश्रेयश्छन्दसाम्** अन्तः सद्यः श्रेयः छन्दः इत्येतेषां विसर्जनीयस्य सकारः न भवति। यथा— अधस्पदम्' (सं० २७.२) 'नमस्कारेण' (सं० ४.३९.९) 'विश्वतस्पाणिरुत विश्वतस्पृथः' (सं० १३.२.२६)। अनन्तःसद्यःश्रेयश्छन्दसामिति किम्? 'अन्तःकोशम्' (सं० १ १४.४) अन्तःपात्रे रेरिहतीम्' (सं० ११.९.१५) 'सद्यःक्रिः' (सं०

---

१ दुच्छुनाम्। ग्रामम् (प० पा०)

२. तत्। राष्ट्रम्। हन्ति। दुच्छुना (प० पा०)

यहाँ पदपाठ से भी यह ज्ञात नहीं होता कि दुच्छुनाम् तथा दुच्छुना में दुः के विसर्जनीय का तकार हुआ है। प्रस्तुत विधान से ही ज्ञात होता है कि इनमें दुः के विसर्जनीय का तकार हुआ है। दुच्छुनाम्=दुः-शुनाम्=दुत् छुनाम्=दुच्छुनाम्। इसी प्रकार दुच्छुना=दुः-शुना=दुत्-शुना=दुच्छुना।

११.७.१०) 'श्रेयःकेतः' (सं० ५.२०.१०) 'छन्दःपक्षे' (सं० ८.९.१२) इत्यत्र माभूत्। समासे इति किम् ? 'आयुष्प्रतरणः' ( सं० ४.१०४ ) इत्यत्र माभूत् ॥३॥

### शशिकला

समस्त पद में ककार तथा पकार बाद में होने पर पूर्ववर्ती पद के अन्त वाले विसर्जनीय का सकार हो जाता है। किन्तु अन्तः, सद्यः, श्रेयः तथा छन्दः के विसर्जनीय का सकार नहीं होता। जैसे 'अधस्पदम्'[१] 'नमस्कारेण'[२] 'विश्वतस्पाणिरुत विश्वतस्पृथः'[३]। सूत्र में अन्तः, सद्यः, श्रेयः, तथा छन्दः का नहीं—यह क्यों कहा गया ? 'अन्तःकोशम्'[४] 'अन्तःपात्रे'[५] 'सद्यःक्रिः'[६] 'श्रेयः केतः'[७] 'छन्दःपक्षे'[८] यहाँ विसर्जनीय का सकार न होवे। 'समास में'—यह क्यों कहा गया ? 'आयुष्प्रतरण'[९] यहाँ न होवे ॥३॥

## निर्दुराविर्हविरसमासेऽपि ॥४॥

सू० अ०—(ककार तथा पकार बाद में होने पर) निः, दुः, आविः, तथा हविः (के विसर्जनीय का) असमास में भी (सकार हो जाता है)।

### निर्मलभाष्यम्

**असमासे** असमस्तपदे **अपि निः, दुः, आविः हविः** इत्यस्य विसर्जनीयस्य ककारे पकारे च परे सति सकारः भवति। तस्य नाम्युपधस्य सकारस्य 'अत्र नाम्युपधस्य षकारः' (२.४.१) इत्यनेन षकारश्च भवति। यथा— निष्क्रीतः' (सं० २ ३४.१) 'सर्वं निष्करत्' (सं० ५.४.१०) 'निष्क्रव्यादम्' ( सं० १२ २.१६ ) 'निष्पृथिव्याः' ( सं० १६.७.६ ) 'दुष्कृतम्' ( सं०

---

१. अधः—पदम् (प० पा०)
२. नमः—कारेण (प० पा०)
३. विश्वतः—पाणिः। उत। विश्वतः—पृथः (प० पा०)
४. अन्तः—कोशम् (प० पा०)
५ अन्तः—पात्रे (प० पा०)
६. सद्यः—क्रिः (प० पा)
७ श्रेयः—केतः (प० पा०)
८. छन्दः—पक्षे (प० पा०)
९. आयुः। प्रतरणः (प० पा०)

( ४.२५.४ ) 'दुष्प्रतिग्रहा' ( सं० १०.१०.२८ ) । असमासेऽपि इति किम् ? 'आविष्कृणुष्व' (सं० ४ २.५) । 'हविष्कृण्वन्तः' (सं० ३.१०.५) 'हविष्पुरोडाशम्' (सं० १८.४.२) अत्रापि भवति ।।४।।

### शशिकला

असमस्त पद में होने पर भी ककार तथा पकार बाद में होने पर निः, दुः, आविः तथा हविः के विसर्जनीय का सकार हो जाता है । 'नामिन् उपधा वाले सकार का षकार हो जाता है' से उस नामिन् उपधा वाले सकार का षकार हो जाता है। जैसे— निष्क्रीतः'[1] 'सर्वं निष्करत्'[2] 'निष्क्रव्यादम्'[3] 'निष्पृथिव्याः'[4] 'दुष्कृतम्'[5] 'दुष्प्रतिग्रहा'[6] । सूत्र में असमास में भी यह क्यों कहा गया ? 'आविष्कृणुष्व'[7] । 'हविष्कृण्वन्तः'[8] हविष्पुरोडाशम्'[9] यहाँ भी होवे ।।४।।

## त्रिः ॥ ५ ॥

सू० अ०—(ककार तथा पकार बाद में होने पर ) त्रिः ( के विसर्जनीय का सकार हो जाता है ) ।

### निर्मलभाष्यम्

ककारे पकारे च परे सति त्रिः इत्यस्य विसर्जनीयस्य असमासेऽपि सकारः भवति । तस्य नाम्युपधस्य सकारस्य 'अत्र नाम्युपधस्य षकारः' ( २.४.१ ) इत्यनेन षकारः भवति । यथा—'त्रिष्पूत्वा' ( सं० १४.१४१ ) । ह्विटनीमहाभागस्य व्याख्यया ज्ञायते यत् पूर्वभाष्यकारेण 'त्रिष्प्रकारेण' इत्यपि निदर्शनं दत्तम् । यत्संहितायां न प्राप्यते ।। ५ ।।

---

१. निः—क्रीतः (प० पा०)
२. सर्वम् । निः—करत् (प० पा०)
३. निः—क्रव्यादम् (प० पा०)
४. निः—पृथिव्याः (प० पा०)
५ दु.— कृतम् (प० पा०)
६. दुः—प्रतिग्रहा (प० पा०)
७. आविः । कृणुष्व (प० पा०)
८. हविः । कृण्वन्तः (प० पा०)
९. हविः । पुरोडाशम् (प० पा०)

### शशिकला

ककार तथा पकार बाद में होने पर असमस्त पद में भी त्रिः के विसर्जनीय का सकार हो जाता है। 'नामिन् उपधा वाले सकार का षकार हो जाता है' से उस नामिन् उपधा वाले सकार का षकार हो जाता है। जैसे—'त्रिष्पूत्वा'[1]। ह्विटनी की व्याख्या से ज्ञात होता है कि पूर्व-भाष्यकार ने 'त्रिष्प्रकारेण' यह भी उदाहरण दिया है जो संहिता में नहीं मिलता ॥ ५ ॥

## कुरुकरंकरत्कृणोतुकृतिकृधिष्वकर्णयोः ॥ ६ ॥

**सू० अ०**—कुरु, करम्, करत्, कृणोतु, कृति तथा कृधि बाद में होने पर कर्णयोः से अन्य ( विसर्जनीय ) का ( सकार हो जाता है )।

### निर्मलभाष्यम्

कुरु, करम्, करत्, कृणोतु, कृति, कृधि इत्येतेषु परेषु विसर्जनीयस्य सकारः भवति। परञ्च कर्णयोः इत्यस्य विसर्जनीयस्य सकारः न भवति। 'अत्र नाम्युपधस्य षकारः (२.४.१) इत्यनेन नाम्युपधस्य सकारस्य षकारश्च भवति। यथा—'पितृभ्यश्च नमस्कुरु' ( सं० १४.२.२० ) 'सुबद्धामुतस्करम्' ( सं० १४.१.१८ ) 'संमनस्करत्' ( सं० ७.९४.१ ) 'जङ्गिडस्करत्' ( सं० १९.३४.२-१० ) 'निष्करत्' (सं० २.९.५) 'दीर्घमायुष्कृणोतु' (सं० ६.७८.३) 'अग्निष्कृणोतु' (सं० ३.१०६.३) 'मणिष्कृणोतु' (सं० १०.६.३१) 'निष्कृतिः' ( सं० ५.५.४ ) 'पुरस्कृधि' ( सं० ६.४०.३ ) 'निष्कृधि' ( सं० ५.५.४ )। अकर्णयोः इति किम्? 'कर्णयोः कृधि' (सं० ६.१४१.२) इत्यत्र माभूत् ॥६॥

### शशिकला

कुरु, करम्, करत्, कृणोतु, कृति तथा कृधि बाद में होने पर विसर्जनीय का सकार हो जाता है किन्तु कणयोः के विसर्जनीय का सकार नहीं होता। 'नामिन् उपधा वाले सकार का षकार हो जाता है' से नामिन् उपधा वाले सकार का षकार हो जाता है। जैसे—'पितृभ्यः नमस्कुरु'[2]

---

१. त्रिः। पूत्वा ( प० पा० )
२. पितृ-भ्यः। नमः-कुरु ( प० पा० )

'सुबद्धामुतस्करम्'[१] 'संमनस्करत्'[२] 'जङ्गिडस्करत्'[३] 'निष्करत्'[४] 'दीर्घ-मायुष्कृणोतु'[५] 'अग्निष्कृणोतु'[६] 'मणिष्कृणोतु'[७] 'निष्कृतिः'[८] 'पुरस्कृधि'[९] 'निष्कृधि'[१०]। सूत्र में 'कर्णयोः का नहीं' यह क्यों कहा गया ? 'कर्णयोः कृधि'[११] यहाँ न होवे ॥ ६ ॥

## ततस्परौ ब्रह्मपरे ॥ ७ ॥

सू० अ०—ब्रह्म बाद में है जिसके ऐसा परि बाद में होने पर ततः ( के विसर्जनीय का सकार हो जाता है )।

### निर्मलभाष्यम्

ब्रह्मपरे ब्रह्म इत्ययं परे यस्य तस्मिन् परौ परिपरे सति ततः इत्यस्य विसर्जनीयस्य सकारः भवति । यथा—'ततस्परि ब्रह्मणाः' ( सं० १.१०.१ )। ब्रह्मपरे इति किम् ? 'ततः परि प्रजातेन' (सं० ६.८९ १) इत्यत्र माभूत् ॥७॥

### शशिकला

ब्रह्म बाद में है जिसके ऐसा परि बाद में होने पर ततः के विसर्जनीय का सकार हो जाता है। जैसे—'ततस्परि ब्रह्मणा'[१२]। सूत्र में 'ब्रह्म बाद में है जिसके'—ऐसा क्यों कहा गया ? ततः परि प्रजातेन'[१३] यहाँ सकार न होवे ॥ ७ ॥

---

१. सु—बद्धाम् । उतः-करम् ( प० पा० )
२. सम्—मनसः । करत् ( प० पा० )
३. जङ्गिडः । करत् ( प० पा० )
४. निः—करत् ( प० पा० )
५. दीर्घम् । आयुः । कृणोतु (प० पा०)
६ अग्निः । कृणोतु (प० पा०)
७. मणिः । कृणोतु (प० पा०)
८. निः—कृतिः (प० पा०)
९. पुरः—कृधि (प० पा०)
१०. निः—कृधि ( प० पा० )
११. कर्णयोः । कृधि ( प० पा० )
१२. ततः । परि । ब्रह्मणाः ( प० पा० )
१३. ततः । परि । प्र—जातेन (प० पा०)

## पञ्चम्याश्चाङ्गेभ्यः पर्यादिवर्जम् ॥ ८ ॥

सू० अ०–'अङ्गेभ्यः परि' इत्यादि को छोड़कर अन्यत्र (परि बाद में होने पर पञ्चमी विभक्ति ( के विसर्जनीय का सकार हो जाता है )।

### निर्मलभाष्यम्

चशब्दोऽत्र परौ इस्यस्यान्वादेशकः। **'अङ्गेभ्यः परि' आदिवर्जम्** इत्यतः अन्यत्र परिपरे सति **पञ्चम्याः** पञ्चमीविभक्तेः विसर्जनीयस्य सकारः भवति। यथा—'कुष्ठो हिमवतस्परि' (सं० १९.३९.१) 'जातं हिमवतस्परि' ( ४.९.९, ५.४.२ ) 'विद्युतो ज्योतिषस्परि' ( ४ १०.१ ) 'रक्षसस्परि' ( सं० ६ १११.३ ) 'तमसस्परि' (सं० ७.५३.७)। अङ्गेभ्यः पर्यादि वर्जमितिकिम् ? 'प्राणमङ्गेभ्यः पर्याचरन्तम्' (सं० २.३४ ५) इत्यत्र माभूत्। अङ्गेभ्यः पर्यादि-वर्जमित्यनेन ज्ञायते यदन्यत्रापि विसर्जनीयस्य सकारः न भवति। तद्विषये निदर्शनं द्रष्टव्यम्—'बन्धेभ्यः परि' (सं० १९.४५.५) 'देवेभ्यः परि' ( सं० ७. ३८.२ ) 'आशाभ्यः परि' ( सं० २०.२० ७ ) ॥ ८ ॥

### शशिकला

चशब्द यहाँ 'परि बाद में होने पर' का अन्वादेशक है। 'अङ्गेभ्यः परि' इत्यादि को छोड़कर अन्यत्र पञ्चमी विभक्ति के विसर्जनीय का सकार हो जाता है। जैसे—'कुष्ठो हिमवतस्परि'[1] 'जातं हिमवतस्परि[2] 'विद्युतो ज्योतिषस्परि'[3] रक्षसस्परि'[4] 'तमसस्परि'। सूत्र में 'अङ्गेभ्यः परि' इत्यादि को छोड़कर यह क्यों कहा गया ? 'प्राणमङ्गेभ्यः परि'[5]। आदि शब्द से ज्ञात होता है कि इससे अन्यत्र भी नहीं होता है। इस विषय में ये उदाहरण द्रष्टव्य हैं—'बन्धेभ्यः परि'[6] 'देवेभ्यः परि'[7] 'आशाभ्यः परि'[8] ॥ ८ ॥

---

१. कुष्ठः। हिमवतः। परि (प० पा०)
२. जातम्। हिमवतः। परि ( प० पा० )
३. विद्युतः। ज्योतिषः। परि (प० पा०)
४. रक्षसः। परि ( प० पा० )
५. प्राणम्। अङ्गेभ्यः। परि ( प० पा० )
६. बन्धेभ्यः। परि ( प० पा० )
७. देवेभ्यः। परि ( प० पा० )
८. आशाभ्यः। परि ( प० पा० )

## दिवस्पृथिव्यां सचतिवर्जम् ॥ ९ ॥

**सू० अ०**—पृथिवि बाद में होने पर दिवः ( के विसर्जनीय का सकार हो जाता है ) यदि ( पृथिवि से ) बाद में सच् ( धातु से निष्पन्न पद ) न हो ॥ ९ ॥

### निर्मलभाष्यम्

**पृथिव्यां** परे **दिवः** इत्यस्य विसर्जनीयस्य सकारः भवति चेत् पृथिव्याः परे सच् धातोः निष्पन्नः पदः न विद्यमानः भवति । यथा—'दिवस्पृथिव्या अन्तरिक्षात्' ( सं० ९ १ १ ) दिवस्पृथिवीम्' ( सं० ४.२७.४ ) 'दिवस्पृथिव्याः सम्भूताः' ( सं० ६ १०० ३ ) 'दिवस्पृथिव्याः पर्योजः' ( सं० ६.१२५.२ ) 'दिवस्पृथिव्याः पर्यन्तरिक्षात्' (सं० १९ ३ १) । सचतिवर्जमिति किम् ? 'दिवः पृथिव्यां सचन्ते' ( सं० १२.३.२६ ) इत्यत्र माभूत् ॥ ९ ॥

### शशिकला

पृथिवी बाद में होने पर दिवः के विसर्जनीय का सकार हो जाता है। यदि पृथिवि से बाद में सच् धातु वाला पद न हो। जैसे—'दिवस्पृथिव्या अन्तरिक्षात्'[१] 'दिवस्पृथिवीम्'[२] 'दिवस्पृथिव्याः सम्भूता'[३] 'दिवस्पृथिव्याः पर्योजः'[४] 'दिवस्पृथिव्याः पर्यन्तरिक्षात्'[५] । 'सच् धातु वाला पद बाद में न होने पर'—यह क्यों कहा ? 'दिवः पृथिव्यां सचन्ते'[६] यहाँ पृथिवी से बाद में सच् धातु वाला पद 'सचन्ते होने से विसर्जनीय का सकार न होवे ॥ ९ ॥

## पृष्ठे च ॥ १० ॥

**सू० अ०**—पृष्ठ बाद में होने पर भी ( दिव के विसर्जनीय का सकार हो जाता है )।

---

१. दिवः—पृथिव्याः । अन्तरिक्षात् ( प० पा० )
२. दिवः—पृथिवीम् ( प० पा० )(प० पा० )
३. दिवः—पृथिव्याः । सम्–भूताः (प० पा०)
४. दिवः—पृथिव्याः । परि । ओजः (प० पा०)
५. दिवः—पृथिव्याः । परि । अन्तरिक्षात् (प० पा०)
६. दिवः—पृथिव्याः । सचन्ते ( प० पा० )

### निर्मलभाष्यम्

चशब्दोत्र दिवः इत्यस्यान्वादेशकः । **पृष्ठे** परे सति दिवः इत्यस्य विसर्जनीयस्य सकारः भवति । यथा—'दिवस्पृष्ठे' ( सं० १३.२.३७ ) 'दिवस्पृष्ठम्' ( सं० ४.१४ २ ) 'दिवस्पृष्ठात्' ( सं० ११ ५.१० ) 'दिवस्पृष्ठानि' ( सं० १२ २१.२ ) ॥ १२ ॥

### शशिकला

सूत्र में प्रयुक्त चशब्द 'दिवः' का अन्वादेशक है । पृष्ठ बाद में होने पर भी दिवः के विसर्जनीय का सकार हो जाता है । जैसे—'दिवस्पृष्ठे'[1] 'दिवस्पृष्ठम्'[2] 'दिवस्पृष्ठात्'[3] 'दिवस्पृष्ठानि'[4] ॥ १० ॥

## यः पतौ गवामस्याःपरवर्जम् ॥ ११ ॥

**सू० अ०**—गवाम् तथा अस्याः से बाद में न होने पर यः (के विसर्जनीय ) का सकार हो जाता है. ( यदि यः से ) बाद में पति हो ।

### निर्मलभाष्यम्

**पतौ** परे सति **यः** इत्यस्य विसर्जनीयस्य सकारः भवति यदि यः इत्ययं **गवाम् अस्याः** इत्येतेभ्यां पदाभ्यां परः न भवति । यथा—'दिव्यो गन्धर्वो भुवनस्य यस्पतिः' ( सं० २.२.१ ) 'धाता विधाता भुवनस्य यस्पतिः' ( सं० ५ ३.९ ) 'भविष्यद् भुवनस्य यस्पतिः' ( सं० १३.३.७ ) 'यान्ति चकार भुवनस्य यस्पतिः' ( सं० १९ २० २ ) । गवामस्याःपरवर्जमिति किम् ? 'गवां यः पतिः' (सं० ९.४.१७) 'दीर्घायुरस्या यः पतिः' ( सं० १४. २.२ ) इत्यत्र माभूत् ॥ ११ ॥

### शशिकला

पति बाद में होने पर यः के विसर्जनीय का सकार हो जाता हैं यदि यः पद गवाम् तथा अस्याः से बाद में न हो । जैसे—'दिव्यो गन्धर्वो भुवनस्य यस्पतिः'[5] 'धाता विधाता भुवनस्य यस्पतिः'[6] 'भविष्यद् भुवनस्य

१. दिवः—पृष्ठे ( प० पा० )
२. दिवः—पृष्ठम् (प० पा० )
३. दिवः—पृष्ठात् ( प० पा० )
४. दिवः—पृष्ठानि (प० पा०)
५. दिव्यः—गन्धर्वः । भुवनस्य । यः । पतिः (प० पा०)
६. धाता । विधाता । भुवनस्य । यः । पतिः (प० पा०)

यस्पतिः'[७] 'यान्ति चकार भुवनस्य यस्पतिः'[८]। गवाम् तथा अस्याः से बाद में न होने पर—यह क्यों कहा गया ? 'गवां यः पति'[९] 'दीर्घायुरस्या यः पतिः'[१०] यहाँ न होवे ॥ ११ ॥

## षष्ठयाश्चाशच्याः ॥ १२ ॥

सू० अ०—(पति बाद में होने पर) शच्याः से अन्य षष्ठी (विभक्ति) के विसर्जनीय ) का भी (सकार हो जाता है) ।

### निर्मलभाष्यम्

**च**शब्दोऽत्र पतौ इत्यस्यान्वादेशकः । पतौ परे सत्यपि **षष्ठ्याः** षष्ठीविभक्तेः विसर्जनीयस्य सकारः भवति । परञ्च पतौ परेऽपि **अशच्याः** शच्याः इत्यस्य षष्ठीविभक्तेः विसर्जनीयस्य सकारः न भवति । यथा—'वाचस्पतिः' (सं० १.१.१) 'उषस्पतिना' (सं० १६.६.६) 'ब्रह्मणस्पतिः' (सं० ६.४.१) 'जगतस्पतिः' (सं० १३.७.४७) । अशच्याः इति किम् ? 'अरात्याः शच्याः पतिः' (सं० १३ ७.४७) इत्यत्र माभूत् ॥१२॥

### शशिकला

चशब्द यहाँ 'पति बाद में होने पर' का अन्वादेशक है । पति बाद में होने पर षष्ठी विभक्ति के विसर्जनीय का सकार हो जाता है किन्तु पति बाद में होने पर भी शच्याः के षष्ठी विभक्ति के विसर्जनीय का सकार नहीं होता । जैसे—'वाचस्पतिः'[१] 'उषस्पतिना'[२] 'ब्रह्मणस्पतिः'[३] जगतस्पतिः'[४] । सूत्र में 'शच्याः का नहीं'—यह क्यों कहा गया ? 'अरात्याः शच्याः पतिः'[५]—यहाँ न होवे ॥१२॥

---

७. भविष्यत् । भुवनस्य । यः । पतिः ( प० पा० )
८. यान्ति । चकार । भुवनस्य । यः । पतिः ( प० पा० )
९. गवाम् । यः । पतिः (प० पा०)
१०. दीर्घायुः । अस्यः: । यः । पतिः ( प० पा०)
१. वाचः· पतिः (प० पा०)
२. उषः—पतिः (प० पा०)
३. ब्रह्मणः—पतिः (प० पा०)
४. जगतः—पतिः (प० पा०)
५. अरात्याः । शच्याः । पतिः (प० पा०)

## इडायास्पदे ॥ १३ ॥

सू० अ०—पद बाद में होने पर इड सम्बन्धी ( विसर्जनीय का सकार हो जाता है।

### निर्मलभाष्यम्

पदे इत्येतस्मिन्परे इडायाः इडसम्बन्धिनः विसर्जनीयस्य सकारः भवति। यथा—'इडायास्पदम्' (सं० ३.१०.६) 'इडस्पदे' (सं० ६ ६३.४)। इडायाः इति किम्? 'हस्तिन्याः पदेन' (सं० ६.७०.२०) इत्यत्र माभूत् ॥१३॥

### शशिकला

पद बाद में होने पर इडसम्बन्धी विसर्जनीय का सकार हो जाता है। जैसे—'इडायास्पदम्'[1] 'इडस्पदे'[2]। इडसम्बन्धी यह क्यों कहा गया? 'हस्तिन्याः पदेन'[3] यहाँ न होवे ॥१३॥

## पितुः पितरि ॥ १४ ॥

सू० अ० 'पितृ' का रूप बाद में होने पर पितुः (के विसर्जनीय का सकार हो जाता है)।

### निर्मलभाष्यम्

पितरि परे पितुः इत्यस्य विसर्जनीयस्य सकारः भवति। 'अत्र नाम्युपधस्य षकारः' (२.४.१) इत्यनेन सकारस्य षकारः भवति। यथा—'पितुष्पितासत्' (सं० २.१२, ९.९.१५)' पितुष्पितरो ये' (सं० १८.२.४९) ॥१४॥

### शशिकला

पितृ शब्द का रूप बाद में होने पर पितुः के विसर्जनीय का सकार हो जाता है। पुनः 'नामिन् उपधा वाले सकार का षकार हो जाता है' से उस सकार का षकार हो जाता है। जैसे—'पितुष्पितासत्'[4] 'पितुष्पितरो ये'[5] ॥१४॥

---

१. इडायाः। पदम् (प० पा०)
२. इडः। पदे (प० पा०)
३. हस्तिन्याः। पदे (प० पा०)
४. पितुः। पिता। आसत् (प० पा०)
५. पितुः। पितरः। ये (प० पा०)

## द्यौश्च ॥१५॥

**सू० अ०**—( पितृ का रूप बाद में होने पर ) **द्यौः** (के विसर्जनीय का) भी (सकार हो जाता है)।

### निर्मलभाष्यम्

चशब्दोऽत्र पितरि इत्यस्यान्वादेशकः। पितरि परे सति **द्यौः** इत्यस्य विसर्जनीयस्य च सकारः भवति। पुनश्च 'अत्र नाम्युपधस्य षकारः' (२.४.१) इत्यनेन सकारस्य षकारः भवति। यथा—'द्यौष्पितर्यावयः' (सं० ६.४.३) 'द्यौष्पिता पृथिवी माता' (सं० ३.९.१)[1] ॥१५॥

### शशिकला

सूत्र में प्रयुक्त चशब्द यहाँ 'पितृ का रूप बाद में होने पर' का अन्वादेशक है। पितृ का रूप बाद में होने पर द्यौः के विसर्जनीय का भी सकार हो जाता है। पुनः 'नामिन् उपधा वाले सकार का षकार हो जाता है' से उस सकार का षकार हो जाता है। जैसे—'द्यौष्पितर्यावयः'[2] 'द्यौष्पिता पृथिवी माता'[3] ॥१५॥

## आयुः प्रथमे ॥ १६ ॥

**सू० अ०**—प्रथम बाद में होने पर आयुः (के विसर्जनीय का सकार हो जाता है)।

### निर्मलभाष्यम्

**प्रथमे** परे आयुः इत्यस्य विसर्जनीयस्य सकारः भवति। पुनश्च 'अत्र नाम्युपधस्य षकारः' (२.४.१) इत्यनेन सकारस्य षकारश्च। यथा—'आयुष्प्रथमम्' (सं० ४.३९.२)[4] ॥१६॥

### शशिकला

प्रथम बाद में होने पर आयुः के विसर्जनीय का सकार हो जाता है। पुनः 'नामिन् उपधा वाले सकार का षकार हो जाता है' से सकार का षकार हो जाता है। जैसे— आयुष्प्रथमम्'[5] ॥१६॥

---

१. सं० ३.२३.६,८.७.२
२. द्यौः। पितः। यवय (प० पा०)
३. द्यौः। पिता। पृथिवी। माता (प० पा०)
४. सं० ४.३९.४,६.८
५. आयुः। प्रथमम् (प० पा०)

## प्रे मुषि जीवपरे ॥ १७ ॥

सू० अ० मुष् तथा जीव है बाद में जिसके ऐसा प्र बाद में होने पर आयुः (के त्रिसर्जनीय) का (सकार हो जाता है)।

### निर्मलभाष्यम्

प्र परे आयुः इत्यस्य विसर्जनीयस्य सकारः भवति चेत् प्र इत्यस्मात्परः मुष् जीव च स्यात्। 'अत्र नाम्युपधस्य षकारः (२,४.१) इत्यनेन सकारस्य षकारश्च। यथा—'आयुष्प्रमोषीः' (सं० ८.२ १७) 'दीर्घमायुष्प्रजीवसे' (सं० १८.२.३)। मुषि जीवपरे इति किम् ? 'जीवनमायुः प्र तिर' (सं० १२.२ ४५) 'आयुः प्रतरं ते' (सं० ८.२ २) 'आयुः प्र वर्धामहे' (सं० १९.३२.३) इत्यत्र माभूत् ॥१७॥

### शशिकला

प्र बाद में होने पर आयुः के विसर्जनीय का सकार हो जाता है, यदि प्र से बाद में मुष् तथा जीव हो। 'नामिन् उपधा वाले सकार का षकार हो जाता है' से सकार का षकार हो जाता है। जैसे 'आयुष्प्रमोषीः'[1] 'दीर्घमायुष्प्र जीवसे'[2]। 'मुष् तथा जीव बाद में होने पर' यह क्यों कहा गया ? 'जीवनमायुः प्र तिर'[3] 'आयुः प्रतरं ते'[4] 'आयुः प्र वर्धामहे'[5] यहाँ न होवे ॥१७॥

## परिधिः पतातौ ॥ १८ ॥

सू० अ०—पताति बाद में होने पर परिधिः (के विसर्जनीय का सकार हो जाता है)।

### निर्मलभाष्यम्

**पतातौ** पताति इत्यस्मिन्परे सति **परिधिः** इत्यस्य विसर्जनीयस्य सकारः भवति। 'अत्र नाम्युपधस्य षकारः' (२.४.१) इत्यनेन सकारस्य षकारश्च भवति। यथा—'परिधिष्पताति' (सं० ५.२९.२,३) ॥१८॥

---

१. आयुः। प्र। मोषीः (प० पा०)
२. आयुः। प्र। जीवसे (प० पा०)
३. जीवनम्। आयुः। प्र। तिर (प० पा०)
४. आयुः। प्र-तरम्। ते (प० पा०)
५. आयुः। प्र। वर्धामहे (प० पा०)

**शशिकला**

पताति बाद में होने पर परिधिः के विसर्जनीय का सकार हो जाता है। 'नामिन् उपधा वाले सकार का षकार हो जाता है' से सकार का षकार हो जाता है। जैसे—'परिधिष्पताति'[1] ॥१८॥

## निवतस्पृणातौ ॥ १९ ॥

**सू० अ०**—पृणाति बाद में होने पर निवतः (के विसर्जनीय का सकार हो जाता है)।

**निर्मलभाष्यम्**

**पृणातौ** पृणाति इत्यस्मिन् परे **निवतः** इत्यस्य विसर्जनीयस्य सकारः भवति। यथा—'निवतस्पृणाति' (सं० ६.२२.३) ॥१९॥

**शशिकला**

पृणाति बाद में होने पर निवतः के विसर्जनीय का सकार हो जाता है। जैसे—'निवतस्पृणाति'[2] ॥१९॥

## मनस्पापे ॥ २० ॥

**सू० अ०**—पाप बाद में होने पर मनः (के विसर्जनीय का सकार हो जाता है।

**निर्मलभाष्यम्**

**पापे** इति परे सति **मनः** इत्यस्य विसर्जनीयस्य सकारः भवति। यथा—'मनस्पापे' (सं० ६.४५.१) ॥२०॥

**शशिकला**

'पाप' बाद में होने पर मनः के विसर्जनीय का सकार हो जाता है। जैसे—'मनस्पापे'[3] ॥२०॥

## रायस्पोषादिषु च ॥ २१ ॥

**सू० अ०**—'रायस्पोष' इत्यादि में भी (विसर्जनीय का सकार हो गया है)।

---

१. परिधिः। पताति (प० पा०)
२. निवतः। पृणाति (प० पा०)
३. मनः। पापे (प० पा०)

## निर्मलभाष्यम्

रायस्पोषादिषु रायस्पोष इत्यादिषु विसर्जनीयस्य सकारः जातः। यथा—'रायस्पोषम्' (सं० १.९४)। आदिषु इत्यनेन ज्ञायते यदन्यत्रापि भवति। तद्विषये निदर्शनानि द्रष्टव्यानि 'तिरस्करः' (सं० ४.२०.७) 'दिवस्पुत्रौ' (सं० ८.७.२०) 'दिवस्पथः' 'इडस्पदे' (सं० ६.६३.४) 'अधमस्पदीष्ट' (सं० ८.४.१६) द्विषतस्पादयामि' (सं० ११.११२,२१) 'आपस्पुत्रासः' (सं० १२.३.४) 'महस्पुत्रासः' (सं० १८.१.२) 'रजस्पृथुः' (सं० १३.२ २२) 'शिरस्कृतम्' (सं० १३.७.४०) ॥२१॥

॥ इति श्रीमत्पण्डितदशरथपाठकसूनुना डा० जमुनापाठकेन कृते निर्मलभाष्ये चतुरध्यायिकायाः द्वितीयाध्यायस्य तृतीयः पादः ॥

## शशिकला

'रायस्पोषः' इत्यादि में विसर्जनीय का सकार हो गया है। जैसे—'रायस्पोषम्'[1]। सूत्र में प्रयुक्त 'आदि में' से ज्ञात होता है कि इससे अन्यत्र भी होता है। इस विषय में ये उदाहरण द्रष्टव्य हैं 'तिरस्करः'[2] 'दिवस्पुत्रौ'[3] 'दिवस्पथः'[4] 'इडस्पदे'[5] 'अधमस्पदीष्ट'[6] द्विषतस्पादयामि'[7] 'आपस्पुत्रासः'[8] 'महस्पुत्रासः'[9] 'रजस्पृथुः'[10] 'शिरस्कृतम्'[11] ॥२१॥

॥ चतुरध्यायिका के द्वितीय अध्याय के तृतीय पाद की शशिकला व्याख्या समाप्त ॥

---

१. रायः—पोषम् (प० पा९)
२. तिरः—करः (प० पा०)
३. दिवः—पुत्रौ (प० पा०)
४. दिवः—पथः (प० पा०)
५. इडः—पदे (प० पा०)
६. अधमः—पदीष्ट (प० पा०)
७. द्विषतः—पादयामि (प० पा०)
८. आपः—पुत्रासः (प० पा०)
९. महः—पुत्रासः (प० पा०)
१०. रजः—पृथुः (प० पा०)
११. शिरः—कृतम् (प० पा०)

# अथ चतुर्थः पादः

[ सकारस्य षकारभावः ]

## अत्र नाम्युपधस्य षकारः ॥ १ ॥

**सू० अ०**—इन (विधानों) में नामिन् उपधा वाले सकार का षकार (हो जाता है)।

### निर्मलभाष्यम् :

'समासे सकारः कपयोरनन्तःसद्यःश्रेयश्छन्दसाम्' (२.३.३) इत्यतः प्रभृति 'रायस्पोषादिषु' ( २.३.२१ ) पर्यन्तं विसर्जनीयस्य सकारः विहितः। **अत्र** अस्मिन् स्थले **नाम्युपधस्य** नामिन् एव उपधा यस्य तस्य सकारस्य षकारः भवति। निदर्शनन्तु पूर्वोक्तमेव ॥१॥

### शशिकला

'समास में ककार तथा पकार बाद में होने पर अन्तः, सद्यः श्रेयः तथा छन्दः से अन्य विसर्जनीय का सकार हो जाता है' इस विधान से लेकर 'रायस्पोष इत्यादि में विसर्जनीय का सकार हो गया है' इस विधान तक विसर्जनीय के सकार होने का विधान किया गया है। उन विधानों में प्राप्त नामिन् उपधा वाले सकार का षकार हो जाता है। उदाहरण तो उन स्थलों पर दिए ही जा चुके हैं ॥१॥

## सहेः साड्भूतस्य[1] ॥ २ ॥

**सू० अ०**—साट् विकार को प्राप्त सह् (धातु के सकार) का (षकार हो जाता है)।

### निर्मलभाष्यम्

**साड्भूतस्य** साडादेशप्राप्तस्य, **सहेः** सह् धातोः सकारस्य षकारः भवति। यथा—'इन्द्रस्तुराषाट्' ( सं० २.५.३ ) 'अग्ने पृतनाषाट्' ( सं० ५.१४.८) 'शत्रूषाण्नीषाट्' (सं० ५.२०.११) 'अभीषाड् अस्मि विश्वाषाट्'

१. (क) 'साड्रूपस्य' इति पाठः।

( सं० १२.१.५४ ) साङ्भूतस्येति किम् ? 'सात्रासाहस्य' ( सं० ५.१३ ६ ) 'अमित्रसाहः' ( सं० १ २०.४ ) 'अभिराष्ट्रो विषासहिः' ( सं० १.२९ ६ ) इत्यत्र माभूत ।। २ ।।

**शशिकला**

साट् आदेश को प्राप्त हुए सह् धातु के सकार का षकार हो जाता है। जैसे—'इन्द्रस्तुराषाद्'[1] अग्ने पृतनाषाट्'[2] 'शत्रूषाण्नीषाट्'[3] 'अभीषाड् अस्मि विश्वाषाट्'[4]। सूत्र में 'साट् विकार को प्राप्त हुए का' यह क्यों कहा गया ? 'सात्रासाहस्य'[5] 'अमित्रसाहः'[6] 'अभिराष्ट्रो विषासहिः'[7] यहाँ न होवे ।। २ ।।

## तद्धिते तकारादौ ॥ ३ ॥

**सू० अ०**—तकार है आदि में जिसके ऐसा तद्धित बाद में होने पर (सकार का षकार हो जाता है)।

**निर्मलभाष्यम्**

**तकारादौ** तकारः आदौ यस्य तस्मिन् **तद्धिते** परे सकारस्य षकारः भवति। यथा—'वपुष्टमे' (सं० ५.५.६)। अत्र वपुः इत्यस्य विसर्जनीयस्य तकारे परे 'विसर्जनीयस्य परसस्थानोऽघोषे' (२.२ १) इत्यनेन सकारः ततश्च प्रस्तुतविधानेन सकारस्य षकारः भवति। 'षकारान्नानापदेऽपि' (२.१.१६) इत्यनेन तकारस्य टकारश्च। तद्धिते इति किम् ? अग्निस्तक्मानम्' (सं० ५ २२.१) इत्यत्र माभूत् ।।३।।

**शशिकला**

तकार है आदि में जिसके ऐसा तद्धित बाद में होने पर सकार का षकार हो जाता है। जैसे—'वपुष्टमे'[8]। यहाँ 'अघोष बाद में होने पर

---

१. इन्द्रः। तुराषाट् (प० पा०)
२. अग्ने। पृतनाषाट् (प० पा०)
३. शत्रूषाट्। नीषाट् (प० पा०)
४. अभीषाट्। अस्मि। नीषाट् (प० पा०)
५. सात्रा—सहस्य (प० पा०)
६. अमित्र सहः (प० पा०)
७. अभिराष्ट्रः। वि—ससहिः (प० पा०)
८ वपुः—तमे ( प० पा०)

विसर्जनीय परवर्ती (वर्ण) के समान स्थान वाला वर्ण हो जाता है' से तकार बाद में होने पर विसर्जनीय का सकार हो जाता है पुनः प्रस्तुत विधान से सकार का षकार हो जाता है तथा 'षकार बाद में होने पर अलग पद में भी षकार से बाद में तवर्ग का पूर्वसस्थानीय वर्ण हो जाता है' से टकार का पूर्वसस्थानीय टकार हो जाता है। सूत्र में तद्धित बाद में होने पर यह क्यों कहा गया ? 'अग्निस्तक्मानम्'[1] यहाँ न होवे ॥३॥

## युष्मदादेशे तैस्त्वमादिवर्जम् ॥४॥

सू० अ०—'तैस्त्वम्' इत्यादि को छोड़कर अन्यत्र युष्मत् का (तकार आदि में है जिसके ऐसा) रूप बाद में होने पर (सकार का षकार हो जाता है)।

### निर्मलभाष्यम्

तकारः आदौ यस्य तस्मिन् **युष्मदादेशे** मध्यमपुरुषवाचके युष्मत्पद-विभक्तिरूपे परे सकारस्य षकारः भवति। परञ्च **तैस्त्वमादिवर्जम्** 'तैस्त्वम' इत्यादिषु सकारस्य षकारः न भवति। यथा—'वहिष्टे अस्तु' (सं० १.३ १) 'ऋतुभिष्ट्वा' (सं० १ ३५.४) 'द्यौष्ट्वा पिता' (सं० २.२८.४) 'ताभिष्ट्वमस्मान्' (सं० ९.२.२५) 'तैष्टे रोहितः' (सं० १३.१ ३५)। 'अत्र 'विसर्जनीयस्य परसस्थानोऽघोषे' (२.१.१) इत्यनेन विसर्जनीयस्य सकारः ततश्च प्रस्तुतविधानेन सकारस्य षकारः भवति। 'षकारान्नानापदेऽपि (२ १.१६) इत्यनेन परतकारस्य टकारश्च भवति। 'तैस्त्वमादिवर्जम्' इति किम् ?' तैस्त्वं पुत्रम्' (सं० ३.२३ ४) इत्यत्र माभूत्। आदिवर्जम् इत्यनेन ज्ञायते यदन्यत्रापि न भवति। तद्विषये इमानि निदर्शनानि द्रष्टव्यानि 'वध्रिस्त्वम्' (सं० ४.६ ८) 'पवस्तैस्त्वा' (सं० ४.७ ६) ॥४॥

### शशिकला

तकार है आदि में जिसके ऐसे मध्यम पुरुषवाचक 'युष्मत्' के विभक्तिरूप के बाद में होने पर सकार का षकार हो जाता है। किन्तु 'तैस्त्वम्' इत्यादि में सकार का षकार नहीं होता। जैसे—'बहिष्टे अस्तु'[2]

---

१. अग्निः। तक्मानम् (प० पा०)

२. बर्हिः। ते। अस्तु (प० पा०)

'ऋतुभिष्ट्वा'[१] 'द्यौष्ट्वा पिता'[२] 'ताभिष्ट्वमस्मान्'[३] 'तैष्टे रोहितः'[४]। यहाँ 'अघोष वर्ण बाद में होने पर विसर्जनीय का परसस्थानीय वर्ण हो जाता है' से विसर्जनीय का सकार होता है पुनः प्रस्तुत विधान से सकार का षकार हो जाता है। 'अलग पद में भी षकार से बाद में होने पर तवर्ग का पूर्वसस्थानीय वर्ण हो जाता है' से तकार का टकार हो जाता है। 'तैस्त्वमादि को छोड़कर' यह क्यों कहा गया ? 'तैस्त्वं पुत्रम्'[५] यहाँ न हो। सूत्र में प्रयुक्त 'आदि को छोड़कर' से ज्ञात होता है कि इससे अन्यत्र भी सकार का षकार नहीं होता। इस विषय में ये उदाहरण द्रष्टव्य हैं— 'वध्रिस्त्वम्'[६] 'पवस्तैस्त्वा'[७] ॥४॥

## तत्तानग्रादिषु च ॥५॥

सू० अ०—तत् तथा तान् अग्र इत्यादि बाद में होने पर भी (नामिन् उपधा वाले सकार का षकार हो जाता है)।

### निर्मलभाष्यम्

चशब्दोऽत्र नाम्युधस्य षकारः इत्यन्वादेशकः। **तत्तानग्रादिषु** च तत्, तानग्र इत्यादिषु परेषु अपि नाम्युपधस्य सकारस्य षकारः भवति। यथा— 'अग्निष्टद्धोता' (सं० ६ ७१.१) निष्टं भज' (सं० ४.२२.२) 'वायुष्टान् अग्रे' (सं० ४ २२ २) 'अग्निष्टान् अग्रे' (सं० २.३४.३)। सूत्रे प्रयुक्तेन आदिषु इत्यनेन ज्ञायते यदन्यत्रापि भवति। तद्विषये निदर्शनानि द्रष्टव्यानि—'दुष्टनो' (सं० ४ ७.३) निष्टक्वरीम्' (सं० ५ २२.६) 'गोभिष्टरेम' (सं० ७ ५०.७) इति। अत्र विसर्जनीयस्य परसस्थानोऽघोषे (२.२.१) इत्यनेन विसनीर्जयस्य सकारः। प्रस्तुतविधानेन सकारस्य षकारः भवति। ततश्च 'षकारान्नानापदेऽपि' (२ १.१६) इत्यनेन तकारस्य टकारश्च ॥५॥

---

१. ऋतुभिरिति ऋतु—भिः। त्वा (प० पा०)
२. द्यौः। त्वा (प० पा०)
३. ताभिः। त्वम्। पुत्रम् (प० पा०)
४. तैः। ते। रोहितः (प० पा०)
५. तैः। त्वम्। पुत्रम् (प० पा०)
६. वध्रिः। त्वम् (प० पा०)
७. पवस्तैः। त्वा (प० पा०)

## शशिकला

चशब्द यहाँ 'नामिन् उपधा वाले सकार का षकार हो जाता है' का अन्वादेशक है। तत् तथा 'तानग्र' इत्यादि बाद में होने पर भी नामिन् उपधा वाले सकार का षकार हो जाता है। जैसे—अग्निष्टद्धोता'[1] 'निष्टं भज'[2] 'वायुष्टान् अग्रे'[3] 'अग्निष्टान् अग्रे'[4] । सूत्र में प्रयुक्त 'आदि बाद में होने पर' से ज्ञात होता है कि इससे अन्यत्र भी सकार का षकार होता है—इस विषय में ये उदाहरण द्रष्टव्य हैं—'दुष्टनो'[5] 'निष्टक्वरीम्'[6] 'गोभिष्टरेम'[7] । यहाँ 'अघोष बाद में होने पर विसर्जनीय का परसस्थानीय वर्ण हो जाता है' से विसर्जनीय का सकार होता है तथा प्रस्तुत विधान से सकार का षकार हो जाता है। पुनः 'अलग पद में भी षकार से बाद में तकार का पूर्वसस्थानीय वर्ण हो जाता है' से तकार का टकार हो जाता है ।।५।।

## स्तृतस्वस्वपिषु[8] ॥ ६ ॥

सू० अ०—स्तृत, स्व, तथा स्वप् बाद में होने पर (नामिन् से परवर्ती सकार का षकार हो जाता है)।

## निर्मलभाष्यम्

**स्तृतस्वस्वपिषु** स्तृत, स्व, स्वप् इत्येते परे नामिनः परस्य सकारस्य षकारः भवति। यथा—अनिष्टृतः' (सं० ७.८२.३) 'निष्वास्मत्' (सं० ६.१२१.१, ७.८३.४) 'दुष्वप्न्यम्' (सं० ६.४६.३)[9] दुष्वप्न्यात्' (सं० ६.४६.२) ॥ ६ ॥

---

१. अग्निः । तत् । होता (प० पा०)
२. निः । तम् । भज (प० पा०)
३. वायुः । तान् । अग्रे (प० पा०)
४. अग्निः । तान् । अग्रे (प० पा०)
५. दुस्तनो इति दुः-तनो (प० पा०)
६ निः—तक्वरीम् (प० पा०)
७. गोभिः । तरेम (प० पा०)
८. (क) स्तृतस्यस्वपिषु इतिपाठः ।
९. सं० ७.८३.४, ६.१२१.१

### शशिकला

स्तृत, स्व तथा स्वप् बाद में होने पर नामिन् से परवर्ती सकार का षकार हो जाता है। जैसे—'अनिष्टृतः'[1] 'निष्वास्मत्'[2] 'दुष्वप्न्यम्'[3] 'दुष्वप्न्यात्'[4] ॥ ६ ॥

## नामिकरेफात्प्रत्ययसकारस्य[5] ॥ ७ ॥

**सू० अ०**—नामिन्, ककार तथा रेफ से परवर्ती प्रत्यय का ( षकार हो जाता है )।

### निर्मलभाष्यम्

**नामिकरेफात्** नामिन्, ककारः, रेफश्च तस्मात्परस्य **प्रत्ययसकारस्य** प्रत्ययस्य सकारस्य षकारः भवति। यथा—'फालाज्जातः करिष्यति' ( सं० १०.६.२ ) 'इयक्षमाणाः' ( सं० ४.१४.५ ) 'हविषा हार्षम्' ( सं० ३.११.३ ) ॥ ७ ॥

### शशिकला

नामिन्, ककार तथा रेफ से बाद में प्रत्यय सकार का षकार हो जाता है। जैसे—'फालाज्जातः करिष्यति'[6] 'इयक्षमाणाः'[7] 'हविषा-हार्षम्'[8] ॥ ७ ॥

## स्त्रैषूयम् ॥ ८ ॥

**सू० अ०**—स्त्रैषूयम् ( में नामिन् से परवर्ती सकार का षकार हो गया है )।

---

१. अनिः—स्तृतः ( प० पा० )
२. निः। स्व। अस्मत् (प० पा०)
३. दुः—स्वप्न्यम् (प० पा०)
४. दुः—स्वप्न्यात् (प० पा०)
५. (क) प्रत्ययः सकारस्य इतिपाठः।
६. फालात्। जातः। करिष्यति ( प० पा० )
७. इयक्षमाणाः (प० पा०)
८ हविषा। आ। अहार्षम् (प० पा०)

### निर्मलभाष्यम्

**स्त्रैषूयम्** इत्यत्र नामिनः परस्य सकारस्य षकारः जातः । यथा—'स्त्रैषूयमन्यत्र, ( सं० ६.११ ३ ) ॥ ८ ॥

### शशिकला

स्त्रैषूयम् में नामिन् से बाद वाले सकार का षकार हो गया है। जैसे 'स्त्रैषूयमन्यत्र'[१] ॥ ८ ॥

## नलोपेऽपि ॥ ९ ॥

**सू० अ०**—नकार का लोप होने पर भी नामिन् उपधावाले सकार का षकार हो जाता है ) ।

### निर्मलभाष्यम्

'नकारस्य च' ( २ १.३४ ) इत्यनेन ऊष्मसु परेषु अन्तः पदे नकारस्य लोपः विहितः । 'नकारमकारयोर्लोपे पूर्वस्यानुनासिकः' ( १ ३ ५ ) इत्यनेन पूर्वस्वरानुनासिकत्वञ्चोक्तम् । तत्र **नलोपे** नकारस्य लोपे **अपि** नाम्युपधस्व सकारस्य षकारः भवति । यथा —'यजूंषि होत्रा ( सं० ११ ६ १४ ) 'अत्तो हवींषि प्रयतानि हवींषि' ( सं० १८.३ ४४ ) ॥ ९ ॥

### शशिकला

( पद के मध्य में ऊष्म वर्ण वाद में होने पर ) नकार का भी ( लोप हो जाता है )' से के नकार के लोप का विधान किया गया है तथा 'नकार तथा मकार का लोप होने पर पूर्ववर्ती स्वर अनुनासिक ( हो जाता है )' से नकार का लोप होने पर पूर्ववर्ती स्वर के अनुनासिक होने को भी कहा गया है। वहाँ नकार का लोप होने पर भी नामिन् उपधा वाले सकार का षकार हो जाता है। जैसे—यजूंषि होत्रा'[२] 'अत्तो हवींषि प्रयतानि हवींषि'[३] ॥ ९ ॥

## उपसर्गाद्धातोः ॥ १० ॥

**सू० अ०**—( नामित् उपधा वाले ) उपसर्ग से बाद में धातु के ( सकार का षकार हो जाता है ) ।

---

१. स्त्रैषूयम् । अन्यत्र प० पा०)
२ यजूंषि । होत्रा ( प० पा० )
३ अत्तो इति । हवींषि । प्रयतानि । हवींषि (प० पा०)

## निर्मलभाष्यम्

नामिन् अन्ते यस्य तस्माद् **उपसर्गात्** परस्य **धातोः** सकारस्य षकारः भवति। यथा— वृक्षं यद् गावः परिषस्वजाना अनुस्फुरम्' ( सं० १ २ ३ )। **ननु** अनुस्फुरम् इत्यत्र अनूपसर्गात्परस्य स्फुर्जधातोः सकारस्य षकारः कथं न भवति। **उच्यते**—'न सृपिसृजिस्पृशिस्फूर्जिस्वरतिस्मरन्तीनाम्' ( २ ४. २१ ) इत्यनेन स्फुर्जधातोः सकारस्य षकारः न भवति। 'विषितं ते वस्तिबिलम्' ( सं० १ ३ ८ )। उपसर्गादिति किम् ? 'ते सन्तु' ( सं० ८.२.१५ ) 'अधि तस्थुः' ( सं० ९.९ २. १४ २.९ ) इत्यत्र माभूत्। धातोः इति किम् ? 'अधि स्कन्द वीरयस्व' ( सं० ५ २५ ८ ) 'अभि स्कन्दं मृगीव ( सं० ५.१४. ११ ) इत्यत्र माभूत्॥ १०॥

## शशिकला

नामिन् है अन्त में जिसके ऐसे उपसर्ग से बाद में धातु के सकार का षकार हो जाता है। जैसे—'वृक्षं यद् गावः परिषस्वजाना अनुस्फुरम्'[1] **शंका**—अनुस्फुरम् में नामिन् अन्त वाले अनु उपसर्ग से बाद में स्फूर्ज धातु के सकार का षकार क्यों नहीं हुआ है ? **समाधान**—'सर्प, सर्ज, स्पर्श, स्फूर्ज, स्वर् तथा स्मर् धातु के सकार का षकार नहीं होता' से स्फूर्ज धातु के सकार का षकार नहीं हुआ है। विषितं ते वस्तिबिलम्'[2]। सूत्र में 'उपसर्ग से बाद में' यह क्यों कहा ? 'ते सन्तु'[3] अधि तस्थुः'[4] यहाँ न होवे 'धातु का' यह क्यों कहा गया ? 'अधि स्कन्द वीरयस्व'[5] 'अभि स्कन्दं मृगीव'[6] यहाँ न होवे॥ १०॥

## अभ्यासाच्च॥ ११॥

**सू० अ०**—( नामिन् है अन्त में जिसके ऐसे ) अभ्यास से बाद में भी (धातु के सकार का षकार हो जाता है)।

---

१. वृक्षम्। यत्। गावः। परि–सस्वजाना। अनु–स्फुरम् (प० पा०)
२. वि –सितम्। ते। वस्ति बिलम् (प० पा०)
३. ते। सन्तु (प० पा०)
४. अधि। तस्थुः (प० पा०)
५. अधि। स्कन्द। वीरयस्व (प० पा०)
६. अभि। स्कन्दम्। मृगी—इव (प० पा०)

## निर्मलभाष्यम्

चशब्दोऽत्र धातोः इत्यस्यान्वादेशकः। अभ्यासः धातोः द्विरुक्तिः। नामिनन्ताद् **अभ्यासात्परस्य** धातोः अपि सकारस्य षकारः भवति। यथा—'सुषूदत' ( सं० १.२६ ४ ) 'अभि सिष्यदे' ( सं० ५.५.९ ) 'आ सुष्वन्ती यजते' ( सं० ५.१२.६, ५.२७.८ ) 'सिषासवः सिषासथ' ( सं० ६ २१ ३ ) 'तत् सिषासति' ( सं० १३.२.१४ ) 'साम्राज्यं सुषुवे' ( सं० १४.१.३ ) ॥ ११ ॥

## शशिकला

च शब्द 'धातु का' का अन्वादेशक है। अभ्यास का अर्थ है—धातु की द्विरुक्ति। नामिन् अन्त वाले अभ्यास से बाद में धातु के सकार का षकार हो जाता है। जैसे– 'सुषूदत'[1] अभि सिष्यदे'[2] 'आ सुष्वन्ती यजते'[3] 'सिषासवः 'सिषासथ'[4] 'तत् सिषासति'[5] 'साम्राज्यं सुषुवे'[6] ॥११॥

## स्थासहिसिचीनामकारव्यवायेऽपि[7] ॥ १२ ॥

**सू० अ०** अकार का व्यवधान होने पर भी ( नामिन् अन्त वाले उपसर्ग से बाद में ) स्था, सह् तथा सिच् (धातुओं के सकार का षकार हो जाता है )।

## निर्मलभाष्यम्

**अकारव्यवायेऽपि** अकारव्यवहितेऽपि नामिनन्ताद् उपसर्गात् **स्थासहिसिचीनाम्** स्था सह् सिच् इत्येतेषां धातूनां सकारस्य षकारः भवति। यथा—'अभ्यष्ठां विश्वाः' ( सं० १०.५.३६, १६.१९ १ ) अध्यष्ठात्' ( सं० १० १०.१३ ) 'अध्यष्ठाम्' ( सं० १२.१ ११ ) 'व्यषहन्त' ( सं० ३.१०.१२ ) 'अभ्यषिच्यन्त (सं० १४.१.३६) 'अकारव्यवायेऽपि' इति किम्? 'व्यास्थन् मृधः' ( सं० १३.१.५ ) इत्यत्र माभूत् ॥ १२ ॥

---

१. सुसूदत (प० पा०)
२. अभि। सिस्यदे (प० पा०)
३. आ। सुस्वन्ती। यजते ( प० पा० )
४. सिसासवः। सिसासथ ( प० पा० )
५. तत्। सिसासति ( प० पा० )
६. साम्राज्यम्। सुसुवे ( प० पा० )
७. (क) स्थासहितसिचिनामकारव्यवधायेऽपि इतिपाठः।

### शशिकला

अकार का व्यवधान होने पर भी नामिन् अन्त वाले उपसर्ग से बाद में स्था, सह् तथा सिच् धातुओं के सकार का षकार हो जाता है। जैसे—'अभ्यष्ठां विश्वाः'[१] 'अध्यष्ठात्'[२] 'अध्यष्ठाम्'[३] 'व्यषहन्त'[४] 'अभ्यषिच्यत'[५]। 'अकार का व्यवधान होने पर' यह क्यों कहा गया—'व्यास्थन् मृधः'[६] यहाँ न होवे ॥ १२ ॥

## अभ्यासव्यवायेऽपि स्थः ॥ १३ ॥

**सू० अ०**—अभ्यास का व्यवधान होने पर भी ( नामिन् अन्त वाले उपसर्ग से बाद में ) स्था ( धातु के सकार का षकार हो जाता है )।

### निर्मलभाष्यम्

धातोः द्विरुक्तिः अभ्यासः। **अभ्यासव्यवायेऽपि** अभ्यासव्यवहितेऽपि नामिनन्ताद् उपसर्गात् स्थाधातोः सकारस्य षकारः भवति। यथा—'वितष्ठिरे' ( सं० ४.२६ ) वि तष्ठे' ( सं० ९.१०.१९ ) ॥ १४ ॥

### शशिकला

धातु की द्विरुक्ति अभ्यास कहलाता है। अभ्यास का व्यवधान होने पर भी नामिन् अन्त वाले उपसर्ग से बाद में स्था धातु के सकार का षकार हो जाता है। जैसे—'वि तष्ठिरे'[७] 'वि तष्ठे'[८] ॥ १४ ॥

## परमेभ्योऽनापाके ॥ १४ ॥

**सू० अ०**—परम इत्यादि से बाद में होने पर ( स्था धातु के सकार का षकार हो जाता है ( किन्तु ) आपाके ( से बाद में नहीं होता )।

### निर्मलभाष्यम्

**परमेभ्यः** परमादिभ्यः परेभ्यः स्थाधातोः सकारस्य षकारः भवति। **अनापाके** आपाके इत्यस्मात् परात् न भवति। यथा—'परमेष्ठी' ( सं० ४.

---

१. अभि। अस्थाम्। विश्वा ( प० पा० ) २. अधि। अस्थात् ( प० पा० )
३. अधि। अस्थाम् ( प० पा० ) ४. वि। असहन्त ( प० पा० )
५. अभि। असिच्यन्त ( प० पा० )
६. वि। आस्थत्। मृधः ( प० पा० )
७. वि। तस्थिरे ( प० पा० )
८. वि। तस्थे ( प० पा० )

११७ )। परमेभ्यः इत्यनेन बहुवचनेन ज्ञायते यदन्यत्रापि भवति। तद्विषये निदर्शनं द्रष्टव्यम् – 'भुवनेष्ठाः' ( सं० २ १.४ ) 'मध्यमेष्ठाः' (सं० २ ६.४) 'अङ्गेष्ठाः' ( सं० ६.१४.१० ) 'गिरिष्ठाः' ( सं० ७.२६.२०, ७.८९.३ ) 'पथिष्ठाम्' ( स० १४.२.६ ) 'गोष्ठ इह' ( सं० ३.१४.६ ) 'गोष्ठो भवतु' ( सं० ३.१४ ५ )। इत्यत्र 'षकारान्नानापदेऽपि' (२.१.१६) इत्यनेन षकारात् परस्य थकारस्य ठकार। अनापाके इति किम् ? 'आपाके स्थाः' ( सं० ८ ६.१४ ) इत्यत्र माभूत् ॥ १४ ॥

### शशिकला

परम इत्यादि से बाद वाले स्था धातु के सकार का षकार हो जाता है किन्तु आपाके से बाद में नहीं होता। जैसे—'परमेष्ठी'[१]। सूत्र में परमेभ्यः इस बहुवचन के प्रयोग से ज्ञात होता है कि इससे अन्यत्र भी होता है। इस विषय में ये उदाहरण द्रष्टव्य हैं—'भुवनेष्ठा'[२] मध्यमेष्ठाः'[३] 'अङ्गेष्ठाः'[४] गिरिष्ठाः'[५] 'पथिष्ठाम्'[६] 'गोष्ठ इह'[७] 'गोष्ठो भवतु'[८]। यहाँ 'षकार से बाद में अलग पद में भी तवर्ग का पूर्वसस्थानीय वर्ण हो जाता है' से थकार का ठकार हो जाता है। सूत्र में 'अनापाके' यह क्यों कहा गया ? 'आपाके स्था'[९] यहाँ न होवे[१०] ॥ १४ ॥

## अपसव्याभ्याञ्च ॥ १५ ॥

सू० अ०—अप तथा सव्य के बाद में भी ( स्था धातु के सकार का षकार हो जाता है )।

---

१. परमे–स्थी ( प० पा० )
२. भुवने–स्थाः ( प० पा० )
३. मध्यमे–स्थाः ( प० पा० )
४. अङ्गेः–स्थाः ( प० पा०)
५. गिरि–स्थाः ( प० पा० )
६. पथि–स्थाम् (प० पा०)
७. गो–स्थः। इह (प० पा०)
८. गो–स्थः। भवतु (प० पा०)
९. आपाके। स्थ (प० पा०)
१०. शौनकशाखा की संहिता में आपाकेष्ठा पाठ मुद्रित है तथा पैप्लादशाखा की संहिता में 'अपाकेता' ( १६.८०.६ ) मुद्रित है। पैप्लादशाखा की संहिता के सम्पादक डा० रघुवीर ने उस स्थल पर शौनकशाखा की संहिता में प्राप्त 'अपाकेष्ठा' तथा 'अपाके स्था' इन दो रूपों का उल्लेख किया है। इससे स्पष्ट है कि शौनकशाखा की अथवा किसी अन्य शाखा की संहिता के किसी हस्तलिपि में 'अपाके स्था' भी था। इसी को आधार मानकर सूत्रकार ने 'अनापाके' का प्रयोग किया है।

## निर्मलभाष्यम्

चशब्दोऽत्र स्था इत्यस्यान्वादेशकः । **अपसव्याभ्याम् च** अप, सव्य इत्येतेभ्यां च परस्य स्थाधातोः सकारस्य षकारः भवति । यथा— अपाष्ठाच्छृङ्गात्' ( सं० ४.६.५ ) 'सव्यष्ठाश्चन्द्रमा' ( सं० ८.८.२३ ) ॥ १५ ॥

## शशिकला

सूत्र में प्रयुक्त चशब्द 'स्था' का अन्वादेशक है। अप तथा सव्य से बाद में भी स्था धातु के सकार का षकार हो जाता है। जैसे—'अपाष्ठाच्छृङ्गात्'[1] 'सव्यष्ठाश्चन्द्रमा'[2] ॥ १५ ॥

## अग्नेः स्तोमसोमयोः[3] ॥१६॥

**सू० अ०**—अग्नि से बाद में स्तोम तथा सोम (के सकार) का (षकार हो जाता है )।

## निर्मलभाष्यम्

**अग्नेः** अग्नि इत्यस्मात्परात् **स्तोमसोमयोः** स्तोम सोम इति एतयोः सकारस्य षकारः भवति। यथा 'अग्निष्टोमेन' ( सं० ९.६ ४० ) 'अग्निषोमौ' (सं० ८.९ १४ )। अग्नेरिति किम् ? 'अभि सोमः' ( सं० १.२९.३ ) 'द्विषते सोमः' ( सं० ५.३.७ ) इत्यत्र माभूत् ।। १६ ॥

## शशिकला

अग्नि से बाद में स्तोम तथा सोम के सकार का षकार हो जाता है। जैसे —'अग्निष्टोमेन'[3] 'अग्निषोमौ'[4]। अग्नि से बाद में यह क्यों कहा गया ? 'अभि सोमः'[5] 'द्विषते सोमः'[6] यहाँ न होवे ।। १६ ॥

## सुञः ॥१७॥

**सू० अ०**—सु ( के सकार ) का ( षकार हो जाता है )।

---

१. अपाष्ठात् । शृङ्गात् ( प० पा० )
२. सव्य–स्थाः । चन्द्रमा (प० पा०)
३. (क) 'अग्नेः स्तोमयोः' इत्येव पाठ. ।
४. अग्नि–स्तोमेन (प० पा०)
५. अग्निषोमौ (अग्नि–सोमौ) (प० पा०) ५. अभि-सोमः (प० पा०)
६. द्विषते । सोमः (प० पा०)

## निर्मलभाष्यम्

सुत्रः सु इत्यस्य सकारस्य षकारः भवति। यथा—'इदमू षु' ( सं० १ २४ ४ ) 'तदू षु' ( सं० ५.१५ ) 'महिमू षु' ( सं० ७.६.२ ) 'अन्यमू षु' ( सं० १८ १.१६ ) 'स्तुष उ षु' (सं० १८.१.३७ ) 'त्यमू षु' (सं० ७ ८५.१) 'पर्यू षु' ( सं० ५.६.४ ) 'तदु षु' ( सं० ७ ७३ ७ ) 'मो षु पणीन्' ( सं० ५. ११ ७ ) 'मोष्वेषाम्' ( सं० १८.३.६२ ) 'एवो ष्वस्मत्' ( सं० ८ ८४ ३ ) 'हविरो ष्विन्द्रः' ( सं० ७.७२.२ ) 'विद्मो ष्वस्य' ( सं० १.२.१ ) ॥ १७ ॥

## शशिकला

सु के सकार का षकार हो जाता है। जैसे—'इदमू षु'……'[1] ॥१७॥

## त्र्यादिभ्यः ॥ १८ ॥

सू० अ०—त्रि इत्यादि से बाद में (सकार का षकार हो जाता है)।

## निर्मलभाष्यम्

त्र्यादिभ्यः 'त्रि' इत्यादिभ्यः परस्य सकारस्य षकारः भवति। यथा–'त्रिषप्ताः' ( सं० १ १.१ ) 'त्रिष्टुभम्' ( सं० ८.९.१४ ) 'त्रैष्टुभम्' ( सं० ९ १०.१ ) 'त्रिषन्धिः' ( सं० ११ ९ २३)। आदिभ्यः इत्यनेन ज्ञायते यदन्यत्रापि भवति। तद्विषये निदर्शनं द्रष्टव्यम्—'गोषेधाम्' ( सं० १.१८.४ ) 'रघुष्यादः' ( सं० ३.७.१ ) 'धृष्णुषेण' ( सं० ५.२०.९ ) 'सुष्टुती' ( सं० ६. १.३ ) 'पुरुष्टुतः' ( सं० ६.२.३ ) 'ऋषिष्टुताम्' ( सं० ६.१०८.२ ) 'गभिषक् ( सं० ७.७.१ ) 'पृथुष्टुके' ( सं० ७.४६.१ ) 'सुषूमाः' ( सं० ७.४६.२ ) 'अनुष्टुभम्' ( सं० ८.९.१४ ) 'रातिषाचः' ( सं० १८.३.२० ) 'दिविष्टम्भेन' ( सं० १९.३२,७ ) ॥ १८ ॥

---

१. इदम्। ॐ इति। सु (प० पा०) तत्। ॐ इति। सु (प० पा०) महिम्। ॐ इति। सु (प० पा०) अन्यम्। ॐ इति। सु (प० पा०) स्तुषः। ॐ इति। सु (प०पा०) स्तुषः। ॐ इति। सु (प० प०) त्यम्। ॐ इति। सु (प० पा०) परि। ॐ इति। सु (प० पा०) तत्। ॐ इति। सु ( प० पा०) मो इति। सु (प० पा०) एव। ओ इति। सु। अस्मत् (प० पा०) हविः। ओ इति। सु। इन्द्रः (प० पा०) विदम। ॐ इति। सु। अस्य (प० पा०)।

### शशिकला

त्रि इत्यादि से बाद वाले षकार का सकार हो जाता है। जैसे—'त्रिषप्ताः.........'[1]। सूत्र में प्रयुक्त 'आदि से बाद में' से ज्ञात होता है कि इससे अन्यत्र भी सकार का षकार होता है। इस विषय में ये उदाहरण द्रष्टव्य हैं—'गोषेधाम्...... ..'[2] ॥ १८ ॥

## ऋकारान्नात्सदेः ॥ १९ ॥

सू० अ०—ऋकारान्त ( पद ) से बाद में सद् ( धातु के सकार ) का ( षकार हो जाता है )।

### निर्मलभाष्यम्

ऋकारान्तात् ऋकारः अन्ते यस्य तस्मात् सदेः सद्धातोः सकारस्य षकारः भवति। यथा—'नार्षदेन' ( सं० ४.१९ २ ) 'होतृषदनम्' ( सं० ७. १९.१ ) 'पितृषदम्' ( सं० १४.२.३३ ) 'पितृषदनाः पितृषदने' ( सं० १८. ४ ६७ ) ॥ १९ ॥

### शशिकला

ऋकार है अन्त में जिसके ऐसे (पद) से बाद में सद् धातु के सकार का षकार हो जाता है। जैसे—'नार्षदेन'[3] 'होतृषदनम्'[4] 'पितृषदम्'[5] 'पितृषदनाः पितृषदने'[6] ॥ १९ ॥

## बर्हिपथ्यप्सुदिविपृथिवीति च ॥ २० ॥

सू० अ०—बर्हि, पथि, अप्सु, दिवि तथा पृथिवी से बाद में ( सद् धातु के सकार का षकार हो जाता है )।

---

१ त्रिः–सप्ताः (प० पा०) त्रि–स्तुभम् (प० पा०) त्रैप्टुभम् (प० पा०) त्रि–सन्धिः (प० पा०)।

२. गो–सेधाम् ( प० पा० ). रघु–स्यादः ( प० पा० ) धृष्णु–सेन ( प० पा० ) सु–स्तुतिः ( प० पा० ) पुरु–स्तुतः (प० पा०) ऋषि–स्तुतम् (प० पा०) ग-भिषक् (प० पा०) पृथु–स्तुके (प० पा०) सु–सूमाः (प० पा०) अनु–स्तुभम् (प० पा०) राति–साचः (प० पा०) दिवि–स्तम्भेन (प० पा० )।

३. नार्षदेन (नृ–सदेन) (प० पा०) ४. होतृ–सदनम् (प० पा०)

५. पितृ–सदम् (प० पा०) ६. पितृ–सदनाः। पितृ–सदने (प० पा०)

## निर्मलभाष्यम्

चशब्दोऽत्र सदेः इत्यस्यान्वादेशकः। **बर्हिपथ्यप्सुदिविपृथिवीति** बर्हि, पथि, अप्सु, दिवि, पृथिवी इत्यस्मात्परस्य सद्धातोः सकारस्य षकारः भवति। यथा—बर्हिसदः' ( सं० १८१५१ ) 'पथिषदी' ( सं० १८.२.१२ ) 'अप्सुषदः' ( सं० १२.२.४ ) 'दिविषदः' ( सं० १०.९.१२ ) 'पृथिविषद्भ्यः' ( सं० १८.४.७८ )। **ननु**—अत्र 'त्र्यादिभ्यः' ( सं० २४.१७ ) इत्यनेन प्राप्तिः। पृथग्विधानस्य प्रयोजनं किम्? **उच्यते**—अत्र बर्हि इत्यादिभ्यः परस्य सद्धातोरेव सकारस्य षकारः, न त्वन्यस्य॥ २०॥

## शशिकला

सूत्र में प्रयुक्त चशब्द 'सद् धातु का' अन्वादेश करता है। बर्हि, पथि, अप्सु, दिवि, पृथिवि से बाद में सद् धातु के सकार का षकार हो जाता है। जैसे—'बर्हिषदः[1] 'पथिषदी'[2] 'अप्सुषदः'[3] 'दिविषदः'[4] पृथिविषद्भ्यः'[5]। **शङ्का**—यहाँ 'त्रि इत्यादि से बाद में सकार का षकार हो जाता है' इसी से सकार के षकार होने की प्राप्ति हो जाती है, फिर पृथक् विधान करने का क्या प्रयोजन है? **समाधान**—यहाँ बर्हि इत्यादि से बाद में सद्धातु के ही सकार के षकार होने का विधान किया गया है, अन्य सकार का नहीं॥ २०॥

## हिदिविभ्यामस्तेः॥ २१॥

**सू० अ०**—हि तथा दिवि से बाद में अस् ( धातु के सकार ) का ( षकार हो जाता है )।

## निर्मलभाष्यम्

**हिदिविभ्याम्** हि दिवि इति एतेभ्याम् **अस्तेः** अस्धातोः सकारस्य षकारः भवति। यथा—'आपो हिष्ठा' (सं० १५.१) 'दिवि ष्ठा' ( सं० १. ३०. १ )। संहितायामस्यापवादोऽपि प्राप्यते। यथा—'विमुचो हि सन्ति' ( सं० ६.११२.३ ) 'वशा हि सत्याः' ( सं० १.१०.१ ) यत्कृते सूत्रकारेण विधानः न कृतः॥ २१॥

---

१. बर्हि-सदः (प० पा०)   २. पथि-सदी (प० पा०)
३. अप्सु-सदः (प० पा०)   ४. दिवि-सदः (प० पा०)
५. पृथिवि-सद्भ्यः (प० पा०)

### शशिकला

हि तथा दिवि से बाद में अस् धातु के सकार का षकार हो जाता है। जैसे—'आपो हिष्ठा'[1] 'दिविष्ठा'[2]। संहिता में हि से बाद में अस् धातु के सकार के षकार होने का अपवाद भी प्राप्त होता है। जैसे—'विमुचो हि सन्ति'[3] 'वशा हि सत्याः'[4], किन्तु इसके लिए सूत्रकार ने कोई विधान नहीं किया है॥ २१॥

[ तन्निषेधः ]

## न सृपिसृजिस्पृशिस्फूर्जिस्वरतिस्मरतीनाम्॥ २२॥

सू० अ०—सर्प्, सर्ज्, स्पृश्, स्फूर्ज्, स्वर् तथा स्मर् ( धातुओं के सकार ) का ( षकार नहीं होता )।

### निर्मलभाष्यम्

सर्प् सर्ज् स्पृश् स्फूर्ज् स्वर् स्मर् इत्येषां धातूनां सकारस्य षकारः न भवति। यथा—'परिसर्पति' ( सं० ५.२३ ३ ) 'अतिसृष्टः' (सं० १६ १.१) 'उपरिस्पृशः' ( सं० ५.३.१० ) 'अभि स्फूर्जति' ( सं० १२.५ २० ) 'अनुस्फुरम्' ( सं० १ २.३ ) 'अभिस्वरन्ति' ( सं० ९.९.२० ) 'अतिसर' ( सं० ५.८.२ ) 'प्रतिसरः' ( सं० २.१.२ ) 'निस्वरः' ( सं० १२.२ १४ ) 'प्रतिस्मरेथाम्' ( सं० ८.४ ७ )॥ २२॥

### शशिकला

सर्प्, सर्ज्, स्पृश्, स्फूर्ज, स्वर् तथा स्मर् धातुओं के सकार का षकार नहीं होता। जैसे—'परिसर्पति'[5] 'अतिसृष्टः'[6] 'उपरिस्पृशः'[7] 'अभि स्फूर्जति'[8] 'अनुस्फुरम्'[9] 'अभिस्वरन्ति'[10] 'अतिसर'[11] प्रतिसरः'[12] 'निस्वरः'[13] 'प्रतिस्मरेथाम्'[14]॥ २२॥

---

१. आपः। हि। स्थ (प० पा०)
२. दिवि। स्थ (प० पा०)
३. विमुचः। हि। सन्ति (प० पा०)
४. वशा। हि। सत्याः (प० पा०)
५. परि–सर्पति (प० पा०)
६. अति–सृष्टः (प० पा०)
७. उपरि–स्पृशः (प० पा०)
८. अभि। स्फूर्जति (प० पा०)
९. अनु–स्फुरम् (प० पा०)
१०. अभि–स्वरन्ति ( प० पा० )
११ अति–सर (प० पा०)
१२. प्रति–सरः (प० पा०)
१३. नि–स्वरः (प० पा०)
१४. प्राति–स्मरेथाम् (प० पा०)

## गोसन्यादीनाञ्च ॥ २३ ॥

**सू० अ०**—गोसनि इत्यादि के (सकार का षकार नहीं होता)।

### निर्मलभाष्यम्

चशब्दोऽत्र न इत्यस्यान्वादेशकः। **गोसन्यादीनां च** गोसनि इत्यादीनाम् सकारस्य षकारः न भवति। यथा—'गोसनिम्' ( सं० ३.२०.१० ) 'आदीनाञ्च' इत्यनेन ज्ञायते यदन्यत्रापि भवति। तद्विषये निदर्शनानि द्रष्टव्यानि—'वि सीमतः' ( सं० ४.११ ) 'भूरि स्थात्राम्' ( सं० ४.३० २ ) 'अभि सिष्यदे' (सं० ५.५.९) 'अनु सूतं सवितवे' ( सं० ६ १७.१–४ ) 'बहुसूवरी' ( सं० ७ ४६.२ ) 'अन्तिसूम्ने' ( सं० ७ ११२.१ ) 'प्रतिस्पाशनम्' ( सं० ८ ५ ११ ) 'विसल्पकम्' ( सं० ९ ८.२ ) 'प्रातिसुत्वनम्' ( सं० २०.१२९.२ ) ॥ २३॥

### शशिकला

सूत्र में प्रयुक्त चशब्द यहाँ न (= निषेध) का अन्वादेशक है। जैसे—'गोसनिम्'[1]। सूत्र में प्रयुक्त 'आदि का' से ज्ञात होता है कि इससे अन्यत्र भी होता है। उस विषय में उदाहरण द्रष्टव्य हैं 'वि सीमतः'[2] 'भूरिस्थात्राम्'[3] 'अभिसिष्यदे'[4] 'अनुसूतं सवितये'[5] 'बहुसूवरी'[6] 'अन्तिसूम्ने'[7] 'प्रतिस्पाशनम्'[8] 'विसल्पकम्'[9] 'प्रातिसुत्वनम्'[10] ॥२३ ॥

## अध्यभिभ्यां स्कन्देः ॥ २४ ॥

**सू० अ०**—अधि तथा अभि से बाद में स्कन्द के सकार का षकार नहीं होता।

### निर्मलभाष्यम्

**अध्यभिभ्याम्** अधि अभि इत्येतेभ्याम् **स्कन्देः** स्कन्द इत्यस्य सकारस्य षकारः न भवति। यथा—'अधिस्कन्द' ( सं० ५ २५ ८ ) 'अभिस्कन्द'

---

१. गो–सनिम् (प० पा०)　२. वि । सीमतः ( प० पा० )
३. भूरि–स्थात्राम् (प० पा०)　४. अभि । सिस्यदे ( प० पा० )
५. अनु । सूतम् । सवितवे (प० पा०)　६. बहु–सूवरी (प० पा०)
७. अन्तिसूम्न इत्यन्ति–सूम्ने (प० पा०)　८. प्रति–स्पाशनम् (प० पा०)
९. वि–सल्पकम् (प० पा०)　१०. प्राति–सुत्वनम् (प० पा०)

(सं० ५.१४.११)। अध्यभिभ्यामिति किम् ? 'परिष्कन्दाः' (सं० १५ ३ १०) इत्यत्र निषेधः माभूत् ॥ २४ ॥

### शशिकला

अधि तथा अभि से बाद में स्कन्द के सकार का षकार नहीं होता। जैसे—'अधिस्कन्द'[1] 'अभिस्कन्द'[2]। सूत्र में 'अधि तथा अभि से बाद में' यह क्यों कहा गया ? 'परिष्कन्दाः'[3] यहाँ निषेघ न होवे।

## परेः स्तृणातेः ॥ २५ ॥

सू० अ०—परि से बाद में स्तृ ( धातु के सकार ) का (षकार नहीं होता )।

### निर्मलभाष्यम्

**परेः** परि इत्यस्मात् परस्य स्तृधातोः सकारस्य षकारः न भवति। यथा—'परि स्तृणीहि' ( सं० ७.९९.१ ) परिस्तरणम्' ( सं० ९.६.२ )। परेः इति किम् ? 'विष्टारी जातः' ( सं० ४.३४.१ ) इत्यत्र निषेधः माभूत् ॥ २५ ॥

### शशिकला

परि से बाद में स्तृ धातु के सकार का षकार नहीं होता। जैसे—'परि स्तृणिहि'[4] 'परिस्तरणम्'[5]। सूत्र में 'परि से बाद में' यह क्यों कहा गया ? 'विष्टारी जातः'[6] यहाँ निषेध न होवे ॥ २५ ॥

## रेफपरस्य च ॥ २६ ॥

सू० अ०—रेफ है बाद में जिसके ऐसे ( धातु के सकार ) का भी ( षकार नहीं होता )।

### निर्मलभाष्यम्

**रेफपरस्य** रेफः परे यस्य तस्य धातोश्च सकारस्य षकारः न भवति। यथा—'सिस्रताम्' ( सं० १.११.१ ) 'परिस्रुतः' (सं० ३.१२.७ ) 'सिस्रते' ( सं० १३.२.४६ ) ॥ २६ ॥

---

१. अधि । स्कन्द (प० पा०)
२. अभि–स्कन्द (प० पा०)
३. परि–स्कन्दाः (प० पा०)
४. परि । स्तृणीहि (प०पा०)
५. परि–स्तरणम् (प०पा०)
६. विष्टारी । जातः (प० पा०)

### शशिकला

रेफ है बाद में जिसके ऐसे धातु के सकार का भी षकार नहीं होता। जैसे—'सिस्रताम्'[1] 'परिस्रुतः'[2] 'सिस्रते'[3] ॥ २६ ॥

## अभिस्याम पृतन्यतः ॥ २७ ॥

सू० अ०–'अभिस्याम पृतन्यतः' में (सकार का षकार नहीं हुआ है)।

### निर्मलभाष्यम्

'अभिस्याम पृतन्यतः' इत्यत्र सकारस्य षकारः न जातः। यथा—'वयमभि स्याम पृतन्यत.' ( सं० ७.९३.१ )। 'अभिस्याम पृतन्यतः' इति क्रमेण किम् ? 'विश्वा पृतना अभिष्याम' ( सं० १३.१.२२ ) इत्यत्र निषेधः माभूत् ॥ २७ ॥

॥ इति श्रीमत्पण्डितदशरथपाठकसूनुना डा० जमुनापाठकेन कृते निर्मलभाष्ये चतुरध्यायिकायाः द्वितीयाध्यायस्य चतुर्थः पादः ॥

॥ इति द्वितीयोऽध्यायः ॥

### शशिकला

'अभिस्याम पृतन्यतः' में सकार का षकार नहीं होता। जैसे—'वयमभि स्याम पृतन्यतः'[4]। सूत्र में प्रयुक्त 'अभिष्याम पृतन्यतः' इस क्रम को क्यों कहा गया ? 'विश्वा पृतना अभिष्याम' यहाँ निषेध न होवे ॥२७॥

॥ चतुरध्यायिका के द्वितीय अध्याय के चतुर्थ पाद की डा० जमुनापाठक कृत शशिकला व्याख्या समाप्त ॥

॥ द्वितीय अध्याय समाप्त ॥

---

१. सिस्रताम् (प० पा०)　　　२. परि–स्रुतः (प० पा०)

३. सिस्रते (प० पा०)

४ शौनकशाखा की मुद्रित संहिता में सकार का षकार होकर 'अभि ष्याम् पृतन्यतः' ही प्राप्त होता है।

# तृतीयोऽध्यायः

## अथ प्रथमः पादः

[ संहितायां ह्रस्वस्वरस्य दीर्घभावः ]

### सहावाडान्ते दीर्घः ॥ १ ॥

**सू० अ०**—आट् अन्त में होने पर सह् धातु में ह्रस्वस्वर ( अकार ) का दीर्घ हो जाता है ।

#### निर्मलभाष्यम्

**आडान्ते** आट् अन्ते यस्य तस्मिन् **सहौ** सह् धातौ ह्रस्वस्वरस्य अकारस्य दीर्घः आकारः भवति । यथा—'पृतनाषाट्' ( सं० ५.१४८ ) 'शत्रूषाण्नीषाट्' ( सं० ५.२०.११ ) अभीषाडस्मि विश्वाषाट्' ( सं० १२ १.५४ ) ॥ १ ॥

#### शशिकला

आट् है अन्त में जिसके ऐसे सह् धातु में ह्रस्वस्वर अकार का दीर्घ आकार हो जाता है । जैसे—'पृतनाषाट्'[1] 'शत्रूषाण्नीषाट्'[2] 'अभीषाडस्मि विश्वाषाट्'[3] ।

### अष्ट पदयोगपक्षपर्णद्रंष्ट्रचक्रेषु ॥ २ ॥

**सू० अ०**—पद, योग, पक्ष, पर्ण, द्रंष्ट्र तथा चक्र बाद में होने पर अष्ट के ( अन्त्य अकार का दीर्घ हो जाता है ) ।

#### निर्मलभाष्यम्

**पदयोगपक्षपर्णद्रंष्ट्रचक्रेषु** पद, योग, पक्ष, पर्ण, द्रंष्ट्र, चक्र, इत्येतेषु परेषु अष्ट इत्यस्यान्त्यस्याकारस्य दीर्घः भवति । यथा—'अष्टापदी' ( सं०

---

१. पृतनाषाट् (प० पा०)
२. शत्रूषाट् । नीषाट् (प० पा०)
१. अभीषाट् । अस्मि । विश्वाषाट् (प० पा०)

५.१९.७ ) 'अष्टायोगैः' ( सं० ६.९१.१ ) 'अष्टापक्षाम्' ( सं० ९.३.२१ ) 'अष्टाचक्राः' ( सं० १०.२.३१ ) 'अष्टाचक्रम्' ( सं० ११.४.२२ )। अथर्ववेदस्य शौनकशाखायाः संहितायां पर्णं द्रंष्ट्र इत्येतयोः निदर्शनं न प्राप्यते। ह्विटनीमहाभागस्य व्याख्यया ज्ञायते यत्पूर्वभाष्यकारेण 'अष्टापर्णम्' 'अष्ट्राद्रंष्ट्रम्' इत्यपि निदर्शनं दत्तम्। यत्संहितायां न दृश्यते ॥ २ ॥

## शशिकला

पद, योग, पक्ष, पर्ण, द्रंष्ट्र तथा चक्र बाद में होने पर अष्ट के अन्त्य अकार का दीर्घ हो जाता है। जैसे—'अष्टापदी'[1] 'अष्टायोगैः'[2] अष्टापक्षाम्'[3] 'अष्टाचक्राः'[4] 'अष्टाचक्रम्'[5]। द्रंष्ट्र तथा पर्ण बाद में होने पर अष्ट के अन्त्य अकार के दीर्घ होने का उदाहरण शौनकशाखा की संहिता में नहीं मिलता। ह्विटनी महाभाग की व्याख्या से ज्ञात होता है कि पूर्वभाष्यकार ने 'अष्टापर्णम्' तथा 'अष्टाद्रंष्ट्रम्' ये उदाहरण दिया है जो संहिता में नहीं मिलते ॥ २ ॥

## व्यधावप्रत्यये[6] ॥ ३ ॥

सू० अ० - प्रत्यय बाद में नहीं है जिसके ऐसी व्यध् धातु बाद में होने पर ( पूर्ववर्ती ह्रस्व स्वर का दीर्घ हो जाता है )।

## निर्मलभाष्यम्

व्यधौ व्यध्धातौ परे सति पूर्वह्रस्वस्वरस्य दीर्घः भवति, चेत् अप्रत्यये व्यध्धातोः परात् प्रत्ययः न भवति। यथा - 'श्वावित्' ( सं० १५. १३. ९ ) हृदयाविधम्' ( सं० ८.६.१८ ) 'मर्माविधम्' ( सं० ११.१०.२६ )। अप्रत्यये इति किम् ? 'प्रविध्यन्तः' ( सं० ३.२६.४ ) इत्यत्र माभूत् ॥ ३ ॥

---

१. अष्टा—पदी ( अष्ट-पदी ) (प० पा०)
२. अष्टा—योगैः ( अष्ट-योगैः ) (प० पा०)
३. अष्टा—पक्षाम् ( अष्ट-पक्षाम् ) (प० पा०)
४. अष्टा—चक्राः ( अष्ट-चक्राः ) (प० प०)
५. अष्टा—चक्रम् ( अष्ट-चक्रम् ) (प० पा०)
६. (क) व्यवधावप्रत्यये इतिपाठः।

### शशिकला

व्यध् धातु बाद में होने पर पूर्ववर्ती ह्रस्व स्वर का दीर्घ हो जाता है, यदि उस व्यध् धातु से बाद में प्रत्यय न हो . जैसे—'श्वावित्'[१] 'हृदयाविधम्'[२] 'मर्माविधम्'[३]। सूत्र में 'प्रत्यय बाद न होने पर' यह क्यों कहा गया ? 'प्रविध्यन्तः'[४] यहाँ न होवे।

## उञ इदमूष्वादिषु ॥ ४ ॥

सू० अ०—'इदमू षु' इत्यादि में उकार का ( दीर्घ हो जाता है )।

### निर्मलभाष्यम्

इदमूष्वादिषु इदमूषु इत्यादिषु उञः उ इत्यस्य दीर्घः भवति। यथा—'इदमू षु' ( सं० १.२४.४ )। सूत्रे प्रयुक्तेन 'आदिषुं' इत्यनेन ज्ञायते यदन्यत्रापि भवति। तद्विषये निदर्शनं द्रष्टव्यम्—'तदू षु' ( सं० ५.१.५ ) 'महीमू षु' ( सं० ७६.२ ) 'अन्यमू षु' ( सं० १८.१.१६ ) 'स्तुष ऊ षु' (सं० १८.१.३६ ) 'त्यमू षु' ( सं० ७८५.१ ) 'पर्यू षु' ( सं० ५.६.४ ) 'पर ऊ त एकम्' ( सं० १८.३.७ ) ॥ ४ ॥

### शशिकला

इदमू षु इत्यादि में उकार का दीर्घ हो जाता है। जैसे— इदमू षु'[५]। सूत्र में प्रयुक्त आदि में' से ज्ञात होता है कि अन्यत्र भी होता है। उस विषय में उदाहरण द्रष्टव्य है -'तदू षु'[६] 'महीमू षु'[७] 'अन्यमू षु'[८] 'स्तुष ऊ षु' 'त्यमू षु'[१०] 'पर्यू षु'[११] 'पर ऊ त एकम्'[१२] ॥ ४ ॥

---

१. श्वावित् ( श्व-वित् ) (प० पा०)
२. हृदयाविधम् ( हृदय-विधम् ) (प० पा०)
३. मर्माविधम् ( मर्म-विधम् ) (प० पा०)
४. प्र-विध्यन्तः (प० पा०)
५. इदम्। ॐ इति। सु (प० पा०)
६. तत्। ॐ इति। सु (प० पा०)
७. महीम्। ॐ इति। सु (प० पा०)
८. अन्यम्। ॐ इति। सु (प० पा०)
९. स्तुषः। ॐ इति। सु (प० पा०)
१०. त्यम्। ॐ इति। सु (प० पा०)
११. परि। ॐ इति। सु (प० पा०)
१२. परः। ॐ इति। ते। एकम् (प० पा०)

## ओषधेरपञ्चपद्याम् ॥ ५ ॥

सू० अ०—पञ्चपदी में न होने पर ओषधि के ( अन्त्य स्वर का दीर्घ हो जाता है )।

### निर्मलभाष्यम्

पुल्लिङ्गस्य प्रथमाविभक्तौ एकवचनं द्विवचनं बहुवचनं द्वितीयाविभक्तौ एकवचनं द्विवचनं च इति पञ्चपदी । अपञ्चपद्यां पञ्चपद्यामविद्यमाने ओषधेः ओषधि इत्यस्य अन्त्यस्वरस्य दीर्घः भवति । यथा – 'ओषधीभिः' ( सं० २.१०.२ ) 'ओषधीभ्यः' ( सं० ६.२०.३ ) 'ओषधीनाम्' (सं० ( सं० ३.५.१ ) 'ओषधीषु' ( सं० १.३०.३ ) । अपञ्चपद्यामिति किम् ? 'त्वामोषधिः' ( सं० ७.३८.५ ) इत्यत्र माभूत् ॥ ५ ॥

### शशिकला

पुल्लिङ्ग के प्रथमा विभक्ति में एकवचन, द्विवचन बहुवचन तथा द्वितीया विभक्ति में एकवचन और द्विवचन—ये पाँच पञ्चपदी हैं। पञ्चपदी में न होने पर ओषधि के अन्त्य स्वर का दीर्घ हो जाता है। जैसे—'ओषधीभिः'[1] 'ओषधीभ्यः'[2] 'ओषधीनाम्'[3] 'ओषधीषु'[4] । पञ्चपदी में न होने पर-यह क्यों कहा गया ? 'त्वामोषधिः'[5] यहाँ अन्त्य स्वर का दीर्घ न होवे ॥ ५ ॥

## जीवन्तीमोषधीम्[6] ॥ ६ ॥

सू० अ०—'जीवन्तीमोषधीम्' में ( ओषधि के अन्त्य स्वर का दीर्घ हो जाता है।

### निर्मलभाष्यम्

'जीवन्तीमोषधीम्' इत्यत्र ओषधि इत्यस्यान्त्यस्य स्वरस्य दीर्घः भवति। यथा—जीवन्तीमोषधीम्' ( सं० ८.२.६, ८.७.६ )। जीवन्तीमिति किम् ? 'खनाम्योषधिम्' ( सं० ३.१८.१, ४.४.१ ) इत्यत्र माभूत् ॥ ६ ॥

---

१. ओषधीभिः (प० पा०)
२. ओषधीभ्य (प० पा०)
३. ओषधीनाम् (प० पा०)
४. ओषधीषु (प० पा०)
५. त्वाम् । ओषधिः (प० पा०)
६. (क) 'ओषधीमहं' इति पाठः।

### शशिकला

'जीवन्तीमोषधीम्' में ओषधि के अन्त्य स्वर का दीर्घ हो जाता है। जैसे —'जीवन्तीमोषधीम्'[1]। सूत्र में जीवन्तीम् यह क्यों कहा गया ? 'खनाम्योषधिम्'[2] यहाँ ओषधि के अन्त्य स्वर का दीर्घ न होवे ॥ ६ ।

## साढः ॥ ७ ॥

**सू० अ०**—साढः में ( अकार का दीर्घ हो गया है )।

### निर्मलभाष्यम्

**साढः** इत्यत्र अकारस्य दीर्घः जातः। यथा—'साढः परस्तराम्' ( सं० ५.३०.९ ) 'आषाढा ऊर्जम्' ( सं० १९.७.४ ) ॥ ७ ॥

### शशिकला

साढः में अकार का दीर्घ हो गया है। जैसे—'साढः परस्तराम्'[3] 'आषाढा ऊर्जम्'[4] ॥ ७ ॥

## बहुलं रात्रेः ॥ ८ ॥

**सू० अ०**—रात्रि के ( अन्त्य स्वर का ) प्रायः ( दीर्घ हो जाता है )।

### निर्मलभाष्यम्

बहुलं प्रायेण, न तु सर्वत्र। **रात्रे** रात्रि इत्यस्य अन्त्यस्य स्वरस्य **बहुलं** प्रायेण दीर्घः भवति। यथा—'रात्रीणाम्' ( सं० ४.५.४ ) 'रात्रीभिः' ( सं० १८.१.१० )। बहुलमिति किम् ? सर्वत्र न। यथा—'एकां रात्रिम्' ( सं० १५.१३.१ ) इत्यत्र न भवति ॥ ८ ॥

### शशिकला

बहुल का अर्थ है—प्रायः, सर्वत्र नहीं। रात्रि के अन्त्य स्वर का प्रायः दीर्घ हो जाता है। जैसे—'रात्रीणाम्'[5] रात्रीभिः'[6]। सूत्र में बहुलं का प्रयोग क्यों किया गया ? सर्वत्र नहीं होता। जैसे—'एकां रात्रिम्'[7] ॥८॥

---

१. जीवन्तीम्। ओषधीम् (प० पा०)
२. खनामि। ओषधिम् (प० पा०)
३ साढः। परः–तराम् ( प० पा० )
४. आषाढाः। ऊर्जम् ( प० पा० )
५. रात्रीणाम् (रात्रि-नाम्) ( प० पा० )
६. रात्रीभिः (रात्रि-भिः) ( प० पा० )　　७. एकाम्। रात्रिम् ( प० पा० )

## विश्वस्य नरवसुमित्रेषु ॥ ९ ॥

**सू० अ०**—नर, वसु तथा मित्र बाद में होने पर विश्व के ( अन्त्य स्वर का प्रायः दीर्घ हो जाता है )।

### निर्मलभाष्यम्

**नरवसुमित्रेषु** नर वसु मित्र इत्येतेषु परेषु विश्व इत्यस्य अन्त्य-स्वरस्य बहुलं दीर्घः भवति। यथा—'विश्वानरे अक्रमत' (सं० ४.११.७) 'या विश्वावसुम्' ( सं० २.२.४ ) 'गविष्ठिरं विश्वामित्रम्' ( सं० ४.२९ ५ ) 'विश्वामित्रोऽयम्' ( सं० १८.३ १५ ) 'विश्वामित्र जमदग्ने ( सं० १८ ३. १६ )। 'विश्वमित्राः' ( सं० १८.३.६३, १८.४.५४ ) इत्यत्र विश्वस्याकारस्य दीर्घः न प्राप्यते ॥ ९ ॥

### शशिकला

नर वसु तथा मित्र बाद में होने पर विश्व के अन्त्य स्वर का प्रायः दीर्घ हो जाता है। जैसे—'विश्वानरे अक्रमत'[१] 'या विश्वावसुम्'[२] 'गविष्ठिरं विश्वामित्रम्'[३] 'विश्वामित्रोऽयम्'[४] 'विश्वामित्र जमदग्ने'[५]। 'विश्वमित्राः'[६] यहाँ विश्व के अन्त्य स्वर का दीर्घ नहीं प्राप्त होता ॥ ९ ॥

## शुनः पदे ॥ १० ॥

**सू० अ०**—पद बाद में होने पर श्वन् के ( ह्रस्व स्वर का प्रायः दीर्घ हो जाता है।

### निर्मलभाष्यम्

**पदे** पद इत्यस्मिन्परे **शुनः** श्वनित्यस्य ह्रस्वस्वरस्य बहुलं दीर्घः भवति। यथा—'सर्वं श्वापदम्' ( सं० ११.९.१० ) 'श्वापदो मक्षिकाः ( सं० ११.१०.८ ) 'उत वा श्वापदः' ( सं० १८.३.५५ )। 'श्वपदामिव' ( सं० ८.५ ११, १९.३९ ४ ) इत्यत्र दीर्घः न प्राप्यते ॥ १० ॥

---

१. विश्वानरे (विश्व-नरे) ( प० पा० )
२. विश्वावसुम् (विश्व-वसुम्) ( प० पा० )
३. विश्वामित्रम् (विश्व-मित्रम्) ( प० पा० )
४. विश्वामित्रः। अयम् ( प० पा० )
५. विश्वामित्रः। जमदग्ने ( प० पा० )
६. विश्व-मित्राः ( प० पा० )

## शशिकला

पद बाद में होने पर श्वन् के ह्रस्व स्वर का प्रायः दीर्घ हो जाता है। जैसे—'सर्वं श्वापदम्'[1] श्वापदो मक्षिकाः'[2] 'उत वा श्वापदः'[3]। 'श्वपदामिव'[4] में ह्रस्व स्वर का दीर्घ नहीं मिलता ॥ १० ॥

# उपसर्गस्य नामिनो दस्ति ॥ ११ ॥

सू० अ० दा धातु का तकार बाद में होने पर उपसर्ग के नामिन् ( स्वर का दीर्घ हो जाता है )।

## निर्मलभाष्यम्

अवर्णव्यतिरिक्ताः सर्वे स्वराः नामिनः। दः दाधातोः **ति** तकारे परे **नामिनः** नामिन्स्वरान्तस्य **उपसर्गस्य** ह्रस्वस्वरस्य दीर्घः भवति। यथा—'प्रतीत्तम्' ( सं० ९.९२.२ )। ह्विटनीमहाभागस्य व्याख्यया ज्ञायते यत्पूर्वभाष्यकारेण नीत्ता' वित्ता' 'परीत्ति इत्यपि निदर्शनं दत्तं, यत् शौनकशाखायाः संहितायां न प्राप्यते। नामिनः इति किम् ? अत्र तेन 'प्रत्तम्' 'अवत्तम्' इत्यत्र माभूत् इत्यपि निदर्शनं दत्तम्, तदपि संहिताया न दृश्यते ॥ ११ ॥

## शशिकला

अवर्ण से अन्य सभी स्वर नामिन् कहलाते हैं। दाधातु का तकार बाद में होने पर नामिनान्त उपसर्ग के ह्रस्व स्वर का दीर्घ हो जाता है। जैसे—'प्रतीत्तम्'। ह्विटनी महाभाग की व्याख्या से ज्ञात होता है पूर्व भाष्यकार ने नीत्ता' 'वीत्ता' परीत्ति' ये भी उदाहरण दिया है जो शौनकशाखा की संहिता में नहीं मिलते। सूत्र में 'नामिनः' यह क्यों कहा गया ? इस विषय में उसने 'प्रत्तम्' अवत्तम' यह उदाहरण दिया है—ये भी संहिता में नहीं मिलते ॥ ११ ॥

---

१. सर्वम् । श्वापदम् (श्व-पदम्) ( प० पा० )
२. श्वापदः (श्व-पदः) । मक्षिकाः ( प० पा० )
३. उत । वा । श्वापदः ( प० पा० )
४. श्वपदाम्—इव ( प० पा० )

## वर्त्तादिषु ॥ १२ ॥

सू० अ०—वर्त इत्यादि बाद के होने पर ( उपसर्ग का अन्त्य नामिन् ह्रस्व स्वर दीर्घ हो जाता है )।

### निर्मलभाष्यम्

**वर्त्तादिषु**-वर्त्त इत्यादिषु परेषु उपसर्गस्य नामिनः ह्रस्वस्वरस्य दीर्घः भवति। यथा—'अभीवर्तेन' ( सं० १ २९.१ ) 'प्रतीवर्त्तः' ( सं० ८.५ ४ )। आदिषु इत्यनेन ज्ञायते यदन्येऽपि परे नामिनः उपसर्गस्य ह्रस्वस्वरस्य दीर्घः भवति। तद्विषये निदर्शनं द्रष्टव्यम्—'अभी वार' ( सं० १.३२.४ ) 'वी बर्हेण' ( सं० २ ३३.७ ) 'अभी वर्गे' ( सं० ३.५.२ ) 'परीशासम्' ( सं० ५ १४ ३ ) प्रतीबोधः' ( सं० ८ १.१३ ) 'अनूवृजौ' ( सं० ९.४.१२ ) 'प्रतीकाशः' ( सं० ९.८ ६ ) 'अभीवृता' ( सं० ९.१०.७ ) 'परीवृता' ( सं० १०.८.३१ ) 'सम्परीवृताम्' ( सं० १०.२ ३३ ) 'प्रतीहारः' ( सं० ११.७.१२ ) 'नीविदः' ( सं० ११.७ १९ ) अभीमोदमुदः ( सं० ११ ७.२६ ) 'अभीलापलपः' ( सं० ११.८.२५ ) 'अनूराधम्' ( सं० १९.१५.२ ) 'परीणहि' ( सं० १९.४८.१ ) 'नीनाहम्' ( सं० १९.५७.४ ) 'अनूजहिरे' ( सं० १८ ३.४६ ) ॥ १२ ॥

### शशिकला

'वर्त्त इत्यादि बाद में होने पर उपसर्ग के नामिन् ह्रस्व स्वर का दीर्घ हो जाता है। जैसे—'अभीवर्तेन'[१] 'प्रतीवर्त्तः'[२]। सूत्र में प्रयुक्त 'आदि बाद में होने पर' से ज्ञात होता है कि इससे अन्य बाद में होने पर भी उपसर्ग के नामिन् ह्रस्व स्वर का दीर्घ हो जाता है। उस विषय में ये उदाहरण द्रष्टव्य हैं—'अभीवार······'[३] ॥ १२ ॥

---

१. अभिवर्त्तेन ( प० पा० )

२. प्रतिवर्त्तः ( प० पा० )

३. अभिवार। विबर्हेण। अभिवर्गे। परिशासम्। प्रति-बोधः। अनुवृजौ। प्रतिकाशः। अभि-वृता। परिवृता। सम्-परिवृताम्। प्रतिहारः। निविदः। 'अभिमोद-मुदः। अभिलाप-लपः। अनुराधम्। परिणहि। निनाहम्। अनुजहिरे ( प० पा० )

## अकारस्याभ्यासस्य बहुलम् ॥ १३ ॥

सू० अ०—अभ्यास के अकार का प्रायः (दीर्घ हो जाता है)।

### निर्मलभाष्यम्

धातोः **अभ्यासस्य अकारस्य** बहुलं प्रायेण दीर्घः भवति। यथा—'अभि दाधृषुः' ( सं० १.२७.३ ) 'अभि वावृधे' ( सं० १.२९.५ ) 'वावृधेते' ( सं० ५.१.५ ) 'वावृतुः' ( सं० ५.१९.१३ ) 'सासहे' ( सं० १९.३४.५ ) 'सासहान् इव' ( सं० ३.६.४ ) 'चाक्लृपुः' ( १९.१०.१९ )' तातृषु' ( सं० १८.३.४७ ) 'मामहे' ( सं० २०.१२७.३ )। बहुलमित्यनेन किम् ? 'ससहे' ( सं० १.१६.३, २.५.३ ) इत्यत्र अकारस्य दीर्घः न प्राप्यते ॥ १३ ॥

### शशिकला

धातु के अभ्यास के अकार का प्रायः दीर्घ हो जाता है। जैसे—'अभि दाधृषु'[१] 'अभि वावृधे'[२] 'वावृधेते'[३] 'वावृतुः'[४] 'सासहे'[५] 'सासहान् इव'[६] 'चाक्लृपुः' 'तातृषु'[८] मामहे[९]। सूत्र में बहुलं का प्रयोग क्यों किया गया ? 'ससहे'[१०] में अभ्यास के अकार का दीर्घ नहीं प्राप्त होता ॥ १३ ॥

## जीहीडाहम् ॥ १४ ॥

सू० अ०—जीहीडाहम् में ( अभ्यास के इकार का प्रायः दीर्घ हो जाता है )।

---

१. अभि। दधृषुः ( प० पा० )
२. अभि वव्रृधे ( प० पा० )
३. वव्रृधेते ( प० पा० )
४. वव्रृतुः ( प० पा० )
५. ससहे ( प० पा० )
६. ससहानः ( प० पा० )
७ चक्लृपुः ( प० पा० )
८ ततृषु ( प० पा० )
९. ममहे ( प० पा० )
१०. ससहे ( प० पा० )

### निर्मलभाष्यम्

**जीहीडाहम्** इत्यत्र धातोः अभ्यासस्य इकारस्य प्रायः दीर्घः भवति । यथा—'जीहीडाहम्' ( ४.३२.५ ) । शौनकशाखायाः पैप्लादशाखायाश्च संहितायाम् अभ्यासस्य इकारस्य ह्रस्वमेव प्राप्यते । **ननु**—संहितायां ह्रस्वे विद्यमाने सति किमर्थं सूत्रकारेण विहितमिदं विधानम् । **उच्यते**—कस्याश्चिद् हस्तलिप्यां अथवा अन्यशाखायाः संहितायाम् इकारस्य दीर्घः आसीदेव यस्मात् सूत्रकारेण विधानमिदं विहितम् । 'जिहीडे' ( सं० ६.११६.२ ) इत्यत्रापि ह्रस्वमेव प्राप्यते ॥ १४ ॥

### शशिकला

'जीहीडाहम्' यहाँ धातु के अभ्यास के इकार का दीर्घ हो गया है । जैसे—'जीहीडाहम्'[1] । शौनक तथा पैप्लाद संहिता में धातु के अभ्यास के इकार का ह्रस्व ही मिलता है । **शङ्का** संहिता में ह्रस्व प्राप्त होने पर सूत्रकार ने निरर्थक क्यों ऐसा विधान किया ? **समाधान**—संहिता की किसी हस्तलिपि अथवा अन्य शाखा की संहिता में इकार का दीर्घ सूत्रकार को मिला होगा । इस लिए सूत्रकार ने यह विधान किया है । जिहीडे'[2] यहाँ भी ह्रस्व ही प्राप्त होता है ॥ १४ ॥

## साह्याम् ॥ १५ ॥

**सू० अ०**—साह्याम् में ( प्रायः दीर्घ होता है ) ।

### निर्मलभाष्यम्

**साह्याम्** इत्यत्र पूर्वस्वरस्य बहुलं दीर्घः भवति । यथा—'साह्याम्' ( सं० ४.३२.१ ) । ह्रस्वस्वरस्य निदर्शनं संहितायां न प्राप्यते ॥ १५ ।

### शशिकला

साह्याम् में प्रायः पूर्वस्वर का दीर्घ हो जाता है । जैसे—'साह्याम्'[3] । ह्रस्व स्वर का उदाहरण संहिता में नहीं प्राप्त होता है ॥ १५ ।

## विद्मादीनां शरादिषु ॥ १६ ॥

**सू० अ०**—शर इत्यादि बाद में होने पर विद्म इत्यादि के ( पदान्त स्वर का दीर्घ हो जाता है ) ।

---

१. जिहीड । अहम् ( प० पा० ) २. जिहीडे ( प० पा० )
३. साह्याम् (प० पा०)

## निर्मलभाष्यम्

**शरादिषु** शर इत्यादिषु परेषु **विद्मादीनां** विद्म इत्यादीनां पदान्त्यस्य स्वरस्य दीर्घः भवति। यथा—'विद्मा शरस्य' (सं० १.२.१)। सूत्रे प्रयुक्तेन बहुवचनेन ज्ञायते यदन्यत्रापि भवति। तद्विषये निदर्शनं द्रष्टव्यम्—

**क्रियापदस्य यथा**—'जनयथा च' (सं० १.५.३) 'श्रथया सूपणे' (सं० १.११.३) 'विवेशा योऽस्य' (सं० १.१२.३) 'मृडया नः' (सं० १.१३.२)[1] 'वर्धयता गिरः' (सं० १.१५.२, १९.१.२) 'इलयता सु' (सं० १.१७.४) 'यावया वयम्' (सं० १.२०.३) 'गमया तमः' (सं० १.२१.२) 'यावया वधम्' (सं० १.२१.४)[2] 'नाशया पृषत्' (सं० १.२३.२-३) 'पिबा सुतस्य' (सं० २.१.५) 'श्रुधी हवम्' (सं० २.५.४) 'भवा नः' (सं० २.६.३) 'तिष्ठा शरीरे' (सं० २.३४.५) 'मुञ्चा स्वस्तये' (सं० २.३५.३) 'भजा वसूनि' (सं० ३.४.२,४) 'कृणुता पुनः' (सं० ३ ९.१) 'अनदता हते' (सं० ३.१३.१) 'अवा ददश्नः' (सं० ३ १६.३) 'प्रेता जयता नरः' (सं० ३.१९.७) 'वर्धया रयिम्' (सं० ३.२०.१) 'तानया पसः' (सं० ४.४.६, ६.१०१.२) 'ष्वापया व्युषम्' (सं० ४.५.७) 'तिष्ठा वृक्षः' (सं० ४.७.५) 'कल्पया त्वचा' (सं० ४.१२.५) 'कल्पया त्वम्' (सं० ४,१२.५) 'नयथा पुनः' (सं० ४.१३.१) 'जीवयथा पुनः' (सं० ४.१३.१) 'छापया त्वम्' (सं० ४.१८.४) 'मेधयथा कृशम्' (सं० ४.२१ ६) भरा भोजनानि' (सं० ४.२२ ६) 'खीदा भोजनानि' (सं० ४.२२.७) 'विद्मा तमुत्सम्' (सं० ४.३१.५) 'भरा त्वम्' (सं० ४.३२.३) 'पर्षा स्वस्तये' (सं० ४.३३.८) 'सृजा समदः' (सं० ५.२.३) 'जानीमा सुप्रणीते' (सं० ५.११.५) 'स्वादया सुजिह्वः' (सं० ५.१२.५) 'सृजा रणाणः' (सं० ५.२७.११) 'सुनोता, सोमपा' (सं० ६.२.३) 'उरुष्या णः' (सं० ६.४.३) 'वर्धया त्वम्' (सं० ६.५.३) 'सिञ्चथा मधु' (सं० ६.२२.८) 'एजथा मरुतः' (सं० ६.२२.२) 'जुहुता स्वेश्तत्' (सं० ६.३२.१) 'वर्धया तृणम्' (सं० ६.५४.१) 'चृता बन्धपाशान्' (सं० ६.६३.२०) 'कृणुता बहुन्नमः' (सं० ६.५५.२)

---

१. सं० १.२०.१, १८.३.१६ २. सं० ४.९.७, १२.१.३२

'दूषयता विषम्' ( सं० ६.१००.२ ) 'द्या त्वम्' ( सं० ६ १०३.२-३, १०४.२) 'चक्रमा वयम्' ( सं० ६.११४.१, १० ३ ८ ) 'मादया त्वम्' ( सं० ६.१३० ४ ) 'रुहेमा स्वस्तये' ( सं० ७.६.३ ) 'सुवा भूरि' ( सं० ७.१४.३ ) वि विष्या दृतिम्' ( सं० ७.१८.१ ) प्रणुदा मे' ( सं० ७.३४ १ ) 'भवता मया' ( सं० ७.६०.७ ) 'हन्तना तम्' ( सं० ७.७७.२ ) 'धारया रयिम्' ( सं० ७.८२ ३ ) 'रक्षा पुरस्तात्' ( सं० ८.३.१९ ) 'शुश्रुमा वयम्' ( सं० ८.९.१८ ) 'वेशया धियः' ( सं० ९.१.२५ ) 'विद्मा ते' ( सं० १०.१.२०, १३.३ २१ ) 'स्मा वयम्' ( सं० १०.४.६ ) 'स्था समेतान्' ( सं० १२.३ ३ ) 'जघ्निया वयम्' ( सं० १०.४.१२ ) नह्या सुखानि' ( सं० १०.९.१ ) 'सीदता यूयम्' ( सं० ११.१ १२ ) 'तरता सखायः' ( सं० १२.२.२६-२७ ) 'नुदता सधस्थे' ( सं० १२.२.३० ) कृणुता प्रियम्' ( सं० १२.२.३४ ) 'पचता सुनाथाः' ( सं० १२. ३.२७ ) 'भवता समापः' ( सं० १२ ३.२९ ) 'सृजता पुरा' ( सं० १२.३.४६) 'दीया रथेन' ( सं० १३.१३.८ ) 'भजा वसु' ( सं० १४ १.२५ ) 'चक्रमा कद्ध' ( सं० १८ १.४ ) 'वापया पुनः' ( सं० १८.१.६ ) 'इच्छा सः' ( सं० १८.१.६ ) 'युक्ष्वा रथम्' ( सं० १८.१.२५ ) 'श्रुधी नः' ( सं० १८.१.२५ ) 'वहा नः' ( सं० १८ .१.३० ) कृणुथा सुप्रतीकम्' ( सं० १८.१.३३ ) मृडा जरित्रे' ( सं० १८.१.४० ) 'चक्रमा जुषध्वम्' ( सं० १८.१.५१ ) 'आच्या जानु' ( सं० १८.१.५२ ) जुहोता प्र' ( सं० १८ २.२ ) 'अवता हवेषु' ( सं० १९.१३.११ ) 'भवा गृष्टीनाम्' ( सं० १९.२४.५ ) 'चरा जनम्' ( सं० २०. १२७.१ ) 'सुनोता परिक्षितः' ( २०.१२७.७ ) ।

**निपातस्य यथा**—'एवा रोगम्' ( सं० १.२.४ ) 'एवा ते' ( सं० १.३. ५-९ )[1] 'एवा त्वम्' ( सं० १.११.६ )[2] 'एवा मे' ( सं० २.१५.१-६ )[3] 'एवा मथ्नामि' ( सं० २.३०.१ ) 'एवा भगस्य' ( सं० २.३६.४ ) 'एवा तान्' ( सं० ३.६.३ ) 'एवा देवेभ्यः' ( सं० ४.२३.२ ) 'एवा मह्यम्' ( सं० ४.३९.

१. सं० ६.७.२१, ६.१७.१-४, ६.८५.३ ।

२. सं० ५.२१.४-६, ६.१०५.१-३, १२.५.६५, १४.१.४३ ।

३. सं० ३.६.६, ९.१.११-१३, १६-१७, १०.३.१७-२५ ।

१,३,५ ) 'एवा तृणाम्' ( सं० ६ ४ ३ ) एवा परि' ( सं० ६.८ १,३ ) 'एवा नि' ( सं० ६८.२ )[१] एवा दुष्वप्न्यम्' ( सं० ५ ४६ ३ )[२] एवा विश्वेषु' ( सं० ६ ५८ २ ) एवा विधेमः' ( सं० ६ ९७ १ ) 'एवा माम्' ( सं० ६. १०२.१ ) 'एवा मित्रषि' ( ६ १३८ ५ ) एवा कामस्य' ( सं० ६ १३९ ५ ) 'एवा सहस्रपोषाय' ( सं० ६.१४१.३ ) 'एवा स्त्रीणाम्' ( सं० ७,१३ १ ) 'एवा मत्' ( सं० १० १.१३ ) 'एवा धातुः' ( सं० १० २ २५ ) 'एवा सपत्नान्' ( सं० १० ३ १३-१५ ) 'एवा मयि' ( सं० १०.६ ३३ ) 'एवा तस्मै' ( सं० ११ ४ १९ ) 'एवा ह' ( सं० १२ ४.३४ ) 'एवा वपामि' सं० १८.४. ५५ ) 'एवा रात्रिः' ( सं० १९.५०.४ ) 'अत्रा सुहार्दः' ( सं० ३.२८.२ )[३] यत्रा नरः' ( सं० ६.२२.२ ) 'यत्रा सुपर्णा' ( सं० ९ ९ २२ ) 'अत्रा नः' ( सं० १८ १.५ ) 'अत्रा मही' ( सं० ५ १ ५ ) 'अत्रा पिता' (सं० ९ १० १२ ) अत्रा जहीतः' ( सं० १२ २ २६-२७ ) 'अद्या पुरीय' ( सं० ८ ४.१५ ) 'अद्या ममार' ( सं० ९ १० ९ ) 'आ घा ता' ( सं० १८ १ १० ) 'अच्छा वदेह' (सं० ३ १० २ ) 'अच्छा नः' ( सं० ६.३९ २ ) 'चा सुहुते' ( सं० ७.४ १ ) चा समन्ते' ( सं० १० ८ १२ ) 'उता शविष्ठः' ( सं० ९.९७.१ )।

**नामपदस्य यथा**—'तेना ते' ( सं० १.३.१ ) 'तेना वः' सं० ३ १४. १ ) 'तेना वयम्' ( सं० ३.१६.५ ) 'तेना सहस्येना' ( सं० ४.५ १ ) 'तेना नो' ( सं० ६.७.१ ) 'तेना जनीयते' ( सं० ६ ८२.३ ) 'तेना नि' ( सं० ७.३८.२ ) तेना जनस्यासो' ( सं० १८.२ ३० ) 'तेना वयम्' ( सं० ३ १६.५ ) 'येना दूडाशे' ( सं० १ १३.१ ) 'येना श्रवस्यवः' ( ३ ९ ४ ) 'येना निचक्रे' ( सं० ७.३८ २ ) 'येना सहस्रम्' ( सं० ९.५ १७ ) 'येना पावकः' ( सं० १३ २.२१) 'येना संगच्छा' ( सं० ७.१२ १ ) 'येना ते' ( सं० १८.१.५४ ) 'सहस्येना वयम्' ( सं० ४ ५ १ ) 'भद्रेणा सह' ( सं० ७.६० ७ ) 'आदङ्गा कुविदङ्गा शतम्' (सं० २ ३.२) 'पर्वस्या ग्रभीता' ( सं० १ १२.२ ) 'अमृतेना समङ्धि' ( सं० ३.१२ ८ ) 'काव्येना कृणोमि' ( सं० ५ १ ५ ) 'मर्त्येना सयोनिः' (सं० ९ १० ८ ) 'मातुर्योना परिवीतः' ( सं० ९ १०.१० ) ॥१६॥

## शशिकला

'शर' इत्यादि बाद में होने पर विद्म इत्यादि के अन्त्य स्वर का दीर्घ हो जाता है। जैसे—'विद्मा शरस्य'[४]। सूत्र में प्रयुक्त बहुवचन से ज्ञात होता है कि इससे 'अन्यत्र भी होता है। उस विषय में ये उदाहरण

---

१. सं० ६.१३९.४। २. सं० १९.५७.१।
३. सं० ६.१२०.३, ६.१.३। ४. विद्म। शरस्य (प० पा०)

द्रष्टव्य हैं—क्रिया पद का जैसे 'जनयथा च' '.........'[१] । निपात का

१. जनयथ । च (प० पा०) अथय । सूपणे (प० पा०) विवेश । यः (प० पा०) मृडय । नः (प० पा०) वर्धयत । गिरः (प० पा०) इलयत । सु (प० पा०) यावय । वयम् (प० पा०) गमय । तमः (प० पा०) यावय । वधम् (प० पा०) नाशय । पृषत् (प० पा०) पिब । श्रुतस्य (प० पा०) श्रुधि । हवम् (प० पा०) भव । नः (प० पा०) तिष्ठ । शरीरे (प० पा०) मुञ्च । स्वस्तये (प० पा०) भज । वसूनि (प० पा०) कृणुत । पुनः (प० पा०) अनदत । हते (प० पा०) अव । ददश्नः (प० पा०) जयत । नरः (प० पा०) वर्धय । रयिम् (प० पा०) तानय । पशः (प० पा०) श्वापय । वि (प० पा०) तिष्ठ । वृक्षः (प० पा०) कल्पय । त्वचा (प० पा०) कल्पय । त्वम् (प० पा०) नयथ । पुनः (प० पा०) जीवयथ । पुनः (प० पा०) छापय । त्वम् (प० पा०) मेघयथ । कृशम् (प० पा०) भर । भोजनानि (प० पा०) खीद । भोजनानि प० पा०) विद्म । तम् (प० पा०) भर । त्वम् (प० पा०) पर्ष । स्वस्तये (प० पा०) सृज । समदः (प० पा०) जानीम । सु–प्रणीते (प० पा०) स्वदय । सु–जिह्वः (प० पा०) सृज । रणाणः (प० पा०) सुनोत । सोमपा (प० पा०) उरुष्य । नः (प० पा०) वर्धय । त्वम् (प० पा०) सिञ्चथ । मधु (प० पा०) रजथ । मरुतः (प० पा०) जुहुत । स्व (प० पा०) वर्धय । तृणम् (प० पा०) चृत । बन्ध-पाशान् (प० पा०) कृणुत । वहत् (प० पा०) दूषयत । विषम् (प० पा०) द्य । त्वम् (प० पा०) चक्रम । वयम् (प० पा०) मादय । त्वम् (प० पा०) रुहेम । स्वस्तये (प० पा०) सुव । भूरि ( प० पा० ) वि–स्य । दृतिम् (प० पा०) प्र-नुद । मे (प० पा०) भवत । मया (प० पा०) हन्तन । तम् (प० पा०) धारय । रयिम् (प० पा०) रक्ष । पुरस्तात् (प० पा०) शुश्रुम । वयम् (प० पा०) वेशय । धियः (प० पा०) विद्म । ते (प० पा०) स्म । वयम् (प० पा०) जघ्निम । वयम् (प० पा०) नह्य । सुखानि (प० पा०) सीदत । यूयम् (प० पा०) तरत । सखायः (प० पा०) नुदत । सध–स्थे (प० पा०) कृणुत । प्रियम् (प० पा०) पचत । सुनाथाः (प० पा०) भवत । सम् । आपः (प० पा०) सृजत । पुरा (प० पा०) दीय । रथेन (प० पा०) भज । वसु (प० पा०) चक्रम । कत् (प० पा०) वापय । पुनः (प० पा०) इच्छ । सः (प० पा०) युक्ष्व । रथम् (प० पा०) श्रुधि । नः (प० पा०) वह । नः (प० पा०) कृणुथ । सु–प्रतीकम् (प० पा०) मृड । जरित्रे (प० पा०) चक्रम । जुषध्वम् (प० पा०) आच्य । जानुः (प० पा०) जुहोत । प्र (प० पा०) अवत । हवेषु (प० पा०) भव । गुष्टीनाम् (प० पा०) चर । जनम् (प० पा०) सुनोत । परिक्षितः (प० पा०) ।

जैसे—'एवा रोगम्' '........ '[1]। नामपद का जैसे—'तेना ते'[2] ॥१६॥

## बहुलं मतौ ॥ १७ ॥

**सू० अ०**—मतुप् ( अर्थ वाला प्रत्यय ) बाद में होने पर ( पूर्ववर्ती स्वर ) प्रायः दीर्घ हो जाता है।

### निर्मलभाष्यम्

**मतौ** मत्वर्थीये प्रत्यये परे पूर्वस्य स्वरस्य **बहुलं** प्रायेण दीर्घः भवति। यथा—अश्वावतीः सूनृतावतीः' ( सं० ३ १२ २ ) 'अश्वावतीर्गोमतीः' ( सं० ३ १६ ७ ) 'अश्वावतीम्' ( सं० १८ २.३१ ) वरणावत्याम्' ( सं० ४.७.१ )

१. एव। रोगम् (प० पा०) एव। ते (प० पा०) एव। त्वम् (प० पा०) एव। मे (प० पा०) एव। मथ्नामि (प० पा०) एव। भगस्य (प० पा०) एव। तान् (प० पा०) एव। देवेभ्यः (प० पा०) एव। मह्यम् (प० पा०) एव। तृणाम् (प० पा०) एव। परि (प० पा०) एव। नि (प० पा०) एव। दुः—स्वप्न्यम् (प० पा०) एव। विश्वेषु (प० पा०) एव। विघ्नेमः (प० पा०) एव। माम् (प० पा०) एव। भिनषि (प० पा०) एव। कामस्य (प० पा०) एव। सहस्र-पोषाय (प० पा०) एव। स्त्रीणाम् (प० पा०) एव। मत् (प० पा०) एव। धातुः (प० पा०) एव। सपत्नम् (प० पा०) एव। मयि (प० पा०) एव। तस्मै (प० पा०) एव। ह (प० पा०) एव। वपामि (प० पा०) एव। रात्रिः (प० पा०) यत्र। सुहार्द (प० पा०) यत्र। नरः (प० पा०) यत्र। सु—पर्णा (प० पा०) यत्र। नः (प० पा०) अत्र। मही (प० पा०) अत्र। पिता (प० पा०) अत्र। जहीत (प० पा०) अद्य। मुरीय (प० पा०) अद्य। ममार (प० पा०) आ। घ। ता (प० पा०) अच्छा। वद। इह (प० पा०) अच्छा। नः (प० पा०) स्म। वयम् (प० पा०) स्म। समेतन् (प० पा०) च। सुहुते (प० पा०) च। समन्ते (प० पा०) उत। शविष्ठः (प० पा०)।

२. तेन। ते (प० पा०) तेन। वः (प० पा०) तेन। सहस्येन (प० पा०) तेन। नः (प० पा०) तेन। जनीयते (प० पा०) तेन। नि (प० पा०) तेन। जन-स्यासः (प० पा०) तेन। वयम् (प० पा०) येन। दूडाशे (प० पा०) येन। श्रवस्यवः (प० पा०) येन। नि-चक्रे (प० पा०) येन। सहस्रम् (प० पा०) येन। पावकः (प० पा०) येन। सम्—गच्छ (प० पा०) येन। ते (प० पा०) भद्रेण। सह (प० पा०) अमृतेन। समङ्ग्धि (प० पा०) काव्येन। कृणोमि (प० पा०) मर्त्येन। सयोनिः (प० पा०)।

'मदावति' ( सं० ४.७.४ ) 'समावती' ( सं० ४.१८.१ ) 'प्रियावते' ( सं० ४. १८.४ ) 'उत्तरावन्तम्' ( सं० ४.२२.४ ) 'वीर्यावती' ( सं० ४.३७.६ ) 'वृष्ण्यावन्' ( सं० ५.२५.८ ) 'भङ्गुरावतः' ( सं० ७.७१.१ ) 'अशितावती' ( सं० ९.६.३८ ) 'रोचनावती' ( सं० १३.३.१० ) 'दक्षिणावन्तः' ( सं० १८. ३.१० ) 'इष्ठावनी' ( सं० १८.३.२० ) 'क्रदीवतः' ( सं० ७.९०.३ ) 'विषूवति' ( सं० ९.३.८ ) 'सत्यावान्' ( सं० ४.२९.१-२ ) 'त्विषीमती' ( सं० ४. १९.२ )। बहुलमिति किम् ? संहितायां मत्वर्थीये प्रत्यये परेऽपि कुत्रचित् पूर्वस्वरस्य ह्रस्वः एव प्राप्यते। यथा—'घृतवती' ( सं० ३.१२.२ ) 'वीरवती' ( सं० ३.१६.७ ) 'अश्ववान्' ( सं० ६.६८.३, १८.३.६१ ) 'वीर्यवान्' ( सं० ८.५.१, १८.४.३८ ) ॥ १७ ॥

## शशिकला

मत्वर्थीय प्रत्यय बाद में होने पर पूर्ववर्ती स्वर का प्रायः दीर्घ हो जाता है। जैसे—'अश्वावतीः सूनृतावती' ' ......'[1]। सूत्र में 'बहुलं' के प्रयोग से ज्ञात होता है कि संहिता में कुछ स्थलों पर मत्वर्थीय प्रत्यय बाद में होने पर भी पूर्ववर्ती स्वर ह्रस्व ही रहता है। जैसे—'घृतवती' ' ......'[2] ॥१७॥

## इच्छायाञ्च यकारादौ ॥ १८ ॥

सू० अ०—यकार है आदि में जिसके ऐसा इच्छार्थक प्रत्यय बाद में होने पर ( ह्रस्व स्वर का प्रायः दीर्घ हो जाता है )।

## निर्मलभाष्यम्

चशब्दोऽत्र बहुलम् इत्यस्यान्वादेशकः। **यकारादौ** यकारः आदौ यस्य तस्मिन् **इच्छायाम्** इच्छार्थके प्रत्यये परे पूर्वस्वरस्य बहुलं दीर्घः भवति।

---

1. अश्व–वतीः। सूनृत–वतीः ( प० पा० ) अश्व–वतीः। गोमतीः ( प० पा० ) अश्व–वतीम् ( प० पा० ) वरण–वत्याम् ( प० पा० ) मद–वतिः (प० पा०) सम–वती (प० पा०) प्रिय–वते (प० पा०) उत्तर–वन्तम् (प० पा०) वीर्य–वती (प० पा०) वृष्ण्य–वन् (प० पा०) भङ्गुर–वतः (प० पा०) अशित–वती (प० पा०) रोचन–वती (प० पा०) दक्षिण–वन्तः (प० पा०) इष्ठ–वनी (प० पा०) क्रदि–वतः (प० पा०) विषु–वति (प० पा०) सत्य–वान् (प० पा०) त्विषि–मती ( प० पा० )।
2. घृत–वती (प० पा०) वीर–वती (प० पा०) अश्व–वान् (प० पा०) वीर्य–वान् (प० पा०)।

यथा—'अध्वरीयताम्' (सं० १ ४ १) 'वृषायमाणः' (सं० २.५ ७) 'शत्रूयतीम्' (सं० १०.१ २६)। संहितायां ह्रस्वोऽपि प्राप्यते। यथा—'अरातियात्' (सं० ४ ३६.१) 'जनियन्ति' (सं० १४.२ ७२) 'पुत्रियन्ति' (सं० १४ २, ७२) 'मृगयुः' (सं० १०.१,२६)॥ १८।

## शशिकला

सूत्र में प्रयुक्त चशब्द यहाँ बहुलम् का अन्वादेशक है। यकार है आदि में जिसके ऐसा इच्छार्थक प्रत्यय बाद में होने पर पूर्ववर्ती ह्रस्व स्वर का प्रायः दीर्घ हो जाता है। जैसे – अध्वरीयताम्'[१] वृषायमाणः'[२] 'शत्रूयतीम्'[३]। संहिता में कहीं कहीं ह्रस्व भी प्राप्त होता है। जैसे—'अरातियात्'[४] 'जनियन्ति'[५] 'पुत्रियन्ति'[६] 'मृगयुः'[७]॥ १८।

## तृतीयान्तस्य ॥ १९ ॥

**सू० अ०**—तृतीया विभक्ति के अन्त्य स्वर का (प्रायः दीर्घ हो जाता है।

## निर्मलभाष्यम्

**तृतीयान्तस्य** तृतीयायाः पदस्यान्ते विद्यमानस्य ह्रस्वस्वरस्य प्रायः दीर्घः भवति। यथा—'येना सहर्षम्' (सं० ९.५.१७) तेना ते' (सं० ५.३. १–५)[८] 'तेना वः (सं० ६.२४.३) तेना जनीयते' (सं० ६ ८२.३) 'तेना नि (सं ७.३८.२) 'तेना जनस्यासः' (सं० १८.२.३०) 'येना दूडाशे' (सं० १.१३.१) 'येना श्रवस्यवः' (सं० ३.९.४) 'येना सङ्गच्छा उप' (सं० ७.१२.१) येना नि चक्रे' (सं० ७.३८.२) 'येना सहस्रम्' (सं० ९. ५.१७) 'येना पावकः' (सं० १३.२.२१) 'येना ते' (सं० १८.१.५४)

---

१. अध्वरि–यताम् (प० पा०)
२. वृष -यमाणः (प० पा०)
३. शत्रु–यतीम् (प० पा०)
४. अराति–यात् (प० पा०)
५. जनि–यन्ति (प० पा०)
६. पुत्रि–यन्ति (प० पा०)
७. मृग–युः (प० पा०)
८ सं० ३ ७ ३, ४.७.१, ६.१२.१–२, ६.८०.१, ३, ६.९१.१

'भद्रेणा सह' ( सं० ७.६०.७, 'अमृतेना समाधिः' ( सं० ३.१२.८ ) 'काव्येना कृणोमि' ( सं० ५.१.५ ) 'मर्त्येना सयोनिः' ( सं० ९.१०.८, १६ ) 'सहस्येना वयम्' ( सं० ४.५ १ )। उल्लेखनीयमत्र यत् तृतीयाविभक्तौ एकवचने एव पदस्यान्ते स्वरः प्राप्यते। नान्यत्र द्विवचने बहुवचने च। अत एव एकवचनस्यैव स्वरस्य दीर्घः भवति। संहितायां तृतीयान्तस्य ह्रस्वोऽपि प्राप्यते। यथा—'केन श्रोत्रियम्' ( सं० १.२.२० ) ॥ १९ ॥

## शशिकला

तृतीयान्त ह्रस्व स्वर का प्रायः दीर्घ होता है। जैसे—'येना सहर्षम्' '.........'[1]। यहाँ उल्लेखनीय है कि तृतीया विभक्ति के एक वचन में ही अन्त में स्वर प्राप्त होता है, अन्य द्विवचन तथा बहुवचन में नहीं। अत एव यहाँ एकवचनान्त ह्रस्व स्वर के दीर्घ होने का विधान किया गया है। संहिता में तृतीयान्त ह्रस्व स्वर भी मिलता है। जैसे—केन श्रोत्रियम्'[2] ॥ १९ ॥

## रलोपे पूर्वस्य[3] ॥ २० ॥

सू० अ०—रेफ का लोप होने पर पूर्ववर्ती ( स्वर ) का ( दीर्घ हो जाता है )।

## निर्मलभाष्यम्

'रेफस्य रेफे' ( २ १ १९ ) इत्यनेन रेफस्य लोपः उक्तः। **रलोपे** रेफस्य लोपे **पूर्वस्य** उपधायाः दीर्घः भवति। यथा पुरूची रायः' ( सं० २ १३ ३ ) इत्यत्र 'नाम्युधस्य रेफः' ( २ २ ३ ) इत्यनेन विसर्जनीयस्य रेफः। रेफे परे विसर्जनीयस्थाने प्राप्तस्य रेफस्य लोपः भवति। तत्पश्चात् प्रस्तुतविधानेन उपधायाः दीर्घः भवति ॥ २० ॥

---

१. येन। सहर्षम् (प० पा०) तेन। ते (प० पा०) तेन। वः (प० पा०) तेन। जनीयते (प० पा०) तेन। नि (प० पा०) तेन। जनस्यासः (प० पा०) येन। दूडाशे (प० पा०) येन। श्रवस्यवः (प० पा०) येन। सञ्चच्छ। उप (प० पा०) येन। नि। चक्रे (प०पा०) येन। सहस्रम् (प० पा०) येन। पावकः (प० पा०) येन। ते (प० पा०) भद्रेण। सह (प० पा०) अमृतेन। समाधिः (प० पा०) काव्येन। कृणोमि (प० पा०) मर्त्येन। सयोनिः (प० पा०) सहस्येन। वयम् (प० पा०)।

२ केन। श्रोत्रियम् (प० पा०)

३. (ख) पूर्वस्य इति नास्ति।

## शशिकला

'रेफ बाद में होने पर रेफ का लोप हो जाता है' से रेफ का लोप कहा गया है। रेफ का लोप होने पर उपधा का दीर्घ हो जाता है। जैसे—'पुरूची रायः'[1] यहाँ 'नामिन् उपधा वाले विसर्जनीय का रेफ हो जाता है' से विसर्जनीय का रेफ प्राप्त होता है। रेफ बाद में होने पर विसर्जनीय के स्थान में प्राप्त रेफ का लोप हो जाता है तथा प्रस्तुत विधान से उपधा का दीर्घ हो जाता है ॥ २० ॥

## नारकादीनां प्रथमस्य ॥ २१ ॥

सू० अ०—नारक इत्यादि में प्रथम ( स्वर का दीर्घ हो जाता है )।

## निर्मलभाष्यम्

**नारकादीनां** नारक इत्यादीनां **प्रथमस्य** ह्रस्वस्य स्वरस्य दीर्घः भवति। 'नारकं लोकम्' ( सं० १२ ४.३६ )। सूत्रे प्रयुक्तेन आदीनाम् इत्यनेन ज्ञायते यदन्यत्रापि भवति। तद्विषये निदर्शनं द्रष्टव्यम्—'यमस्य सादनम्' ( सं० २.१२.७ ) 'आसत इन्द्रः' ( सं० ८.४.८ ) 'सूयमान्' ( सं० ४.२७.१ ) 'सूयवसे' ( सं० ४.२१.७ ) 'सूयवसात्' ( सं० ७.७३.११ ) ॥ २१ ॥

## शशिकला

नारक इत्यादि में प्रथम ह्रस्व स्वर का दीर्घ हो जाता है। जैसे—'नारकं लोकम्'[2]। सूत्र में प्रयुक्त 'आदि का' से ज्ञात होता है कि इससे अन्यत्र भी होता है। उस विषय में ये उदाहरण द्रष्टव्य हैं—'यमस्य सादनम्'[3] 'आसत इन्द्रः'[4] 'सूयमान्'[5] 'सूयवसे'[6] सूयवसात्'[7] ॥ २१ ॥

---

१. पुरुचीः। रायः (प० पा०) यहाँ (प० पा०) से नहीं ज्ञात होता कि पुरुचीः में ह्रस्व इकार था जिसका इस विधान से दीर्घ हुआ है। प्रस्तुत विधान से ही इसके ह्रस्व होने का ज्ञान होता है।

२. नरकम्। लोकम् (प० पा०)

३. यमस्य। सदनम् (प० पा०)

४. असतः। इन्द्रः (प० पा०)

५. सु–यमान् (प० पा०)

६. सु–यवसे (प० पा०)

७. सु–यवसा (प० पा०)

## दीदायादीनां द्वितीयस्य ॥ २२ ॥

**सू० अ०**—दीदायत् इत्यादि में द्वितीय ( स्वर ) का ( दीर्घ हो गया है )।

### निर्मलभाष्यम्

**दीदायादीनां** दीदायत् इत्यादीनां **द्वितीयस्य** स्वरस्य दीर्घः जातः। यथा—'दीदायत्' ( सं० ३.८.३ )। आदीनामित्यनेन ज्ञायते यदन्यत्रापि भवति। तद्विषये निदर्शनं द्रष्टव्यम्— उषासः' ( सं० ३.१६.७ ) उषासानक्ता' ( सं० ५ १२.६ ) 'उषासम्' ( सं० १३.२.४६ ) 'श्रथाय ( सं० ७.८३.३ ) ॥ २२ ॥

### शशिकला

दीदायत् इत्यादि में द्वितीय स्वर का दीर्घ हो गया है। जैसे—'दीदायत्'[1]। सूत्र में 'आदि का' से ज्ञात होता है कि इससे अन्यत्र भी होता है। इस विषय में उदाहरण द्रष्टव्य हैं 'उषासः'[2] 'उषासानक्ता'[3] 'उषासम्'[4] 'श्रथाय'[5] ॥ २२ ॥

## सात्रासाहादीनामुत्तरपदाद्यस्य ॥ २३ ॥

**सू० अ०**—सात्रासाह इत्यादि ( सावग्रहपद ) में उत्तर पद के आदि के ( ह्रस्व स्वर का दीर्घ हो गया है )।

### निर्मलभाष्यम्

**सात्रासाहादीनां** सात्रासाह इत्यादीनाम् सावग्रहपदानाम् **उत्तरपदाद्यस्य** उत्तरपदस्य आदौ विद्यमानस्य ह्रस्वस्वरस्य दीर्घः जातः। यथा—सात्रासाहस्य' ( सं० ५.१३.६ )। सूत्रे प्रयुक्तेनादीनाम् इत्यनेन ज्ञायते यदन्यत्रापि जातः। तद्विषये निदर्शनं द्रष्टव्यम्—'अमित्रसाहः (सं० १.२० ४) 'विषासहि' ( सं० १.२९.६ ) अभिमातिसाहः' ( सं० ४.३२.४ ) 'न्यायनम्' ( सं० ६.७७.२ ) 'उक्थशासः' ( सं० १८.३.२१ ) ॥ २३ ॥

---

१. दीदयत् (प० पा०)
२ उषसः (प० पा०)
३. उषासानक्ता (प० पा०)
४. उषसम् (प० पा०)
५. श्रथय (प० पा)

### शशिकला

'सात्रासाह्' इत्यादि में सावग्रह पद के उत्तर पद के आदि में विद्यमान ह्रस्व स्वर का दीर्घ हो गया है। जैसे 'सात्रासाहस्य'[१]। सूत्र में प्रयुक्त 'आदि का' से ज्ञात होता है कि इससे अन्यत्र भी सावग्रहपद के उत्तर पद के आदि में विद्यमान ह्रस्व स्वर का दीर्घ हो जाता है। उस विषय में ये उदाहरण द्रष्टव्य हैं 'अमित्रसाहः'[२] 'विषासहिः'[३] 'अभिमातिसाहः'[४] न्यायनम्'[५] उक्थशासः'[६] ॥ २३ ॥

## ऋत वृधवरीवानेषु ॥ २४ ॥

**सू० अ०**—वृध, वरी तथा वान बाद में होने पर ऋत के (अन्त्य स्वर का दीर्घ हो जाता है)।

### निर्मलभाष्यम्

**वृधवरीवानेषु** वृध, वरी, वान इत्येतेषु परेषु **ऋतः** ऋत इत्यस्यान्त्यस्य स्वरस्य अकारस्य दीर्घः भवति। यथा–'ऋतावृधः' ( सं० ११६.१९ ) 'ऋतावरी' ( सं० ६.६२.१ ) 'ऋतावानम्' ( सं० ६.३६.१ ) ॥ २४ ॥

### शशिकला

वृध, वरी तथा वान बाद में होने पर ऋत के अन्त्य स्वर अकार का दीर्घ हो जाता है। जैसे—'ऋतावृधः'[७] 'ऋतावरी'[८] 'ऋतावानम्'[९] ॥२४॥

## अध त्यंधीःपरवर्जम् ॥ २५ ॥

**सू० अ०**—त्यम् और धीः से अन्य पद बाद में होने पर अध के (पदान्त्य ह्रस्व स्वर का दीर्घ हो जाता है)।

---

१. सात्रा–सहस्य (प० पा०)
२. अमित्र–सहः (प० पा०)
३. वि–ससहिः (प० पा०)
४. अभिमाति–सहः (प० पा०)
५ नि। अयनम् (प० पा०)
६. उक्थ–शसः (प० पा०)
७. ऋत–वृधः (प० पा०)
८. ऋत–वरी (प० पा०)
९. ऋत–वानम् (प० पा०)

## निर्मलभाष्यम्

**अधः** इत्यस्यान्त्यस्य ह्रस्वस्य अकारस्य दीर्घः भवति। परश्च **त्यंधीपरवर्जम्** त्यम् धी इत्येतयोः परयोः दीर्घः न भवति। यथा— 'अधा मिथः' ( सं० १.२७.४ ) 'अधा मनः' ( सं० ३.४.४ ) 'अधा नः' (सं० ३.२१.५) 'अधा वृत्राणि' ( सं० ४.३२.७ ) 'अधा हि' ( सं० ५ २२.२ ) 'अधा न्यक्' ( सं० ५.२२.२ ) अधा वयम्' ( सं० ७.३१.१ ) 'अधा समिन्धे' ( सं० ७.८२.२ ) 'अधा सः' ( सं० ८ ४.१५ ) 'अधा महिम्' (सं० १०.२.७) 'अधा विषस्य' ( सं० १४.४ २५ ) अधा पक्वान्' ( सं० १२.३.२,९ ) 'अधा सपत्नान्' ( सं० १३ १.३० ) 'अधा सरस्वत्यै' ( सं० १४.२.२० ) 'अधा कृणुष्व' ( सं० १८.१ १६ १८.२.११ ) 'अधा मृता' (सं० १८ ४.४८) 'अधा मासि' ( सं० १८.४ ६३ ) 'अधा जीवेम' ( सं० १८.४.७० ) 'अधा यथा' ( सं० १८.३.२१ ) 'अधा पितॄन्' ( सं० १८ २ ११, २३ )। त्यंधीःपरवर्जम् इति किम् ? 'अध त्यं द्रप्सम्' ( सं० १८ १.२१ ) 'अधा धीरजायत' ( सं० १८ १.२१ ) इत्यत्र माभूत् ।। २५ ।।

।। इति श्रीमत्पण्डितदशरथपाठकसूनुना डा० जमुनापाठकेन कृते निर्मलभाष्ये चतुरध्यायिकायाः तृतीयाध्यायस्य प्रथमः पादः ।।

## शशिकला

अध के अन्त्य स्वर अकार का दीर्घ हो जाता है। किन्तु त्यं तथा धी बाद में होने पर दीर्घ नहीं होता। जैसे—'अधा मिथः' '.........'[1]। सूत्र में त्यम् और धी बाद में होने पर यह क्यों कहा गया ? 'अध त्यं द्रप्सम्[2] 'अध धीरजायत्'[3] यहाँ दीर्घ न होवे ।। २५ ।।

।। चतुरध्यायिका के तृतीय अध्याय के प्रथम पाद की डा० जमुनापाठक कृत शशिकला व्याख्या समाप्त ।।

---

१. अध। मिथः (प० पा०) अध। मनः (प० पा०) अध। नः (प० पा०) अध। वृत्राणि (प० पा०) अध। हि (प० पा०) अध। न्यक् (प० पा०) अध। वयम् (प० पा०) अध। सम्-इन्धे (प० पा०) अध। सः (प० पा०) अध। महीम् (प० पा० अध। विषस्य (प० पा०) अध। पक्वान् (प०पा०) अध। सपत्नान् (प० पा०) अध। सरस्वत्यै (प० पा०) अध। कृणुष्व (प० पा०) अध। मृता (प० पा०) अध। मासि (प० पा०) अध। जीवेम (प० पा०) अध। यथा (प० पा०) अध। पितॄन् (प० पा०)

२. अध। त्यम्। द्रप्सम् (प० पा०)　　३. अध। धीः। अजायत् (प० पा०)

# अथ द्वितीयः पादः

[ द्वित्वविधानम् ]

## पदान्ते व्यञ्जनं द्विः ॥ १ ॥

**सू० अ०**—पदान्त में व्यञ्जन दो बार (उच्चारित होता है)।

### निर्मलभाष्यम्

पदान्ते विद्यमानानां वर्णानां निर्देशः 'अन्लृकारः स्वरः पद्यः' (१.४.४) इत्यतः 'न चवर्गः' ( १.१.७ ) पर्यन्तं कृतः। **पदान्ते** पदस्य अन्ते विद्यमानं **व्यञ्जनं द्विः** द्विरुच्चारितं भवति। यथा—'गोधुक्' ( सं० ७.७३.३ ) 'विराट्' ( सं० ८.९८ ) 'दृशत्' (सं० २.३१.१) 'त्रिष्टुप्' (सं० ८९.२०)। ननु गोधुक् इत्यादिषु पदान्तस्य व्यञ्जनस्य द्वित्वं संहितायां न प्राप्यते। कथं सूत्रकारेण पदान्तस्य व्यञ्जनस्य द्वित्वं निर्दिष्टम्। **उच्यते**—द्वित्वं नाम संयुक्तव्यञ्जनानाम् उच्चारणवैशिष्ट्यम्, न तु लिपिवैशिष्ट्यम्। अतएव संहितायां लिप्याभावेऽपि द्वित्वमुच्चारणीयम् ॥ १ ॥

### शशिकला

'लृकार से अन्य स्वरवर्ण पदान्तीय होते हैं' से लेकर 'चवर्गीय स्पर्श-वर्ण पदान्तीय नहीं होते' तक पदान्तीय वर्णों का निर्देश किया गया है। उन पदान्तीय व्यञ्जनों का दो बार उच्चारण होता है। जैसे—'गोधुक्' 'विराट्' 'त्रिष्टुप्'। **शंका**—गोधुक् इत्यादि में पदान्त व्यञ्जन का द्वित्व संहिता में नहीं मिलता। सूत्रकार ने पदान्त व्यञ्जन के दो बार उच्चारण का निर्देश क्यों किया है ? **समाधान**—द्वित्व संयुक्त व्यञ्जनों का उच्चारण-वैशिष्ट्य है, लिपि-वैशिष्ट्य नहीं। इसलिए संहिता में लिपि का अभाव होने पर भी पदान्त व्यञ्जन द्विरुच्चारित होना चाहिये ॥१॥

## ङणना ह्रस्वोपधाः स्वरे ॥ २ ॥

**सू० अ०**—स्वर बाद में होने पर ह्रस्व उपधा वाला ( पदान्त ) ङकार, णकार तथा नकार द्विरुच्चारित होता है।

### निर्मलभाष्यम्

ह्रस्वोपधाः ह्रस्व उपधा येषां ते ङणनाः ङकारः णकारः नकारश्च स्वरे परे द्विरुच्चारितः भवति। यथा—'प्रत्यङ् उद्' (सं० १३ २.२०) 'उद्यन् आदित्यः' (सं० २.३२.१) 'सुगण् आस्ते' (लौकिकम्)। ह्रस्वोपधाः इति किम्? 'अर्वाङ् आकूत्या चर' (सं० ३ २ ३) इत्यत्र दीर्घोपधः ङकारः न द्विरुच्चारितः भवति। स्वरे इति किम्? 'उदङ् जातः (सं० ५ ४ ८) इत्यत्र व्यञ्जने परे न द्विरुच्चारितः भवति ॥ २।

### शशिकला

ह्रस्व उपधा है जिनकी ऐसे ङकार, णकार तथा नकार स्वर बाद में होने पर द्विरुच्चारित होते हैं। जैसे—'प्रत्यङ् उद्'[1] 'उद्यन् आदित्य'[2]। 'सुगण् आस्ते' यह लौकिक उदाहरण है। सूत्र में 'ह्रस्व उपधा वाला' यह क्यों कहा गया? 'अर्वाङ् आकूत्या चर'[3] यहाँ दीर्घ उपधा वाले का द्विरुच्चारण न होवे। सूत्र में 'स्वर बाद में होने पर' यह क्यों कहा गया? 'उदङ् जातः'[4] यहाँ व्यञ्जन बाद में होने से दो बार उच्चारण न होवे ॥ २ ॥

## संयोगादि स्वरात् ॥ ३ ॥

सू० अ०—स्वर से बाद में होने पर संयोग का आदि (व्यञ्जन दो बार उच्चारित होता है)।

### निर्मलभाष्यम्

'व्यञ्जनान्यव्यवेतानि स्वरैः संयोगः' (१ ४ ७) इत्यनेन संयोगः उक्तः। संयोगादि संयोगस्य आदिव्यञ्जनं द्विरुच्चारितं भवति। यथा-'अग्निः' (सं० १.७.४) वृक्षः' (सं० ४ ७ ५)। उच्चारणवैशिष्ट्यात् संहितायां द्वित्वं न प्राप्यते ॥ ३ ॥

### शशिकला

'स्वर से अव्यवहित व्यञ्जन संयोग कहलाता है' से संयोग कहा जा चुका है। उस संयोग का आदि व्यञ्जन दो बार उच्चारित होता है। जैसे—

---

१. प्रत्यङ्। उत् (प० पा०)
२. उद्यन्। आदित्यः (प० पा०)
३. अर्वाङ्। आकूत्यै (प० पा०)
४. उदङ्। जातः (प० पा०)

'अग्निः' 'वृक्षः'। उच्चारणवैशिष्ट्य होने के कारण संहिता में द्वित्व नहीं मिलता ॥ ३ ॥

## छकारश्च[1] ॥ ४ ॥

**सू० अ०**—( संयोगादि न होने भी ) छकार ( दो बार उच्चारित होता है)।

### निर्मलभाष्यम्

च शब्दोऽत्र स्वरे इत्यस्यान्वादेशकः। स्वरे परे असंयोगादिः छकारः द्विरुच्चारितः भवति। यथा—'अच्छिन्नपर्णेन' ( सं० १९.३२.२ ) ॥ ४ ॥

### शशिकला

चशब्द यहाँ स्वर बाद में होने पर का अन्वादेशक है। स्वर बाद में होने पर असंयोगादि छकार भी दो बार उच्चारित होता है। जैसे—'अच्छिन्नपत्रेण' ॥ ४ ॥

## पिपल्यादिषु पूर्वात्[2] ॥ ५ ॥

**सू०अ०** - पिप्पली इत्यादि में पूर्ववर्ती से ( बाद वाला पकार दो बार उच्चारित होता है )।

### निर्मलभाष्यम्

**पिप्पल्यादिषु च** पिप्पली इत्यादिषु च **पूर्वात्** पूर्वपकारात् परः पकारः द्विरुच्चारितः भवति। यथा— पिप्पली' ( सं० ६ १०९.१ )। बहुवचनेन ज्ञायते यदन्यत्रापि भवति। तद्विषये निदर्शनं द्रष्टव्यम्—'पिप्पल्यः' ( सं० ६ १०९.२ ) 'पिप्पलम्' ( ९ १४.२० ) ॥ ५ ।

### शशिकला

पिप्पली इत्यादि में पूर्ववर्ती से बाद वाला पकार दो बार उच्चारित होता है। जैसे—'पिप्पली'। सूत्र में प्रयुक्त बहुवचन से ज्ञात होता है कि इससे अन्यत्र भी होता है। उस विषय में ये उदाहरण द्रष्टव्य हैं–'पिप्पल्यः' 'पिप्पलम्' ॥ ५ ॥

---

१. (ख) सूत्रमिदं नास्ति। तत्र * * * इति ताराङ्कितं विद्यते। प्रतीयते यत् पाण्डुलिप्यां सूत्रमिदमस्पष्टमथवा च्युतं जातम्। यस्माद् ह्विटनीमहाभागेन ताराङ्कितं कृतम्।

२. (ख) सूत्रमिदं नास्ति।

## न विसर्जनीयः ॥ ६ ॥

**सू० अ०**—पदान्त में विसर्जनीय ( दो बार उच्चारित नहीं होता )।

### निर्मलभाष्यम्

'पदान्ते व्यञ्जनं द्विः' ( ३.२.१ ) इत्यस्यापवादोऽयम्। पदान्ते विसर्जनीयः द्विरुच्चारितः न भवति। यथा—'अग्निः' (सं० १.७.४) 'वृक्षः' ( सं० ४.७.५ ) ॥ ६ ॥

### शशिकला

'पदान्त में व्यञ्जन दो बार उच्चारित होता है' इसका यह अपवाद है। पदान्त में विद्यमान विसर्जनीय द्विरुच्चारित नहीं होता। जैसे-'अग्नि' 'वृक्षः' ॥ ६ ॥

## सस्थाने च ॥ ७ ॥

**सू० अ०**—समान स्थान वाला (व्यञ्जन) बाद में होने पर (संयोग का आदि व्यञ्जन दो बार उच्चारित नहीं होता )।

### निर्मलभाष्यम्

'संयोगादि स्वरात्' ( ३.२.३ ) इत्यस्यापवादोऽयम्। चशब्दोऽत्र न इत्यस्यान्वादेशकः। **सस्थाने** समानोच्चारणस्थानीये व्यञ्जने परे संयोगादि व्यञ्जनं द्विरुच्चारितं न भवति। यथा—'इन्द्रः' ( सं० १.९.१ ) 'चन्द्रः' ( सं० २.१५.३ ) 'मन्द्रः' ( सं० १८.१.३० ) 'राष्ट्रम्' (सं० ३.४.१ ) ॥७॥

### शशिकला

'संयोग का आदि व्यञ्जन दो बार उच्चारित होता है' का यह अपवाद है। सूत्र में प्रयुक्त चशब्द यहाँ 'न' का अन्वादेशक है। समान उच्चारण स्थान वाला व्यञ्जन बाद में होने पर संयोग का आदि व्यञ्जन दो बार उच्चारित नहीं होता। जैरे—'इन्द्रः' 'चन्द्रः' 'मन्द्रः' 'राष्ट्रम्' ॥७॥

## रेफहकारौ परं ताभ्याम् ॥ ८ ॥

**सू० अ०**—( संयोगादि ) रेफ तथा हकार ( दो बार उच्चारित नहीं होता ) किन्तु उस ( रेफ तथा हकार ) से परवर्ती ( व्यञ्जन दो बार उच्चारित होता है )।

### निर्मलभाष्यम्

रेफश्च हकारश्च **रेफहकारौ**। संयोगादि रेफः हकारश्च द्विरुच्चारितः न भवति, परश्च **ताभ्यां** रेफहकाराभ्याम् **परं** व्यञ्जनं द्विरुच्चारितं भवति। यथा—'ब्रह्म' ( सं० १.१०.४ ) 'अपराह्णः' ( सं० ९.६.४६ )। अत्रापि उच्चारणवैशिष्ट्यात् संहितायां द्वित्वं न प्राप्यते॥ ८॥

### शशिकला

संयोग का आदि वाला रेफ तथा हकार दो बार उच्चारित नहीं होता किन्तु उस रेफ तथा हकार से परवर्ती व्यञ्जन द्विरुच्चारित होता है। जैसे—'ब्रह्म' अपराह्णः'। उच्चारणवैशिष्ट्य होने के कारण संहिता में द्वित्व नहीं प्राप्त होता॥ ८॥

## शषसाः स्वरे॥ ९॥

**सू० अ०**—स्वर बाद में होने पर ( रेफ तथा हकार से परवर्ती ) शकार, षकार तथा सकार ( दो बार उच्चारित नहीं होते )।

### निर्मलभाष्यम्

**स्वरे** परे रेफहकाराभ्यां परः शकारः षकारः सकारश्च द्विरुच्चारितः न भवति। यथा—'कर्शफस्य' ( सं० ३.९.१ ) 'शीर्षाणि' ( सं० १.७.७ ) 'चर्षणीनाम्' ( सं० १.५.४ ) 'शीर्षक्त्या' ( सं० १.१२.३ ) 'नार्षदेन' ( सं० ४ १९.२ ) 'उद्धर्षय' ( सं० ५.२०८ )। स्वरे इति किम्? 'पार्ष्णी' ( सं० १० २.१ ) इत्यत्र द्वित्वनिषेधः माभूत्॥ ९॥

### शशिकला

स्वर बाद में होने पर रेफ तथा हकार से बाद में शकार, षकार तथा सकार दो बार उच्चारित नहीं होते। जैसे—'कर्शफस्य' 'शीर्षाणि' 'चर्षणीनाम्' 'शीर्षक्त्या' 'नार्षदेन' 'उद्धर्षय'। 'स्वर बाद में होने पर' यह क्यों कहा गया? 'पार्ष्णी' यहाँ द्वित्व का निषेध न होवे॥ ९॥

### [ प्रकृतिभावविधानम् ]

## प्रगृह्याश्च प्रकृत्या॥ १०॥

**सू० अ०**—( स्वर बाद में होने पर ) प्रगृह्य (स्वर ) प्रकृतिभाव से ( रहते हैं )।

## निर्मलभाष्यम्

'·····प्रगृह्याश्च' ( १.३.११ ) इत्यतः 'आमन्त्रितं चेतावनार्षे' ( १. ३.१९ ) पर्यन्तं प्रगृह्यः उक्तः। चशब्दोऽत्र स्वरे इत्यस्यान्वादेशकः। स्वरे परे **प्रगृह्याश्च** प्रगृह्यसंज्ञकाः स्वराः **प्रकृत्या** प्रकृतिभावेन स्थिताः भवन्ति। यथा – पार्ष्णी आभृते' (सं · १०.२१) इन्द्राग्नी आ भरताम्' (सं० ६.७.६) इत्यत्र 'स्वरे नामिनोऽन्तःस्था' ( ३.२.१६ ) इत्यनेन अन्तःस्थप्राप्तिः। 'इन्द्रवायू उभौ' ( सं० ३.१०.६ ) इत्यत्र 'समानाक्षरस्य सवर्णे दीर्घ' ( ३.२. १९) इत्यनेन दीर्घप्राप्तिः। तन्निषिध्यते। प्रस्तुतविधानेन प्रकृत्या एव ॥ ०॥

## शशिकला

'(अपृक्त उकार ) प्रगृह्य कहलाता है' से अनार्ष इति बाद में होने पर आमन्त्रित ओकार प्रगृह्य कहलाता है' तक प्रगृह्य संज्ञा का विधान किया गया है। सूत्र में प्रयुक्त च शब्द 'स्वर बाद के होने पर' का अन्वादेशक है। स्वर बाद में होने पर प्रगृह्य स्वर प्रकृतिभाव से रहते हैं। जैसे—पार्ष्णी आभृते'[1] 'इन्द्राग्नी आ भरताम्'[2] यहाँ स्वर बाद में होने पर नामिन् स्वर का अन्तःस्थ हो जाता है' से प्रगृह्य स्वर के अन्तःस्थ की प्राप्ति थी तथा 'इन्द्रवायू उभौ'[3] यहाँ 'सवर्ण बाद में होने पर समानाक्षर का पूर्वपर एकादेश दीर्घ हो जाता है' से एकादेश दीर्घ की प्राप्ति थी जिसका निषेध हुआ है। प्रस्तुत विधान से प्रगृह्य स्वर प्रकृतिभाव से रहता है ॥ १० ॥

## एना एहा आदयश्च ॥ ११ ॥

सू० अ० -'एना एहा' आदि भी ( प्रकृतिभाव से रहते हैं )।

## निर्मलभाष्यम्

चशब्दोऽत्र प्रकृत्या इत्यस्यान्वादेशकः। **एना एहाः आदयश्च प्रकृत्या** भवन्ति। 'एना एहा' इत्यादिषु स्थलेषु प्रकृतिभावः एव। यथा—'एना एहाः' ( सं० १२.३.३३ )। आदयः इत्यनेन ज्ञायते यदन्यत्रापि प्रकृत्या भवन्ति। तद्विषये निदर्शनं द्रष्टव्यम्—'अपगा असः' ( सं० १.३४.५ )[4] 'पृथिवी उत' ( सं० १८.१.१५ ) 'अधिष्ठाता अन्तिकात्' ( सं० ४.१६.१ ) ॥ ११ ॥

---

१. पार्ष्णी इति। आभृते (प०पा०)

२. इन्द्राग्नी इति। आ। भरताम् (प० पा०)

३. इन्द्रवायू इति। उभौ (प० पा०)

४. सं० २.३०.१, ६.८.१-३

## शशिकला

सूत्र में प्रयुक्त च शब्द यहाँ 'प्रकृतिभाव से' का अन्वादेशक है। 'एना एहाः' इत्यादि स्थलों पर प्रकृतिभाव होता है। जैसे—'एना एहाः'[१]। आदयः से ज्ञात होता है कि इससे अन्यत्र भी प्रकृतिभाव होता हैं। उस विषय में ये उदाहरण द्रष्टव्य हैं—'अपगा असः'[२] 'पृथिवी उत'[३] 'अधिष्ठाता अन्तिकात्'[४] ॥ ११ ॥

## यवलोपे ॥ १२ ॥

**सू० अ०**—यकार तथा वकार का लोप होने पर ( पूर्ववर्ती स्वर प्रकृतिभाव से रहता है )।

## निर्मलभाष्यम्

'स्वराद्यवयो पदान्तयोः' ( २.१.२१ ) इत्यनेन स्वरात् पदान्तीयस्य यकारस्य वकारस्य च लोपः उक्तः। तस्मिन् **यवलोपे** यकारस्य वकारस्य च लोपे जाते पूर्वस्वरः स्वरे परेऽपि प्रकृत्या भवति। यथा-'क आसञ्जन्त्याः' ( सं० ११.८.१ ) 'वाय उदकेन' ( सं० ६.६८.१ )' अस्या इच्छन्' ( सं० ६.६०.१) इत्यत्र' सन्ध्यक्षराणामयवायावः' (३ २ १७) इत्यनेन के इत्यस्यैकारस्य स्थाने अय्भावे 'कय्' वायो इत्यस्य औकारस्य अव्भावे 'वायय्' अस्यै इत्यस्य ऐकारस्य स्थाने आयभावे अस्याय् प्राप्तः। स्वराद् एतेषां पदान्तानां यवानां 'स्वराद्यवयोः पदान्तयोः' (२.२.२१) इत्यनेन लोपः। तस्मिन् लोपे पूर्वस्वरः प्रकृत्या विद्यते। परस्वरेण सन्धिविकारं नाप्नोति। 'स उ' ( सं० १३.४५ ) 'ता इमा आपः' ( सं० १५ ५.७ ) इत्यत्र सः, ताः, इमाः इत्येतेषां विसर्जनीयस्य 'स्वरे यकारः' ( २.२ २ ) इत्यनेन यकारः प्राप्तः। तस्य यकारस्य 'स्वराद्यवयोः पदान्तयोः' ( २.१ २१ ) इत्यनेन लोपः जातः। तस्मिन् लोपे जाते पूर्वस्वरः प्रकृत्या भवति। संहितायां विधानस्यास्यापवादोऽपि प्राप्यते। यथा—'कृत्येति त्वा' ( सं० १० १.१५ ) अत्र कृत्यै इत्यत्र ऐकारस्य आय्भावे यकारस्य लोपश्च [illegible]तः इकारपरे 'अवर्णस्येवर्ण एकारः (३.२.२१) इत्यनेन एकादेशः एकारः [illegible]। यत्कृते विधानः न कृतः ॥ १२ ॥

---

१. एना। एहाः (प० [illegible])
२. अपगा। असः (प०पा०)
३. पृथिवी। उत (प०पा०)
४. अधि-स्थाता। अन्तिकात् (प० पा०)

### शशिकला

'स्वर से बाद में पदान्तीय यकार तथा वकार का लोप हो जाता है' से पदान्त यकार तथा वकार के लोप का विधान किया गया है। उस यकार तथा यकार के लोप होने पर स्वर बाद में होने पर भी पूर्ववर्ती स्वर प्रकृतिभाव से रहता है। जैसे—'क आसञ्जन्याः'[१] 'वाय उदकेन'[२] 'अस्या इच्छन्'[३]। यहाँ 'स्वर बाद में होने पर सन्ध्यक्षरों का क्रमशः अय्, अव्, आय् तथा आव् हो जाता है' से 'के' के एकार का अय् होने पर कय् 'वायो' के ओकार का अव् होने पर वायव् तथा अस्यै के ऐकार का आय् होने पर अस्याय् प्राप्त होता है। 'स्वर से बाद में पदान्त यकार तथा वकार का लोप हो जाता है' से उस प्राप्त यकार तथा वकार का लोप हो जाता है। यकार तथा वकार का लोप होने पर पूर्ववर्ती स्वर प्रकृतिभाव से रहता है—परवर्ती स्वर के साथ सन्धि विकार को नहीं प्राप्त होता। 'स उ'[४] 'ता इमा आपः'[५]। यहाँ स्वर बाद में होने पर विसर्जनीय का यकार हो जाता है' से स्वर बाद में होने पर 'सः' 'ताः' तथा इमा' के विसर्जनीय का यकार प्राप्त होता है। उस यकार का स्वर से बाद में पदान्त यकार तथा वकार का लोप हो जाता है' से लोप हो जाता है। अतः यकार का लोप होने पर प्रस्तुत विधान से पूर्व स्वर प्रकृतिभाव से रहते हैं। संहिता में इस विधान का अपवाद भी प्राप्त होता है जिसके लिए सूत्रकार ने कोई विधान नहीं किया है। जैसे—कृत्येति त्वा[६]। यहाँ कृत्यै के ऐकार का आय् होने से कृत्याय् प्राप्त होता है। उस यकार का लोप होने पर भी परवर्ती इति के इकार के साथ 'इवर्ण बाद में होने पर अवर्ण का पूर्वपर एकादेश एकार हो जाता है' से आकार का एकार हो गया है। सूत्रकार ने इस अपवाद के लिए कोई विधान नहीं किया है॥ १२॥

## केवल उकारः स्वरपूर्वः ॥ १३ ॥

सू० अ०—स्वर है पूर्व में जिसके ऐसा अपृक्त उकार (प्रकृतिभाव से रहता है)।

---

१. के। आसन्। जन्याः (प० पा०)
२. वायो। उदकेन (प० पा०)
३. अस्यै। इच्छन् (प० पा०)
४. सः। उँ इति (प० पा०)
५. ताः। इमाः। आपः (प० पा०)
६. कृत्यै। इति। त्वा (प० पा०)

## निर्मलभाष्यम्

स्वरपूर्वः स्वरः पूर्वो यस्य सः **केवलः** अपृक्तः **उकारः** प्रकृत्या भवति। यथा—'स उ एव' ( सं० १३ ४.५ ) 'स उ अस्मानम्' ( सं० १३.४ ४१ ) 'अयं वा उ अग्निः' ( १५ १० ७ )। केवलः इति किम्— विड्वङ्गः' ( सं० ६ १२५.१ ) 'भवन्तूत्तमम्' ( सं० १.९.४ ) 'ह्वयन्तूपसद्यः' ( सं० ३.४ १ ) इत्यादिषु प्रकृत्या माभूत् ॥ १३ ॥

## शशिकला

स्वर है पूर्व में जिसके ऐसा अपृक्त उकार प्रकृतिभाव से रहता है। जैसे -'स उ एव'[१] 'स उ अस्मानम्'[२] 'अयं वा उ अग्निः'[३]। सूत्र में 'केवल' यह क्यों कहा गया? 'विड्वङ्गः'[४] 'भवन्तूत्तमम्'[५] 'ह्वयन्तूपसद्यः'[६] इत्यादि में उकार का प्रकृतिभाव न होवे ॥ १३ ॥

## नमौ सन्ध्यौ ॥ १४ ॥

**सू० अ०**—सन्धि-विषयक ( सन्धि से प्राप्त ) नकार तथा मकार ( प्रकृतिभाव से रहते हैं )।

## निर्मलभाष्यम्

**सन्ध्यौ** सन्धिविषयकौ, सन्धिना जायमानौ इत्यर्थः। सन्ध्यौ **नमौ** नकारमकारौ प्रकृत्या भवतः। यथा— मध्यान्नीचैः' ( सं० ४.१.३ ) 'यः स्तायन् मन्यते' ( सं० ४.१६.१ ) इत्यत्र 'उत्तमा उत्तमेषु' ( २.१५ ) इत्यनेन तकारस्थाने प्राप्तः नकारः प्रकृतिभावेन विद्यते। 'अहन्त्वेडे' ( सं० १४. २.१९ ) इत्यत्र 'मकारस्य स्पर्शे परसस्थानः' ( २.१.३१ ) इत्यनेन मकार-स्थाने प्राप्तः नकारः प्रकृत्या विद्यते। सन्ध्यौ इति किम्? 'पर्वतांश्च' ( सं० १.१२.३ ) पुंसवनम्' ( सं० ६.११.१ ) 'पुंसः' ( सं० ३.६.१ ) इत्यत्र प्रकृत्या माभूत् ॥ १४ ॥

---

१. सः। ॐ इति। एव (प० पा०)
२. सः। ॐ इति। अस्मानम् (प० पा०)
३. अयम्। वा। ॐ इति। अग्निः (प० पा०)
४. विडु–अङ्गः (प० पा०)
५. भवन्तु। उत्तमम् (प० पा०)
६. ह्वयन्तु। उपसद्यः (प० पा०)

### शशिकला

सन्धित्रिषयक ( सन्धि से प्राप्त ) नकार तथा मकार प्रकृतिभाव से रहते हैं। जैसे—'मध्यान्नीचैः'[१] 'यः स्तायन् मन्यते'[२] यहाँ 'उत्तम स्पर्श बाद में होने पर अनुत्तम स्पर्श का उत्तम स्पर्श हो जाता है' 'से तकार के स्थान पर प्राप्त नकार प्रकृतिभाव से हैं। 'अहन्त्वेडे'[३] यहाँ स्पर्श बाद में होने पर मकार का परवर्ती के समान स्थान वाला वर्ण हो जाता है' 'से मकार के स्थान पर प्राप्त नकार प्रकृतिभाव से है। सूत्र में सन्ध्य' यह क्यों कहा गया ? 'पर्वतांश्च'[४] 'पुंसवनम्' 'पुंसः' इत्यादि में प्रकृतिभाव न होवे ॥१४॥

[ अपृक्ताकारस्य सन्धिविधानम् ]

## आकारः केवलः प्रथमं पूर्वेण ॥ १५ ॥

सू० अ०—अपृक्त आकार पहले पूर्ववर्ती ( स्वर ) से ( सन्धि को प्राप्त करता है )।

### निर्मलभाष्यम्

**केवलः** अपृक्तः **आकारः प्रथमं पूर्वेण** पूर्वस्वरेण सह सन्धिं प्राप्नोति। पुनश्च परेण स्वरेण सन्धिः भवति। यथा—'धियेह्या' ( सं० २.५.४ ) 'जुषस्वेन्द्र' ( सं० २.५.४ ) 'स्तनयित्नुनेहि' ( सं० ४.५ १ ) कुष्ठेहि' ( सं० ५.४.१ ) 'उदकेनेहि' ( सं० ६.६८.१ ) अवपश्यतेत' ( सं० १८.४.३७ ) ॥ १५ ॥

### शशिकला

अपृक्त आकार पहले पूर्ववर्ती स्वर से सन्धि को प्राप्त करता है पुनः परवर्ती स्वर से सन्धि होती है। जैसे—'धियेह्या'[५] जुषस्वेन्द्र'[६] 'स्तनयित्नुनेहि'[७] 'कुष्ठेहि'[८] उदकेनेहि'[९] 'अवपश्यतेत'[१०] ॥ १५ ॥

---

१. मध्यात्। नीचैः ( प० पा० ) २. यः। स्तायत्। मन्यते ( प० पा० )
३. अहम्। तु। आ। ईडे (प० पा०) ४. पर्वतान्। च ( प० पा० )
५. धिया। आ। इहि। आ (प० पा०) ६. जुषस्व। आ। इन्द्र ( प० पा० )
७. स्तनयित्नुना। आ। इहि ( प० पा० )
८. कुष्ठ। आ। इहि प० पा०)
९. उदकेन। आ। इहि (प० पा०)
१०. अव-पश्यत। आ। इत (प० पा०)

[ नामिनः अन्तस्थभावः ]

## स्वरे नामिनोऽन्तःस्था ॥ १६ ॥

**सू० अ०**—स्वर बाद में होने पर नामिन् ( स्वर ) का अन्तःस्थ हो जाता है ।

### निर्मलभाष्यम्

**स्वरे** परे **नामिनः** नामिसंज्ञकस्वरस्य **अन्तःस्थः** भवति। अवर्ण-व्यतिरिक्ताः सर्वे स्वराः नामिनः। तेषाम् ए ओ ऐ औ इत्येतानि सन्ध्यक्षराणि। इवर्ण उवर्ण ऋवर्ण लृवर्णश्च समानाक्षराणि। स्वरे सन्ध्यक्षराणां विकारः 'सन्ध्यक्षराणामयवायावः' (३ २.१५) इत्यत्र विहितः। अत एवात्र इवर्ण उवर्ण ऋवर्ण लृवर्णश्च इत्येते एव समानाक्षरनामिन्स्वराः ग्रहीतव्याः। सवर्णस्वरे परे समानाक्षराणाम् एकादेशः दीर्घः 'समानाक्षरस्य सवर्णे दीर्घः' ( ३.२ १९ ) इत्यत्र विहित । अत एवात्र असवर्णे स्वरे परे इति बोधव्यः। एवम् असवर्णस्वरे परे समानाक्षरनामिनः इवर्णस्य, उवर्णस्य, ऋवर्णस्य लृवर्णस्य च अन्तःस्थः भवति। 'आन्तर्येण वृत्तिः' (१.४ ४) इत्यनेन इवर्णस्य यकारः, उवर्णस्य वकारः, ऋवर्णस्य रेफः, लृवर्णस्य लकारश्च। इवर्णस्य यकारः यथा—अभ्यर्चम्' ( सं० ७ ८२.१ )। उवर्णस्य वकारः यथा—विड्वङ्गः' ( सं० ६ १२५ १ )। ऋकारस्य रेफः यथा—मात्रर्थम्' 'पित्रर्थम्' (लौकिकम्)। लृकारस्य लकारः यथा—तलर्थम्' ( लौकिकम् ) ॥ १६ ॥

### शशिकला

स्वर बाद में होने पर नामिन् स्वर का अन्त स्थ हो जाता है। अवर्ण से अन्य स्वर नामिन् हैं। उनमें ए ओ ऐ तथा औ सन्ध्यक्षर और इवर्ण, उवर्ण, ऋवर्ण तथा लृवर्ण समानाक्षर हैं। 'स्वर बाद में होने पर सन्ध्यक्षरों का अय्, अव्, आय् तथा आव् हो जाता है' से स्वर बाद में होने पर सन्ध्यक्षरों का विकार कहा गया है। अतः यहाँ इवर्ण, उवर्ण, ऋवर्ण तथा लृवर्ण इन समानाक्षर नामिन् स्वरों का ही ग्रहण होता है। 'सवर्ण बाद में होने पर समानाक्षरों का पूर्वपर एकादेश दीर्घ हो जाता है' से सवर्ण बाद में होने पर समानाक्षरों का पूर्वपर एकादेश दीर्घ कहा गया है। अतः यहाँ 'असवर्ण स्वर बाद में होने पर ही' ऐसा जानना चाहिए। इस प्रकार असवर्ण स्वर बाद में होने पर नामिन् समानाक्षर इवर्ण, उवर्ण, ऋवर्ण तथा

ऌवर्ण का अन्तःस्थ होता है। 'आदेश समीपता के अनुसार होता है' से इवर्ण का यकार, उवर्ण का वकार, ऋवर्ण का रेफ तथा ऌवर्ण का लकार होता है। इवर्ण का यकार जैसे—'अभ्यर्चम्'[१]। उवर्ण का वकार जैसे - 'वीड्वङ्गः'[२]। ऋकार का रेफ जैसे—'मात्रर्थम्'[३] 'पित्रर्थम्'[४]—ये लौकिक उदाहरण हैं। ऌकार का लकार जैसे—तलर्थम्'[५] यह भी लौकिक उदाहरण है ॥ १६ ॥

[ सन्ध्यक्षराणाम् अयादिभावः ]

## सन्ध्यक्षराणामयवायावः ॥१७॥

**सू० अ०**—(स्वर बाद में होने पर) सन्ध्यक्षरों का (क्रमशः) अय्, अव्, आय् तथा आव् ( हो जाता है )।

### निर्मलभाष्यम्

ए ओ ऐ औ इति सन्ध्यक्षराणि। स्वरे परे **सन्ध्यक्षराणाम्** आनुपूर्व्येण **अयवायावः** अय्, अव्, आय्, आव् भवति। ततश्च 'स्वराद्यवयोः पदान्तयोः' ( १.१.२१ ) इत्यनेन पदान्तस्य यकारस्य वकारस्य च लोपः भवति। अय् यथा—'क आसञ्जन्याः' (सं० १८.८.१) 'क उ ज्येष्ठवरः' ( सं० ११.८.१ )। अव् यथा—'वाय उदकेन' (सं० ६.६८.१) वाय ऊतये' (सं० ४.२५.६)। आय् यथा—'अस्या इच्छन्' ( सं० ६.६० १ )। आव् यथा—'असावादित्यः' (सं० १५.१०.७) इत्यत्र वकारस्यालोपः। 'श्यावके' (सं० २०.१२०.२) 'लवणात्' (सं० ७.८०.१) 'पवनेन' (सं० ४.३४ २) पावकः (सं० ६.४७.१६) इत्यत्रापि 'एचोऽयवायावः' (पा० व्या० ८ ३.१८) इत्यनेन बैयाकरणानुसारं भवितुमर्हति परञ्च प्रातिशाटख्यस्य मते तु पदाः सिद्धाः एव भवन्ति ॥१७॥

### शशिकला

ए, ओ, ऐ तथा औ भी सन्ध्यक्षर है। स्वर बाद में होने पर सन्ध्यक्षरों का क्रमशः अय्, अव्, आय् तथा आव् हो जाता है। पुनः 'स्वर से बाद

---

१. अभि। अर्चत् (प० पा०)
२. विडु-अङ्गः (प० पा०)
३. मातृ + अर्थम्
४. पितृ + अर्थम्
५. तऌ + अर्थम्

में होने पर पदान्त यकार तथा वकार का लोप हो जाता है' से उस पदान्त यकार तथा वकार का लोप हो जाता है। अय् जैसे—'क आसञ्जन्याः'[१] क उ ज्येष्ठवरः'[२]। अव् जैसे–'वाय उदकेन'[३] 'वाय ऊतये'[४]। आय् जैसे—'अस्या इच्छन्'[५]। आव् जैसे—'असावादित्यः'[६] यहाँ पदान्त वकार का लोप नहीं प्राप्त होता। 'श्यावके' 'लवणात्' 'पवनेन' 'पावकः' यहाँ भी 'एच् का क्रमशः अय्, अव्, आय् तथा आव् हो जाता है' से वैयाकरणों के अनुसार हो सकता है किन्तु प्रातिशाख्य के मत तो पद सिद्ध माने गए हैं ॥ १७ ॥

[ अधिकारकथनम् ]

## पूर्वपरयोरेकः ॥१८॥

सू० अ०—पूर्ववर्ती तथा परवर्ती ( दोनों ) के स्थान पर एक आदेश होता है )।

### निर्मलभाष्यम्

अधिकारोऽयम्। 'समानाक्षरस्य सवर्णे दीर्घः' (३.२ १७) इत्यादितः **पूर्वपरयोरेकः** इत्यस्याधिकारः वेदितव्यः। **पूर्वपरयोः** पूर्वस्य परस्य च स्थाने एकः एकादेशः भवति। पदान्तस्य पदादेश्च तयोः द्वयोः स्थाने एकादेशः भवतीत्यर्थः ॥१८॥

### शशिकला

यह अधिकार सूत्र है। 'सवर्ण बाद में होने पर समानाक्षर का पूर्वपर एकादेश दीर्घ हो जाता है' इस विधान से लेकर इसका अधिकार प्रारम्भ होता है। पूर्ववर्ती तथा परवर्ती दोनों के स्थान पर एकादेश होता है। पदान्त और पदादि दोनों के स्थान पर एक ही आदेश होता है—यह अर्थ है ॥१८॥

---

१. के। आसन्। जन्याः (प० पा०)
२. के। ॐ इति। ज्येष्ठ-वरः (प० पा०)
३. वायो। उदकेन (प० पा०)
४. वायो। ऊतये (प० पा०)
५. अस्यै। इच्छन् (प० पा०)
६. असौ। आदित्यः (प० पा०)

[ समानाक्षरस्य सवर्णे दीर्घभावः ]

## समानाक्षरस्य सवर्णे दीर्घः ॥१९॥

**सू० अ०**—सवर्ण बाद में होने पर समानाक्षर का (पूववर्ती तथा परवर्ती दोनों के स्थान में एकादेश) दीर्घ (होता है)।

### निर्मलभाष्यम्

अवर्णं इवर्णं उवर्णं ऋवर्णं ऌवर्णश्च समानाक्षरम्। **सवर्णे** परे **समानाक्षरस्य** पूर्वपरयोः स्थाने एकादेशः दीर्घः भवति। अवर्णस्य दीर्घः यथा—'वज्रेणाधि' ( सं० २ १०.४ ) 'येनाग्ने' ( सं० ९.५ १७ ) 'इन्द्राग्नी' (सं० ५.७.६)। इवर्णस्य दीर्घः यथा—'एणीव' (सं० ५.१४.११) 'मृगीव' (सं० ५.१४ ११) 'महीयम्' (सं० ९ १० १२) 'अभीहि' (सं० ४ ३२.३) 'भिन्धीदम्' (सं० ७.१८.१)। उवर्णस्य दीर्घः यथा—'भवन्तूत्तमम्' ( सं० १.९ ४ ) 'उक्षन्तूद्गा' ( सं० ३ १२ ४ ) 'ह्वयन्तूपसद्यः' ( सं० ३ ४.१ )। ऋवर्णस्य ऌवर्णस्य निदर्शनं शौनकशाखायाः संहितायां न प्राप्यते। सवर्णे इति किम् ? 'जुषस्वेन्द्रः' ( सं० २ ५.४ ) 'शङ्खेनोत ( सं० ४ १० ३ ) इत्यादिषु असवर्णे दीर्घः माभूत्। सवर्णसंज्ञा सूत्रकारेण नोपदिष्टा। शौनकमते 'अष्टौ समानाक्षराण्यादितः' ( ऋ० प्रा० १.१ ) इत्यनेन स्वराणां आदितः अष्टौ वर्णाः समनाक्षरसंज्ञकाः भवन्ति। तैत्तिरीयप्रातिशाख्ये 'द्वे द्वे सवर्णे ह्रस्वदीर्घे' ( तै० प्रा० १ ३ ) इत्यनेन द्वे द्वे ह्रस्वदीर्घे परस्परं सवर्णसंज्ञकः उक्तः। सवर्णं नाम सादृश्यम्। सवर्णस्वरयोः स्थानकरणाभ्यान्तरप्रयत्नानां सादृश्यं भवति। अत एव कात्यायनेनोक्तम्—'समानस्थानकरणास्यप्रयत्नं सवर्णम्' ( वा० प्रा० १ ४३ )। पाणिनिनाप्युक्तम्—'तुल्यास्यप्रयत्नं सवर्णम्' (पा० व्या० १.१.९)। यथा इकारस्य ईकारस्य च स्थानं तालुः, करणं जिह्वामध्यम्, आभ्यन्तरप्रयत्नं च विवृतम्। अत एव एतौ द्वौ परस्परं सवर्णम्। एवमन्येऽपि बोधव्यम्।

**ननु**—अकारस्याकारस्य च उच्चारणस्थानं कण्ठं करणञ्च अधोकण्ठं जिह्वामूलं वा सममेव परञ्च तयोराभ्यन्तरप्रयत्नं पृथगेव। अकारस्याभ्यन्तरप्रयत्नं संवृतम्। आकारस्य विवृतं च। अत एव कथम् एतयोः सवर्णत्वम्। **उच्यते**—'सवर्णवच्च' (वा० प्रा० १.७२) इत्यनेन विहितं यदेतौ द्वौ परस्परं सवर्णं तु न, परञ्च सवर्णवद्भवतः। अत एव संहिताकार्ये तयो सवर्णवद् त्रिकारादिकार्यं प्राप्तम् ॥ १९ ॥

## शशिकला

अवर्ण, इवर्ण, उवर्ण, ऋवर्ण तथा ऌवर्ण—ये समानाक्षर हैं। सवर्ण बाद में होने पर समानाक्षर का पूर्ववर्ती तथा परवर्ती दोनों के स्थान में एकादेश दीर्घ हो जाता है। 'अवर्ण का दीर्घ जैसे—'वज्रेणाधि'[1] 'येनाग्ने'[2] 'इन्द्राग्नी'[3]। इवर्ण का दीर्घ—'एणीव'[4] 'मृगीव'[5] 'महीयम्'[6] 'अभीहि'[7] 'भिन्धीदम्'[8]। उवर्ण का दीर्घ—'भवन्तूत्तमम्'[9] 'उक्षन्तूद्गा'[10] 'ह्वयन्तूपसद्यः'[11]। ऋवर्ण तथा ऌवर्ण के दीर्घ होने का उदाहरण संहिता में नहीं मिलता। सवर्ण बाद में होने पर यह क्यों कहा गया? 'जुषष्वेन्द्रः'[12] 'शङ्खेनोत'[13] इत्यादि में दीर्घ न होवे। सवर्ण संज्ञा का विधान सूत्रकार ने नहीं किया है। शौनक के मत में 'स्वरों में आरम्भ से आठ समानाक्षर है' से अ आ, इ ई उ ऊ तथा ऋ ॠ—ये आठ समानाक्षर हैं। तै० प्रा० में 'समानाक्षरों में दो दो ह्रस्व तथा दीर्घ परस्पर सवर्ण हैं' के अनुसार अ आ, इ ई तथा उ ऊ परस्पर सवर्ण हैं। सवर्ण का अर्थ है—सादृश्य। सवर्ण स्वरों का स्थान, करण तथा आभ्यन्तर प्रयत्न समान होता है इसीलिए कात्यायन ने कहा है—'समान स्थान करण तथा आस्यप्रयत्न (आभ्यन्तर-प्रयत्न वाले स्वरों सवर्ण होते हैं। जैसे इकार तथा ईकार स्थान तालु, करण जिह्वामध्य तथा आभ्यन्तर-प्रयत्न विवृत है। अतः ये दोनों परस्पर सवर्ण हैं। इसी प्रकार अन्य स्वरों को भी समझ लेना चाहिए।

---

१ वज्रेण। अधि (प० पा०)
२. येन। अग्ने (प० पा०)
३. इन्द्राग्नी इति (प० पा०)
४. एणी–इव (प० पा०)
५. मृगी–इव (प० पा०)
६ मही–इयम् (प० पा०)
७. अभि + इहि (प० पा०)
८. भिन्धि। इदम् (प० पा०)
९. भवन्तु। उत्तमम् ( प० पा० )
१०. उक्षन्तु। उत ( प० पा० )
११. ह्वयन्तु। उप-सद्यः ( प० पा० )
१२. जुषस्व। इन्द्रः ( प० पा० )
१३. शङ्खेन। उत ( प० पा० )

**शंका**—अकार तथा आकार का उच्चारण स्थान कण्ठ तथा करण अधःकण्ठ अथवा जिह्वामूल तो समान हैं किन्तु अकार का आभ्यन्तर-प्रयत्न संवृत तथा आकार का विवृत है जो समान नहीं हैं फिर ये कैसे परस्पर सवर्ण हैं ? **समाधान**—ये सवर्ण नहीं हैं फिर भी सवर्ण के समान होते हैं। अतएव सन्धि-विषयक कार्य में दोनों का सवर्ण के समान विकारादि कार्य होता है ॥१९॥

## सीमन्ते ह्रस्वः ॥२०॥

**सू० अ०**—'सीमन्त' में ह्रस्व ही रहता है।

### निर्मलभाष्यम्

**सीमन्त** इत्यत्र ह्रस्वः एव भवति। यथा—'सीमन्तम्' (सं० ६.१३४.१) 'सीमतः' (सं० ४.११) इत्यत्रापि ह्रस्वः एव। 'सीमानम्' (सं० १९.८.१३) इत्यत्र दीर्घः प्राप्यते ॥२०॥

### शशिकला

'सीमन्त' में ह्रस्व ही रहता है। जैसे 'सीमन्तम्'[1]। 'सीमतः' यहाँ भी ह्रस्व ही प्राप्त होता है। 'सीमानम्'[2] यहाँ दीर्घ मिलता है ॥२०॥

[ अकारस्य एकारभावः ]

## अवर्णस्येवर्ण एकारः ॥२१॥

**सू० अ०**—इवर्ण बाद में होने पर अवर्ण का ( पूर्वपर एकादेश ) एकार होता है।

### निर्मलभाष्यम्

अकारश्चाकारश्च अवर्णः। इकारश्च ईकारश्च इवर्णः। **इवर्णे** इकारे ईकारे च परे **अवर्णस्य** अकारस्य आकारस्य च पूर्वपरयोः एकादेशः एकारः

---

१. सींमन्तम् (प० पा०)

प्रस्तुत विधान से ज्ञात होता है कि यह पद सीमा+अन्तम् से बना हुआ है। किन्तु यह पद सीमन् अन्तः से निष्पन्न हुआ है। जैसा सायण ने कहा है—सीम्नोः अन्तः सीमन्तः तम्। 'सीमन्तः केशेषु' इति 'शकन्ध्वादिषु' ( प० पा० ) ( ६.१.९४ ) पाठात् पररूपम्। (द्रष्टव्य सं० ६.१३४.३ पर सायणभाष्य)।

२. सीमानम् (प० पा०)

भवति। यथा—'उतेमम्' (सं० १.१५.२) 'जुषष्वेन्द्रः' (सं० २.५.४) 'मेममन्ये' (सं० २.२८ १)। इवर्णे इति किम् ? 'मित्रावरुणोभा' (सं० ४.३०.१) 'ब्रह्मौदनम्' ( सं० ११.१.१ ) इत्यादिषु माभूत्। अवर्णस्येति किम् ? 'मृगीव' (सं० ५ ४.११) 'एणीव' (सं० ५.१४.११) इत्यादिषु माभूत् ॥२१॥

### शशिकला

अकार तथा आकार, ये दोनों अवर्ण हैं। इकार तथा ईकार ये दोनों इवर्ण हैं। इकार तथा ईकार बाद में होने पर अकार तथा आकार का पूर्वपर एकादेश एकार होता है। जैसे—'उतेमम्'[१] 'जुषष्वेन्द्रः'[२] 'मेममन्ये'[३]। इवर्ण बाद में होने पर यह क्यों कहा गया? 'मित्रावरुणोभा'[४] 'बह्मौदनम्'[५] इत्यादि में न होवे। 'अवर्ण का' यह क्यों कहा गया? 'मृगीव'[६] एणीव'[७] इत्यादि में न होवे ॥२१॥

[ अवर्णस्य ओकारभावः ]

## उवर्ण ओकारः ॥२२॥

सू० अ०—उवर्ण बाद में होने पर ( अवर्ण का पूर्वपर एकादेश ) ओकार ( हो जाता है )

### निर्मलभाष्यम्

उवर्णे उकारे ऊकारे च परे अवर्णस्य—अकारस्य आकारस्य च पूर्वपरयोरेकादेशः ओकारः भवति। यथा—'शङ्खे नोत' (सं० ४ १० ३) 'मित्रावरुणोभा' (सं० ४.३०.१) 'अश्विनोभा' (सं० ४ ३०.१)। उवर्णे इति किम् ? 'जुषष्वेन्द्रः' ( सं० २.५.४ ) 'वज्रे णाधि' ( २ १४.४ ) इत्यादिषु माभूत्। संहितायां 'प्रौढः' (सं० १५-११.४) इत्यत्र ऊकारे परे अकारस्य पूर्वपरयोरेकादेशः औकारः प्राप्यते ॥२३॥

---

१. उत। इमम् ( प० पा० )
२. जुषस्व। इन्द्रः (प० पा०)
३. मा। इमम्। अन्ये (प० पा०)
४. मित्रावरुणा। उभा (प० पा०)
५. ब्रह्म—ओदनम् (प० पा०)
६. मृगी—इव (प० पा०)
७. एणी—इव (प० पा०)

### शशिकला

उकार तथा ऊकार बाद में होने पर अकार तथा आकार का पूर्वपर एकादेश ओकार हो जाता हैं। जैसे 'शङ्नोत'[१] 'मित्रावरुणोभा'[२] 'अश्विनोभा'[३]। उवर्ण बाद में होने पर यह क्यों कहा गया ? 'जुषष्वेन्द्रः'[४] 'वज्रेणाधि'[५] इत्यादि में ओकार न होवे। संहिता में प्रौढः' यहाँ ऊकार बाद में होने पर अकार का पूर्वपर एकादेश औकार मिलता है ॥२२॥

[ अर्भावः ]

## अरमृवर्णे ॥२३॥

सू० अ०—ऋवर्ण बाद में होने पर (अवर्ण का पूर्वपर एकादेश) अर् होता है।

### निर्मलभाष्यम्

ऋवर्णे ऋकारे ॠकारे च परे अवर्णस्य पूर्वपरयोरेकादेशः अर् भवति। 'उपसर्गस्य धात्वादावारम्' (३.२ २५) इत्यनेन धात्वादौ ऋवर्णे परे उपसर्गस्य अवर्णस्य आर्भावः उक्तः। अत एवात्र धात्वादिव्यतिरिक्ते ऋवर्णे परे उपसर्गव्यतिरिक्तस्य अवर्णस्य पूर्वपरयोरेकादेशः अर्भवतीति बोधव्यम्। यथा—'ऋतस्यर्तेन' (सं० ६.११४.१) 'रथस्येवर्भुः' (सं० १०.१.८) ॥२३॥

### शशिकला

ऋकार और ॠकार बाद में होने पर अवर्ण का पूर्वपर एकादेश अर् होता है। 'धातु का आदि वाला ऋकार बाद में होने पर उपसर्ग के अवर्ण का पूर्वपर एकादेश आर् होता है' से धातु के आदि वाले ऋकार के वाद में होने पर उपसर्ग के अवर्ण का पूर्वपर एकादेश आर्भाव कहा गया है। अत एव यहाँ धातु के आदि वाले ऋवर्ण से अन्य ऋवर्ण बाद में होने पर उपसर्ग से अन्य अवर्ण के स्थान पर पूर्वपर एकादेश अर्भाव को समझना चाहिए। जैसे—'ऋतस्यर्तेन'[७] 'रथस्येवर्भुः'[८] ॥२३॥

---

१. शङ्न । उत (प० पा०)
२. मित्रावरुणा । उभा (प० पा०)
३. अश्विना । उभा (प० पा०)
४. जुषस्व । इन्द्रः (प० पा०)
५. वज्रेण । अधि (प० पा०)
६. प्र—ऊढः (प० पा०)
७. ऋतस्य । ऋतेन (प० पा०)
८ रथस्य—इव । ऋभुः (प० पा०)

## उपर्षन्त्यादिषु च ॥२४॥

सू० अ०—'उपर्षन्ति' इत्यादि में (ऋवर्ण बाद में होने पर अवर्ण का पूर्वपर एकादेश अर् होता है)।

### निर्मलभाष्यम्

चशब्दोऽत्र 'अरम्' इत्यस्यान्वादेशकः। **उपर्षन्त्यादिषु** उपर्षन्ति इत्यादिषु च ऋवर्णे परे सति अकारस्य पूर्वपरयोरेकादेशः अर् भवति। यथा —'उपर्षन्ति' (सं० ९.८.१४. ९८१६)। आदिषु इत्यनेन ज्ञायते यदन्यत्रापि भवति परञ्च तद्विषये संहितायां निदर्शनं न प्राप्यते ॥२४॥

### शशिकला

चशब्द यहाँ 'अर् हो जाता है' का अन्वादेशक है। उपर्षन्ति इत्यादि में ऋवर्ण बाद में होने पर अकार का पूर्वपर एकादेश अर् होता है। जैसे—'उपर्षन्ति'[1]। सूत्र में प्रयुक्त 'आदि में' से ज्ञात होता है कि इससे अन्यत्र भी होता है किन्तु संहिता में इस विषय में उदाहरण नहीं मिलता ॥२४॥

[ आर्भाव ]

## उपसर्गस्य धात्वादावारम् ॥२५॥

सू० अ०—धातु के आदि वाला (ऋवर्ण) बाद में होने पर उपसर्ग के (अवर्ण का पूर्वपर–एकादेश) आर् होता है।

### निर्मलभाष्यम्

**धात्वादौ** धातोः आदौ ऋवर्णे परे **उपसर्गस्य** उपसर्गान्तस्य अवर्णस्य पूर्वपरयोरेकादेशः आर् भवति। यथा-'आर्छतु' (सं० २.१२.५)। संहितायामेकमेव निदर्शनं प्राप्यते ॥२५॥

### शशिकला

धातु के आदि वाला ऋवर्ण बाद में होने पर उपसर्ग के अन्त्य अकार का पूर्वपर एकादेश आर् होता है। जैसे—आर्छतु'[2]। संहिता में केवल एक ही उदाहरण प्राप्त होता है ॥२३॥

## भूतकरणस्य च ॥२६॥

सू० अ०—(धातु के आदि वाला ऋवर्ण बाद में होने पर भी) भूतकाल करने वाले (अवर्ण) का भी (पूवपर-एकादेश आर् होता है)।

---

१. उप—ऋषन्ति (प० पा०) २. आ—ऋछतु (प० पा०)

### निर्मलभाष्यम्

चशब्दोऽत्र धात्वादावारम् इत्यस्यान्वादेशकः। धात्वादौ ऋकारे परे भूतकरणस्य च भूतकालनिष्पादकस्य अकारस्य पूर्वपरयोरेकादेशः आरम् भवति। यथा—'आर्ध्नोत्' ( सं० ४ ३९.१,५,७ )। भूतकरणस्येति किम् ? 'सर्चाम्' (सं० १०.८.१०) इत्यत्र माभूत् ॥२६॥

### शशिकला

सूत्र में प्रयुक्त चशब्द यहाँ 'धातु के आदि वाला ऋवर्ण बाद में होने पर आर हो जाता है' का अन्वादेशक है। धातु के आदि वाला ऋवर्ण बाद में होने पर भूतकाल बनाने वाले अवर्ण का पूर्वपर–एकादेश आर् होता है। जैसे—'आर्ध्नोत्'[1]। 'भूतकाल बनाने वाले का' यह क्यों कहा गया— 'सर्चाम्'[2] यहाँ आर् न होवे ॥२६॥

[ ऐकारभावः ]

## एकारैकारयोरैकारः ॥२७॥

सू० अ०—एकार तथा ऐकार बाद में होने पर (अवर्ण का पूर्वपर एकादेश) ऐकार होता है।

### निर्मलभाष्यम्

**एकारैकारयोः** एकारे च ऐकारे च परे अवर्णस्य पूर्वपरयोरेकादेशः ऐकारः भवति। यथा—'इहैव' ( सं० १.१५ २, ३ १२.१ २ ) 'इहैतु' (सं० १ १५.३) 'एकैकयैषा' (सं० ३.२८.१) 'उतैनाम्' (सं० ३ २८.२) 'परेणैतु' (सं० ४ ३.२)। एकारैकारयोः इति किम् ? 'शङ्खेनोत' (सं० ४ १०.३) 'उतेमम्' (सं० १.१५.२) 'येनाग्ने' (सं० ९.१५.७) इत्यादिषु माभूत् ॥२७॥

### शशिकला

एकार तथा ऐकार बाद में होने पर अवर्ण का पूर्वपर–एकादेश ऐकार हो जाता है। जैसे— इहैव'[3] 'इहैतु'[4] 'एकैकयैषा'[5]। एकार तथा

---

१. आर्ध्नोत् (प० पा०)
२. सः। ऋचाम् (प० पा०)
३. इह। एव (प० पा०)
४. इह। एतु (प० पा०)
५ एकैकया। एषा (प० पा०)

ऐकार बाद में होने पर यह क्यों कहा गया ? 'शङ्खेनोत'[१] 'उतेमम्'[२] 'येनाग्ने'[३] इत्यादि में न होवे ।।२७।।

[ औकारभावः ]

## ओकारौकारयोरौकारः ।।२८।।

**सू० अ०**—ओकार तथा औकार बाद में होने पर (अवर्ण का पूर्वंपर एकादेश) औकार होता है।

### निर्मलभाष्यम्

**ओकारौकारयोः** ओकारे च औकारे च परे अवर्णस्य पूर्वपरयोरेकादेशः औकारः भवति। यथा—'ब्रह्मौदनम्' ( सं० ११.३.१ ) 'तस्यौदनस्य' (सं० ११.३.१) 'तेनौदनेन' (सं० ४.३५.२)। ओकारौकारयोरिति किम् ? 'उतेमम्' (सं० १ १५.२, 'इहैतु' (सं० १.१५.३) 'शङ्खेनोत' (सं० ४.१०.३) 'येनाग्ने' (सं० ९.१५.७) इत्यादिषु माभूत् ।।२८।।

### शशिकला

ओकार तथा औकार बाद में होने पर अवर्ण का पूर्वपर-एकादेश औकार होता है। जैसे—'ब्रह्मौदनम्'[४] 'तस्यौदनस्य'[५] 'तेनौदनेन'[६]। ओकार तथा औकार बाद में होने पर यह क्यों कहा गया ? उतेमम्'[२] 'इहैतु'[७] 'शङ्खेनोत'[१] 'येनाग्ने'[३] इत्यादि में औकार न होवे ।।२८।।

[ अवर्णस्य पररूपम् ]

## शकल्येष्यादिषु पररूपम् ।।२९।।

**सू० अ०**—शकल्येषि इत्यादि में (अवर्ण का पूर्वपर-एकादेश) पररूप (हो जाता है)।

---

१. शङ्खेन । उत (प० पा०)
२. उत । इमम् (प० पा०)
३. येन । अग्ने (प० पा०)
४. ब्रह्म-ओदनम् (प० पा०)
५. तस्य । ओदनम् (प० पा०)
६. तेन । ओदनेन (प० पा०)
७. इह । एतु (प० पा०)

### निर्मलभाष्यम्

**शकल्येष्यादिषु** शकल्येषि इत्यादिषु अवर्णस्य पूर्वपरयोरेकादेशः पररूपं भवति। यथा—'शकल्येषि' (सं० १.२५.२)। आदिषु इत्यनेन ज्ञायते यदन्यत्रापि भवति। तद्विषये निदर्शनं द्रष्टव्यम्—'उपेतन' (सं० ३.१४.३) 'उपेषतु' (सं० ६.६७.३) 'उपेषन्तम्' (सं० ८.६.१७) 'उपेयिम' (सं० १०.१.१०) ॥२९॥

### शशिकला

'शकल्येषि' इत्यादि में अवर्ण का पूर्वपर एकादेश पररूप हो जाता है। जैसे—'शकल्येषि'[१]। सूत्र में प्रयुक्त 'आदि में' से ज्ञात होता है कि इससे अन्यत्र भी होता है। उस विषय में ये उदाहरण द्रष्टव्य हैं—'उपेतन'[२] 'उपेषतु'[३] 'उपेषन्तम्'[४] 'उपेयिम'[५] ॥२९॥

[ अकारस्य पूर्वरूपम् ]

## एकारौकारान्तात्पूर्वः पदादेरकारस्य ॥३०॥

**सू० अ०**—पदान्त एकार तथा ओकार से बाद में पदादि अकार का (पूर्वपर-एकादेश) पूर्वरूप होता है।

### निर्मलभाष्यम्

**एकारौकारान्तात्** एकार ओकारश्च अन्ते यस्य तस्मात् पदात् **पदादेः** पदस्य आदौ विद्यमानस्य अकारस्य पूर्वपरयोरेकादेशः **पूर्वः** पूर्वरूपः भवति। एकाराद् एकारः ओकाराद् ओकारः भवति इत्यर्थः। यथा—'येऽस्याम्' (सं० ३.२६.१–२) 'तेऽवदन्' (सं० ५.१७.१) 'मनोऽसमृद्धाः' (सं० १.२७.२) 'अभितोऽसमृद्धाः' (सं० १.२७.३) 'योऽस्मान्' (सं० २.१९.१–५) 'योऽस्य' (सं० १५.१५.१–९) ॥३०॥

### शशिकला

एकार तथा ओकार हैं अन्त में जिनके ऐसे पद से बाद में पदादि अकार का पूर्वपर-एकादेश पूर्वरूप हो जाता है। एकार से बाद में पूर्वपर

१. शकल्य—एषि (प० पा०)
२. उप—एतन् (प० पा०)
३. उप—एषतु (प० पा०)
४. उप—एषन्तम् (प० पा०)
५. उप—एयिम (प० पा०)

एकादेश एकार तथा ओकार से बाद में ओकार हो जाता है—यह अर्थ है। जैसे—'येऽस्याम्'[1] 'तेऽवदन्'[2] 'मनोऽसमृद्धाः'[3] 'अभितोऽसमृद्धाः'[4] 'योऽस्मान्'[5] 'योऽस्य'[6] ॥३०॥

## क्वचित्प्रकृत्या ॥३१॥

सू० अ०—(पदान्त एकार तथा ओकार से बाद में पदादि अकार संहिता में) कहीं-कहीं प्रकृतिभाव से रहता है।

### निर्मलभाष्यम्

पदान्ताद् एकाराद् ओकाराच्च पादादिः अकारः संहितायां **क्वचित् प्रकृत्या** प्रकृतिभावेन विद्यते। यथा—'अङ्गे अङ्गे' (सं० १.१२.२) 'नमस्ते अस्तु' (सं० १.१३.१ 'ये अग्नयः' (सं० ३ २१.१) 'सोमे अन्तर्यः' (सं० ३.२१ २) 'यो अधरात्' (सं० २.१४ ३) 'तेभ्यो अग्निभ्यः' (सं० ३.२१ ५-७)। संहितायां कुत्र पूर्वरूपः कुत्र प्रकृतिभावः च, विषयेऽस्मिन् कोऽपि विधानः न प्राप्यते। संहितापाठानुसारमेव पूर्वरूपस्य प्रकृतिभावस्य च स्थलमेव प्रमाणम् ॥३१॥

॥इति श्रीमत्पण्डितदशरथपाठकसूनुना डा० जमुनापाठकेन कृते निर्मलभाष्ये चतुरध्यायिकायाः तृतीयाध्यायस्य द्वितीयः पादः ॥

### शशिकला

पदान्त एकार तथा ओकार से बाद में पदादि अकार संहिता में कहीं-कहीं प्रकृतिभाव से रहता है। जैसे—'अङ्गे अङ्गे' 'नमस्ते अस्तु' 'ये अग्नयः' 'सोमे अन्तर्यः' 'यो अधरात्' 'तेभ्यो अग्निभ्यः'। संहिता में कहाँ पूर्वरूप तथा कहाँ प्रकृतिभाव होता है, इस विषय में कोई विधान नहीं है। अकार के पूर्वरूप तथा प्रकृतिभाव से रहने का निश्चय संहिता में प्राप्त उदाहरणों से ही होता है ॥३०॥

॥ चतुरध्यायिका के तृतीय अध्याय के द्वितीय पाद की डा० जमुनापाठककृत शशिकला व्याख्या समाप्त ॥

---

१. ये। अस्याम् (प० पा०) २. ते। अवदन् (प० पा०)
३. मनः—असमृद्धाः (प० पा०) ४. अभितः। असमृद्धाः (प० पा०)
५. यः। अस्मान् (प० पा०) ६. यः। अस्य (प० पा०)

## अथ तृतीयः पादः

[ स्वरितसङ्ख्याकथनम् ]

**षडेव स्वरितजातानि लक्षणानि प्रतिजानते[1] ॥१॥**

**सू० अ०**--स्वरित-समूह छः (प्रकार का) होता है (उनके) लक्षणों को कहा जाएगा।

### निर्मलभाष्यम्

**स्वरितजातानि** स्वरितस्वरस्य समुदायः **षडेव** षडधा भवन्ति। तेषां **लक्षणानि प्रतिजानते** विधीयते। ननु 'अवग्रहे सविधः' (३ ३.२०) इत्यनेन अवग्रहस्वरितस्यापि विधानं कृतम् तत्कथमेव षडेव स्वरितजातानि। **उच्यते** अवग्रहस्वरितोऽपि तैरोव्यञ्जनस्वरित एव। अत एव तस्यापि गणनं तैरोव्यञ्जने एव भवति ॥१॥

### शशिकला

स्वरित छः प्रकार का होता है। उनका लक्षण आगे कहा जाएगा। यहाँ **शंका** --होती है कि 'पृथक्करण (अवग्रह) में होने वाला उदात्तपूर्व स्वरित उसी प्रकार वाला (अवग्रह) स्वरित कहलाता है' के द्वारा अवग्रह स्वरित का भी विधान किया गया है। इस प्रकार स्वरितों की संख्या सात हो जाती है। फिर यहाँ छः प्रकार के स्वरितों का ही कथन क्यों हुआ है। **समाधान** यह है कि अवग्रह स्वरित का समाहार तैरोव्यञ्जन स्वरित के अन्तर्गत हो जाता है। अवग्रह स्वरित भी तैरोव्यञ्जन स्वरित ही है। अवग्रह स्वरित की भी गणना तैरोव्यञ्जन में हो जाती है; अतः छः स्वरितों का ही कथन हुआ है ॥१॥

[ स्वरितभेदविधानम् ]

**अभिनिहितः प्राश्लिष्ट जात्यः क्षैप्रश्च तावुभौ।**
**तैरोव्यञ्जनपादवृत्तवेतत्स्वरितमण्डलम्[2] ॥२॥**

---

१. (ख) सूत्रमिदं नास्ति।
२. (ख) सूत्रमिदं नास्ति।

**सू० अ०**—अभिनिहित, प्राश्लिष्ट, जात्य, क्षैप्र, तैरोव्यञ्जन तथा पादवृत्त—यह स्वरित-स्वरों का समूह है।

### निर्मलभाष्यम्

**अभिनिहितः प्राश्लिष्टः जात्यः क्षैप्रः तैरोव्यञ्जनः पादवृत्तश्च इत्येतत्स्वरितमण्डलम्** अभिनिहितादयः षट्स्वरिताः भवन्तीत्यर्थः ॥२॥

### शशिकला

अभिनिहित, प्राश्लिष्ट, जात्य, क्षैप्र, तैरोव्यञ्जन तथा पादवृत्त—ये छः स्वरित होते हैं ॥२॥

[ स्वरितानां बलाबलविधानम् ]

## पूर्वं पूर्वं दृढतरं मृदीयो यद्यदुत्तरम्[1] ॥३॥

**सू० अ०**—( इन छः स्वरित स्वरों में ) पहले वाले दृढतर होते हैं तथा (क्रमशः) जो बाद में (कहे गए) हैं (वे पूर्ववर्ती की अपेक्षा) मृदु होते हैं।

### निर्मलभाष्यम्

तेषु स्वरितमण्डलेषु निर्दिष्टक्रमेण **पूर्वं पूर्वं** पूर्वमुक्तः स्वरितः परस्वरितापेक्षया दृढ़तरं दृढतरप्रयत्नेनोच्चारितः भवति । तस्मात्स्वरिताद् यद् **यदुत्तरम्** यत्स्वरितः उत्तरं परः विद्यते सः **मृदीयः** 'पूर्वस्वरितापेक्षया मृदुप्रयत्नेनोच्चारितः भवति । तद्यथा—अभिनिहितः प्राश्लिष्टाद् दृढप्रयत्नतरः, प्राश्लिष्टश्च अभिनिहितापेक्षया मृदुप्रयत्नः । एवमेव प्राश्लिष्टः जात्यापेक्षया दृढप्रयत्नः जात्यश्च प्राश्लिष्टाद् मृदुतरः । एवमेव क्रमेण सर्वेषां स्वरितानां विषये बोधव्यम् ॥

### शशिकला

उन छः स्वरित-समूहों में निर्दिष्ट क्रम से पूर्ववर्ती स्वरित अपने परवर्ती स्वरित से दृढतर प्रयत्न से उच्चारित होता है तथा परवर्ती स्वरित अपने उस पूर्ववर्ती स्वरित की अपेक्षा मृदुप्रयत्न से। जैसे—अभिनिहित स्वरित प्राश्लिष्ट स्वरित की अपेक्षा दृढ प्रयत्न से उच्चारित होता है किन्तु प्राश्लिष्ट स्वरित अभिनिहित स्वरित की अपेक्षा मृदु प्रयत्न से। इसी

---

१ (ख) सूत्रमिदं नास्ति।

प्रकार प्राश्लिष्ट-स्वरित जात्य-स्वरित की अपेक्षा दृढतर प्रयत्न से उच्चारित होता है किन्तु जात्य-स्वरित प्राश्लिष्ट की अपेक्षा मृदुतर प्रयत्न से। इसी क्रम से अन्य स्वरितों के विषय में भी समझना चाहिए।

**सर्वतीक्ष्णोऽभिनिहितः ततः प्राश्लिष्ट उच्यते[1] ॥४॥**

**सू० अ०**—( दृढताक्रम में ) अभिनिहित सबसे तीक्ष्ण ( होता है ) तत्पश्चात् प्राश्लिष्ट कहा गया है।

### निर्मलभाष्यम्

दृढप्रयत्नक्रमे **अभिनिहितः** अभिनिहितस्वरितः **सर्वतीक्ष्णः** सर्वेषां स्वरितानां तीक्ष्णः तीव्रः भवति **ततः** तदभिनिहितात् **प्राश्लिष्टः** प्राश्लिष्ट-स्वरितः भवति—इत्युच्यते ॥४॥

### शशिकला

दृढप्रयत्न के क्रम में अभिनिहित स्वरित सभी स्वरितों से तीक्ष्ण (दृढ़प्रयत्न वाला) होता है। उसके बाद प्राश्लिष्ट स्वरित को दृढ़ता क्रम में कहा गया है ॥४॥

**ततो मृदुतरौ स्वारौ जात्यः क्षैप्रश्च तावुभौ[2] ॥५॥**

**सू० अ०**—(उस प्राश्लिष्ट से) जात्य तथा क्षैप्र—ये दोनों (स्वरित) मृदुतर (कहे गये हैं)।

### निर्मलभाष्यम्

**ततः** तस्मात्प्राश्लिष्टस्वरिताद् **जात्यः क्षैप्रश्च** जात्यस्वरितः क्षैप्र-स्वरितश्च **तावुभौ** क्रमेण द्वौ स्वरितो मृदुतरौ अल्पदृढतरौ भवतः ॥५॥

### शशिकला

उस प्राश्लिष्ट स्वरित से बाद में मृदुता के क्रम में क्रमशः जात्य स्वरित तथा क्षैप्र स्वरित आते हैं। प्राश्लिष्ट-स्वरित से जात्य-स्वरित मृदु तथा जात्य स्वरित से क्षैप्र-स्वरित मृदु होता है ॥५॥

---

१. (ख) सूत्रमिदं नास्ति।
२. (ख) सूत्रमिदं नास्ति।

## ततो मृदुतरः स्वारः तैरोव्यञ्जन उच्यते[1] ॥६॥

**सू० अ०**—उस (क्षैप्र) से तैरोव्यञ्जन मृदुतर स्वरित कहा गया है।

### निर्मलभाष्यम्

**ततः** तस्मात् क्षैप्रस्वरितात् **तैरोव्यञ्जनः** तैरोव्यञ्जनस्वरितः **मृदुतरः** अल्पदृढप्रयत्नः भवति **इत्युच्यते** ॥६॥

### शशिकला

उस क्षैप्रस्वरित से तैरोव्यञ्जन-स्वरित मृदुतर प्रयत्न वाला कहा गया है ॥६॥

## पादवृत्तो मृदुत्तरः[2] ॥७॥

**सू० अ०**—पादवृत्त ( स्वरित ) ( सभी स्वरितों में ) मृदुत्तर ( होता है )।

### निर्मलभाष्यम्

सर्वेषु स्वरितस्वरेषु **पादवृत्तः** पादवृतस्वरितः **मृदुतरः** भवति ॥७॥

### शशिकला

पादवृत्त स्वरित सभी स्वरितों में मृदुतर होता है ॥७॥

## इति स्वारबलाबलम्[3] ॥८॥

**सू० अ०**—इस प्रकार स्वरित (स्वरों) का (परस्पर) बलाबल (कहा गया है)।

### निर्मलभाष्यम्

**इति** एवं **स्वारबलाबलं** स्वारस्य स्वरितस्य परस्परं **बलाबलं** बलं दृढत्वम् अबलं मृदुत्वञ्चोक्तम्।

### शशिकला

इस प्रकार अभिनिहित, प्राश्लिष्ट, जात्य, क्षैप्र, तैरोव्यञ्जन तथा पादवृत स्वरितों का परस्पर बलाबल (दृढ तथा कमजोर) भाव को कहा गया है।

---

१. (ख) सूत्रमिदं नास्ति।
२. (ख) सूत्रमिदं नास्ति।
३. (ख) सूत्रमिदं नास्ति।

## अपरः प्राह तैरोव्यञ्जनपादवृत्तौ तुल्यवृत्तीति[1] ॥९॥

**सू० अ०**—कतिपय आचार्य तैरोव्यञ्जन तथा पादवृत को समान वृति (प्रयत्न) वाला मानते है ।

### निर्मलभाष्यम्

**तैरोव्यञ्जनपादवृत्तौ** तैरोव्यञ्जनस्वरितः पादवृतस्वरितश्च **तुल्यवृत्ती** समानमृदुप्रयत्नयुतौ भवतः **इति** एवम् **अपरः** अन्ये आचार्याः **प्राह** कथयन्ति । नेदं सूत्रमभीष्टम् ॥९॥

### शशिकला

तैरोव्यञ्जन तथा पादवृत स्वरित समान मृदुप्रयत्न वाले होते हैं—ऐसा कतिपय आचार्य मानते हैं । यह सूत्र अभीष्ट नहीं है ॥९॥

[ स्वरितसन्धिकथनम् ]

## उदात्तपूर्वः परोऽनुदात्तः स्वरितसन्धिः[2] ॥१०॥

**सू० अ०**—स्वरित के मेल में पूर्ववर्ती उदात्त तथा परवर्ती अनुदात्त (होता है) ।

### निर्मलभाष्यम्

स्वरितस्वरे **पूर्वः उदात्तः परश्चानुदात्तः** भवति इति **स्वरितसन्धिः** स्वरितस्य मेलः । स्वरिते पूर्वः उदात्तस्य भागः परश्चानुदात्तस्य भागः विद्यत इत्यर्थः । 'स्वरितस्यादितो मात्रार्धमुदात्तम्' (१.१ १७) इत्यनेन स्वरितस्वरे पूर्वार्धमुदात्तमुक्तम् । अत्र परभागमपि विहितम् ॥१०॥

### शशिकला

स्वरित के मेल में पूर्ववर्ती उदात्त तथा परवर्ती अनुदात्त होता है। स्वरित में पूर्ववर्ती भाग उदात्त तथा परवर्ती भाग अनुदात्त होता है—यह अर्थ है। 'स्वरित में आदि वाली आधी मात्रा उदात्त की होती है' इसके द्वारा स्वरित के आदि वाले मात्रार्ध उदात्त होने का विधान किया गया है। इस सूत्र द्वारा परवर्ती अनुदात्त होने का कथन किया गया है ॥१०॥

---

१. (ख) सूत्रमिदं नास्ति ।
२. (ख) सूत्रमिदं नास्ति ।

[ अभिनिहितस्वरितविधानम् ]

## एकारौकारौ पदान्तो परतोऽकारं सोऽभिनिहितः ॥११॥

**सू० अ०**—पदान्तीय (उदात्त) एकार तथा ओकार से बाद में (अनुदात्त) अकार का ( पूर्वपर एकादेश पूर्वरूप होने पर ) निष्पन्न स्वरित अभिनिहित (कहलाता है) ।

### निर्मलभाष्यम्

'एकारौकारान्तात्पूर्वः पदादेरकारस्य' (३.२ ३०) इत्यनेन पदान्ताद् एकाराद् ओकाराच्च पदादेः अकारस्य पूर्वपरयोः एकादेशः पूर्वरूप उक्तः । तत्पूर्वरूपः अभिनिहितसंज्ञकः । संज्ञेयम् शौनकेन एव सन्धिविषये प्रयुक्ता-

अथाभिनिहितः सन्धिरेतैः प्राकृतवैकृतैः ।
एकीभवति पदादिरकारस्तेऽत्र सन्धिजाः ॥
( ऋ० प्रा० २.३४ )

अस्मिन्नभिनिहितसन्धौ पदान्तौ **एकारौकारौ** एकारश्चौकारश्च यदि उदात्तौ ताभ्यां परः चेदनुदात्तः पदादि अकारः तदनुदात्तस्याकारस्य पूर्व-परयोरेकीभावे पूर्वरूपे जाते पूर्वः उदात्तः एकारश्चौकारश्च स्वरितः भवति । तत्स्वरितः अभिनिहितसंज्ञः भवति । यथा –तें॑ऽवदन् ( सं० ५.१७.१ ) 'सोंऽब्रवीत्' ( सं० १५.८.१ ) 'योंऽस्य दक्षिणः कर्णः' ( सं० १५.१८ ३ ) 'सोंऽरज्यत्' (सं० ५ ८ १) ।

यद्यपि सूत्रकारेणात्र पदान्तपदाद्योः स्वरविषये स्पष्टरूपेण न निर्दिष्टं तदपि अथर्ववेदसंहितायाः पदपाठस्य च सम्यगनुशीलनेन ज्ञायते यत् पूर्वोदात्तेन एकारेणौकारेण सह परस्यानुदात्तस्य अकारस्य पूर्वपर-योरेकादेशे पूर्वरूपे जाते एव स्वरितस्य निष्पत्तिः । स एवभिनिहितः । यथोक्तं च शौनकेन—

इकारयोश्च प्रश्लेषे क्षैप्राभिनिहितेषु च ।
उदात्तपूर्वरूपेषु शाकलस्यैवमाचरेत् ॥
(ऋ० प्रा० ३ १३)

तैत्तिरीयप्रातिशाख्यानुसारमपि पूर्वोदात्तेन एकारेणौकारेण च परस्यानुदात्तस्य अकारस्य एकीभावे पूर्वरूपे जाते स्वरितस्वरः जायते- 'तस्मिन्ननुदात्ते पूर्वं उदात्तस्स्वरितम्' (तै० प्रा० १२.९) । तत्राकारस्य लोपे

(=पूर्वरूपे) जाते निष्पन्नः स्वरितः अभिनिहितः—'तस्मादकारलोपेऽभिनिहितः' (तै० प्रा० २०.४)। कात्यायनमतेऽपि पदान्तोदात्तस्य पदादेरनुदात्तस्य एकीभावे पूर्वरूपे स्वरितः जायते -'एदोद्भ्यां पूर्वमकारः' 'तौ चेदुदात्तावनुदात्ते स्वरितौ' (वा० प्रा० ४.६२-६३)। स एव स्वरितः अभिनिहितः—'एदोद्भ्यामकारोलुगभिनिहितः' (वा० प्रा० १.११४)।

एवं स्पष्टं यत् सर्वेषामाचार्याणां मते पदान्तोदात्तयोः एकारौकारयोः पदादेश्चाकारस्यानुदात्तस्य पूर्वपरयोः स्थाने एकीभावे पूर्वरूपे एकारे ओकारे च जाते स्वरितस्य निष्पत्तिः। स एव स्वरितः अभिनिहितसंज्ञकः। तत्र स्वरविपर्यये जाते उदात्तः एव। यथोक्तम्—'उदात्ते चानुदात्त उदात्तम्' (तै० प्रा० १२.१०)। सूत्रकारमते तत्र 'एकादेश उदात्तेनोदात्तः' (३.३.२२) इत्यनेन अनुदात्तोदात्तयोरेकीभावे उदात्तः एव।

यत्र तु तयोः पूर्वरूपः न, तत्र द्वावपि स्वरौ प्रकृतिरूपेण विद्यमानौ स्तः। अत एव पूर्वः उदात्तः परश्चानुदात्तः एव। तत्र स्वरितस्य निष्पत्त्यभावः ॥११॥

## शशिकला

'पदान्त एकार तथा ओकार से बाद में पदादि अकार का (लोप हो जाता है)' (३.२.३०) इस विधान से पदान्त एकार तथा ओकार से परवर्ती पदादि अकार का पूर्वरूप कहा गया है। वह पूर्वरूप अभिनिहित कहलाता है। शौनक ने इस सन्धि के लिए अभिनिहित संज्ञा का प्रयोग किया है—'अब अभिनिहितः सन्धि (बतलाई जाएगी)। पद के आदि में स्थित अकार इन प्राकृत (ए, ओ) और वैकृत (ह्रस्वपूर्व विसर्जनीय के स्थान पर आए हुए ओ) के साथ मिलकर एक हो जाता है वे ( ए तथा ओ ) यहाँ (सन्धि में) सन्धि के परिणाम के रूप में (विद्यमान रहते हैं) (अर्थात् अभिनिहि-सन्धि होने के पश्चात् भी पदादि एकार तथा ओकार ज्यों के त्यों रहते हैं जब कि पदादि अकार लुप्त हो जाता है') ( ऋ० प्रा० २ ३४)।

इस अभिनिहित सन्धि में यदि पदान्त एकार तथा ओकार उदात्त हो तथा उनसे बाद में पदादि अकार अनुदात्त हो तो उस अनुदात्त अकार का पूर्वपर एकादेश पूर्वरूप होने पर उदात्त एकार तथा ओकार स्वरित हो जाता है। वह स्वरित अभिनिहित संज्ञक होता है। जैसे—'तेंऽवदन्' 'सोंऽब्रवीत्' 'योंऽस्य दक्षिणः कर्णः' 'सोंऽरज्यत्'।

यद्यपि सूत्रकार ने पदान्त एकार तथा ओकार और पदादि अकार के स्वर का स्पष्ट रूप से निर्देश नहीं किया है तथापि अथर्ववेदीया संहिता के पदपाठ के अनुशीलन से ज्ञात होता है कि पदान्त उदात्त एकार तथा ओकार के साथ पदादि अनुदात्त अकार का पूर्वपर एकीभाव पूर्वरूप होने पर ही स्वरित निष्पन्न होता है।

जैसा शौनक ने कहा है—'दो इकारों की प्रश्लिष्ट सन्धि में, क्षैप्र और अभिनिहित (सन्धियों) में उदात्त पूर्व में होने पर (और अनुदात्त बाद में होने पर) शाकल्य के मत में ऐसा (स्वरित) हो जाता है' (ऋ० प्रा० ३.१३)। यही स्वरित अभिनिहित कहलाता है—'सन्धियों के अनुसार उन (स्वरित) स्वरों को पृथक् रूप से वैवृत, तैरोव्यञ्जन, क्षैप्र, अभिनिहित और प्रश्लिष्ट स्वरित कहते हैं......' (ऋ० प्रा० ३.१८)।

तै० प्रा० के अनुसार भी 'पूर्ववर्ती उदात्त एकार तथा ओकार और परवर्ती अनुदात्त अकार का एकीभाव पूर्वरूप होने पर स्वरित स्वर निष्पन्न होता है' (तै० प्रा० १२.९) वहाँ अकार का लोप (एकीभाव पूर्वरूप) होने पर जो स्वरित निष्पन्न होता है, वह अभिनिहित कहलाता है' (तै० प्रा० २०.४)। कात्यायन के मत में भी 'पदान्त उदात्त एकार तथा ओकार से बाद में अनुदात्त अकार का लोप = एकादेश पूर्वरूप होने पर स्वरित की निष्पत्ति होती है (वा० प्रा० ४.६२.६३)। 'वह एकार तथा ओकार से बाद में अकार का लोप होने पर निष्पन्न स्वरित अभिनिहित स्वरित कहलाता है' (वा० प्रा० १.११४)।

इस प्रकार स्पष्ट है कि सभी आचार्यों के अनुसार पदान्त उदात्त एकार तथा ओकार और पदादि अनुदात्त अकार दोनों पूर्वपर के स्थान में एकीभाव पूर्वरूप एकार और ओकार होने पर स्वरित निष्पन्न होता है, वह स्वरित अभिनिहित कहलाता है। वहाँ पूर्वरूप में स्वर का विपर्यय होने पर अर्थात् पदान्त एकार तथा ओकार के अनुदात्त तथा पदादि अकार के उदात्त होने पर एकादेश उदात्त होता है। जैसा तै० प्रा० में कहा गया गया है—'उदात्त बाद में होने पर अनुदात्त का पूर्वपर एकादेश उदात्त हो जाता है'। सूत्रकार के मत में 'उदात्त के साथ एकादेश उदात्त होता है' इसके अनुसार पूर्ववर्ती अनुदात्त तथा परवर्ती उदात्त का एकीभाव उदात्त होता है।

जहाँ दोनों पदान्त एकार तथा ओकार और पदादि अकार प्रकृति-भाव से रहते हैं—उनका एकादेश पूर्वरूप नहीं होता, वहाँ पूर्ववर्ती उदात्त एकार तथा ओकार उदात्तरूप में तथा परवर्ती अनुदात्त अकार अनुदात्त रूप में प्रकृतिभाव से रहते हैं। इस प्रकार एकादेश पूर्वरूप के अभाव में स्वरित की निष्पत्ति नहीं होती ॥ ११ ॥

[ प्राश्लिष्टस्वरितविधानम् ]

## इकारयो प्राश्लिष्टः ॥ १२ ॥

**सू० अ०**—( पदान्त उदात्त ) इकार तथा ( पदादि अनुदात्त) इकार का ( पूर्वपर एकादेश ईकार होने पर निष्पन्न स्वरित ) प्राश्लिष्ट ( कह-लाता है )।

### निर्मलभाष्यम्

'समानाक्षरस्य सवर्णे दीर्घः' ( ३.२.१९ ) इत्यनेन पदान्तस्य पदा-देश्चेकारस्य पूर्वपरयोरेकादेशः ईकार उक्तः। तस्मिन्नेकादेशे चेत् पदान्तः इकारः उदात्तः पदादिश्चानुदात्तः, तयोरेकीभावे स्वरितः भवति। सः स्वरितः प्राश्लिष्टसंज्ञः भवति। यथा—'दि॒वी॑व॒ चक्षु॑ः' ( सं० ७.२६.७ ) 'दि॒वी॑व॒ ज्योतिः' ( सं० ६.९२.३ ) इत्यादयः।

प्रश्लिष्टाज्जायते प्राश्लिष्टः। पूर्वपरयोरेकीभावदीर्घरूपा सन्धि-रेषा प्रश्लिष्टनाम्ना ख्याता। प्रश्लिष्टसंज्ञा शौनकेन प्रयुक्ता—'समानाक्षरे सस्थाने दीर्घमेकमुभे स्वरम्' 'इकारोदयमकारः सोदयः' 'तथा उकारोदय ओकारम्' 'परेष्वैकारमोजयोः' 'ओकारं युग्मयोः' 'एते प्रश्लिष्टा नाम सन्धयः' ( ऋ० प्रा० २.१५-२० )।

ननु शौनकेन दीर्घगुणवृद्धिसन्धीनां कृते प्रश्लिष्टसंज्ञा विहिता। परञ्च पदान्तपदाद्योः इकारयोः प्रश्लिष्टे एव प्राश्लिष्टः, अन्यत्र तु कथं न। उच्यते—प्राश्लिष्टस्वरितविषये आचार्याणां मतैक्यं न। अत्र शौनकेन प्राश्लिष्टस्थाने प्रश्लिष्टसंज्ञा प्रयुक्ता। तथा च द्वयोराचार्ययोः मतं निर्दिष्टम्। शाकल्यमते पदान्तोदात्तस्य इकारस्य पदादेरनुदात्तस्य इकारस्य च पूर्वपरयोरेकीभावे दीर्घे जाते निष्पन्नः स्वरितः प्रश्लिष्टः—

इकारयोश्च प्रश्लेषे क्षैप्राभिनिहितेषु च।
उदात्तपूर्वरूपेषु शाकल्यस्यैवमाचरेत् ॥ (ऋ० प्रा० ३.१३)

परश्च माण्डूकेयस्य मते सर्वेषु प्रश्लिष्टेषु उदात्तस्य पदान्तस्यानुदात्तस्य पदादेरेकीभावे प्रश्लिष्टः स्वरितः भवति—'माण्डूकेयस्य सर्वेषु प्रश्लिष्टेषु तथा स्मरेत्' ( ऋ० प्रा० २०.१४ )। तन्मते प्रश्लिष्टसन्धौ निष्पन्नः स्वरितः प्रश्लिष्टसंज्ञः भवति—

वैवृत्ततैरोव्यञ्जनौ क्षैप्राभिनिहितौ च तान्।
प्रश्लिष्टं च यथासन्धि स्वरानाचक्षते पृथक्॥ (ऋ० प्रा० ३.१८)

तैत्तिरीयप्रातिशाख्यस्य मते तु पदान्तस्य उदात्तस्य उवर्णस्य पदादे अनुदात्तस्य उवर्णस्य पूर्वपरयोरेकीभावे निष्पन्नः स्वरितः प्रश्लिष्टः–'ऊभावे प्रश्लिष्टः' ( तै० प्रा० २०.५ )। कात्यायनस्य मतन्तु शाकल्यस्येव—'इवर्णं उभयतोर्ह्रस्वः प्रश्लिष्टः' ( वा० प्रा० १.११६ )।

सूत्रकारेण इकारयोः ईकारभावे निष्पन्नः स्वरितः प्राश्लिष्ट इत्युक्तः॥ १२॥

## शशिकला

'सवर्ण बाद में होने पर समानाक्षर का ( पूर्वपर एकादेश दीर्घ हो जाता है )' ( ३.२.१९ ) इसके द्वारा पदान्त तथा पदादि इकार का पूर्वपर एकादेश दीर्घ प्राप्त होता है। इस एकादेश में यदि पदान्त इकार उदात्त तथा पदादि इकार अनुदात्त हो तो उनका एकीभाव स्वरित होता है। वह स्वरित प्राश्लिष्ट स्वरित कहलाता है। जैसे 'दि॒वी॑व॒ चक्षुः' 'दि॒वी॑व॒ ज्योतिँ' इत्यादि।

प्रश्लिष्ट से उत्पन्न प्राश्लिष्ट होता है। पूर्वपर एकीभाव यह दीर्घ सन्धि प्रश्लिष्ट कहलाता है। इस सन्धि के लिए प्रश्लिष्ट संज्ञा का प्रयोग शौनक ने किया है। 'समान स्थान वाले दो समानाक्षर एक दीर्घ स्वर-वर्ण हो जाते हैं' इकार बाद में हो तो पूर्ववर्ती अकार परवर्ती ( इकार ) के साथ मिलकर एकार ( हो जाता है )' 'उसी प्रकार उकार बाद में हो तो पूर्ववर्ती अकार ( परवर्ती उकार के साथ मिलकर ) ओकार हो जाता है' '( समानाक्षर स्वर वर्णों से ) बाद में आने वाले ( अर्थात् सन्ध्यक्षर ) के मध्य में जो विषम ( ए ऐ ) हैं वे बाद में हो तो (पूर्ववर्ती अ तथा आ के साथ मिलकर) ऐकार हो जाता है' 'सम (ओ औ) बाद में हों तो (पूर्ववर्ती और परवर्ती मिल कर ) औकार हो जाता है' 'ये प्रश्लिष्ट नामक सन्धियाँ हैं' (ऋ० प्रा० २.१५-२०)।

यहाँ यह शङ्का होती है कि शौनक ने दीर्घ, गुण, तथा वृद्धि सन्धियों के लिए प्रश्लिष्ट संज्ञा का प्रयोग किया है किन्तु पदान्त तथा पदादि इकार की प्रश्लिष्ट सन्धि में निष्पन्न स्वरित ही क्यों वह प्राश्लिष्ट कहलाता है। इस विषय में कहा गया है कि प्राश्लिष्ट स्वरित के विषय में आचार्यों में मतभेद है। शौनक ने प्राश्लिष्ट स्वरित के स्थान पर प्रश्लिष्ट स्वरित का प्रयोग किया है और उस विषय में दो आचार्यों के मतों का उल्लेख किया है। शाकल्प के मत में पदान्त उदात्त इकार तथा पदादि अनुदात्त इकार का पूर्वपर एकीभाव दीर्घ होने पर निष्पन्न स्वरित प्रश्लिष्ट कहलाता है—

'दो इकारों की प्रश्लिष्ट सन्धि में, क्षैप्र तथा अभिनिहित (सन्धियों) में उदात्त पूर्व में होने पर (और अनुदात्त बाद में होने पर) शाकल्य के मत में ऐसा (स्वरित) करना चाहिए' (ऋ० प्रा० ३.१३)।

परन्तु माण्डूकेय के मत में सभी प्रश्लिष्ट सन्धियों में वैसा (उदात्त पूर्व में तथा अनुदात्त बाद में होने पर) स्वरित (होना) स्मरण करना चाहिए। (ऋ०प्रा० २०.१४)। शौनक का मत भी माण्डूकेय के समान ही प्रतीत होता है क्योंकि उन्होंने कहा है—'सन्धियों के अनुसार उन (स्वरित) स्वरों को पृथक् रूप से वैवृत्त, तैरोव्यञ्जन, क्षैप्र, अभिनिहित और प्रश्लिष्ट (स्वरित) कहते हैं' (ऋ० प्रा० ३.१८)।

तै० प्रा० के अनुसार पदान्त उदात्त उकार तथा पदादि अनुदात्त उकार के पूर्वपर एकादेश दीर्घ होने पर निष्पन्न स्वरित प्रश्लिष्ट कहलाता है—'ऊभाव होने पर प्रश्लिष्ट (स्वरित होता है)' (तै० प्रा० २०.५)। किन्तु कात्यायन का मत शाकल्य के समान ही है—दोनों ओर ह्रस्व इवर्ण के (एकीभाव दीर्घ में) प्रश्लिष्ट (स्वरित होता है)' (वा० प्रा० १.११६)। सूत्रकार भी दो इकारों के दीर्घ होने पर प्राश्लिष्ट स्वरित होने के समर्थक हैं ॥१२॥

[ जात्यस्वरितविधानम् ]

**अनुदात्तपूर्वात् संयोगाद्यवान्तात् स्वरितं[1] परमपूर्वं वा जात्यः ॥१३॥**

---

१. (क) 'सरितं' इति पाठः

**सू॰ अ॰**—अनुदात्त है पूर्व में जिसके ऐसे यकारान्त तथा वकारान्त संयोग से बाद वाला स्वरित जात्य (कहलाता है) और जिसके पूर्व में कोई स्वर न हो (वह भी यकारान्त तथा वकारान्त संयोग से बाद वाला स्वरित जात्य कहलाता है)।

## निर्मलभाष्यम्

अनुदात्तः पूर्वे यस्य स अनुदात्तपूर्वः। यकारः वकारश्चान्ते यस्य सः यवान्तः। एकाधिकाक्षरे पदे **अनुदात्तपूर्वात्** अनुदात्तः पूर्वे यस्य तस्माद् **यवान्तात्** यकारश्च वकारश्चान्ते यस्य तस्मात् **संयोगात्** संयुक्तव्यञ्जनात् परं स्वरितं जात्यसंज्ञं भवति। तथा च एकाक्षरे पदे यवान्तात् संयोगाद् अपूर्वं अविद्यमानं पूर्वं स्वरं यस्य तत्स्वरितमपि जात्यसंज्ञं भवति। एवं जात्यस्वरितं द्विधा—एकाधिकाक्षरे पदे अनुदात्तपूर्वं एकाक्षरे पदे अपूर्वञ्च। अनुदात्तपूर्वं यथा—'अमावास्या' (सं० ७.७९ २) 'कन्यां'' (सं० १.१४.२) 'धान्यम्' (सं० ३ २४ २) अपूर्वं यथा—'न्यंक्' (सं० ६.९१.२) 'क्वं' (सं० ९.९.४) 'स्वः' (सं० २.५.२)।

ननु क्षैप्रस्वरितमपि यवान्तात् संयोगात् भवति, कथं नात्र क्षैप्रः। उच्यते—क्षैप्रस्तु द्वयोः पदयोः अन्तःस्थापत्तौ निष्पद्यते। परञ्च जात्यः एकपदे यवान्तात्संयोगात् परं विद्यते। ध्यातव्यमिदमत्र यत् सूत्रकारस्य मते पुल्लिङ्गस्य प्रथमाविभक्तौ एकवचने द्विवचने वहुवचने द्वितीयाविभक्तौ एकवचने द्विवचने विद्यमाने अन्तःपदेऽपि अनुदात्ते परे उदात्तस्यान्तःस्थाभावे निष्पन्नः स्वरितः क्षैप्रः भवति—'अन्तःपदेऽपि पञ्चपद्याम्' (३.३.१५)। 'ऊकारस्य च सर्वत्र' (३.३.१६) 'ओण्योश्च' (३.३.१७) इत्यत्रापि क्षैप्रस्वरितस्य विधानम्। एव स्पष्टं यद् अथर्ववेदसंहितायामतोऽन्यत्र एव अन्तःपदे जात्यस्वरितः भवति।

जात्या जन्मना स्वभावेन एव स्वरितः जात्यः। उदात्तानुदात्तयोः सन्धि बिना निष्पद्यमानत्वादयं जात्यः। आधुनिकविदुषां मते जात्यस्वरितस्यापि स्थलं मौलिकरूपेण सन्धिजमेव यत्तु सन्धिस्थलं न मन्यते। यथा-कन्या = कनी + आ, स्वः = सु + अः। एवं जात्योऽपि क्षैप्र इव उदात्तानुदात्तयोः क्षैप्रसन्धिना एव जायमानः। परञ्च क्षैप्रः द्वयोः पदयोः क्षैप्रसन्धिना निष्पद्यते, जात्यस्तु पदमध्ये क्षैप्रसन्धिना निष्पन्नः भवति। उल्लेखनीयमत्र यत् प्रातिशाख्यकाराणां मते तु पदाः सिद्धाः भवन्ति।

अत एव पदमध्ये सन्ध्यभावः। एवं जात्यः स्वभावेन एव स्वरितः, न तु क्षैप्रसन्धिना जायमानः। अतः स्वरितोऽयम् स्वतन्त्रस्वरिताख्ययाऽप्युक्तः यतोहि अयं स्वसत्तानिमित्तं पूर्वोदात्ताश्रितः न भवति ॥१३॥

## शशिकला

अनुदात्त है पूर्व में जिसके, वह अनुदात्तपूर्व है। यकार तथा वकार हैं अन्त में जिसके, वह यवान्त हैं। एक से अधिक अक्षर वाले पद में अनुदात्त है पूर्व में जिसके ऐसे यवान्त (यकार तथा वकार अन्त वाले) संयोग वाला स्वरित जात्य संज्ञक होता है तथा एक अक्षर वाले पद में यकारान्त और वकारान्त संयोग वाला अपूर्व (पूर्व में नहीं है स्वर जिसके ऐसा) स्वरित भी जात्य संज्ञक होता है। इस प्रकार जात्य स्वरित दो प्रकार का होता है -(१) एक से अधिक अक्षर वाले पद में अनुदात्तपूर्व तथा (२) एक अक्षर वाले पद में अपूर्व स्वरित। अनुदात्त पूर्व जात्य स्वरित जैसे— 'अमावास्या' 'कन्या' 'धान्यम्। अपूर्व जात्यस्वरित जैसे—'न्यंक्' 'क्वं' 'स्वंः'।

यहाँ शङ्का होती है कि क्षैप्रस्वरित भी यकारान्त तथा वकारान्त संयोग से बाद में होता है, तो फिर यहाँ क्षैप्र स्वरित क्यों नहीं होता— जात्य ही क्यों होता है? समाधान यह है कि क्षैप्र स्वरिन दो पदों में अन्तस्थःभाव होने पर निष्पन्न होता है किन्तु जात्य स्वरित एकपद में ही यकारान्त और वकारान्त संयोग संयोग से बाद में होता है। यहाँ यह ध्यातव्य है कि सूत्रकार के मत में पुल्लिङ्ग प्रथमाविभक्ति के तीनों वचनों तथा द्वितीया विभक्ति के एकवचन तथा द्विवचन में विद्यमान अन्तःपद में अनुदात्त बाद में होने पर उदात्त स्वरवर्ण के अन्तःस्थ होने पर निष्पन्न स्वरित क्षैप्र होता है—'पञ्चपदी में अन्तःपद में भी (अन्तस्थःभाव होने पर निष्पन्न स्वरित क्षैप्र कहलाता है)' (३.३.१५)। 'ऊकार का अन्तःस्थ होने पर' तथा 'ओण्यो' में स्वरित क्षैप्र कहलाता है (३.३.१६-१७)। इस प्रकार स्पष्ट है कि अन्तःपद में उपर्युक्त (३.३.१६-१७) में विहित क्षैप्र स्वरित से अन्यत्र जात्यस्वरित होता है।

जाति अर्थात् जन्म अथवा स्वभाव से ही यह स्वरित होता है अतः जात्य कहलाता है। उदात्त तथा अनुदात्त की सन्धि के बिना तथा पूर्ववर्ती उदात्त के प्रभाव रहित होने के कारण यह जात्य कहलाता है। आधुनिक

विद्वानों के मत में जात्य-स्वरित के स्थल भी मौलिक रूप से सन्धि से ही निष्पन्न होती हैं। सम्प्रति उन्हें सन्धि का स्थल नहीं माना जाता। जैसे—कन्यां = कनी + आ, स्वः = सु + अः। इस प्रकार जात्य स्वरित भी क्षैप्र के समान उदात्त तथा अनुदात्त की क्षैप्र सन्धि से निष्पन्न होता है। यहाँ यह उल्लेखनीय है कि प्रातिशाख्यकारों के मत में पद सिद्ध होते हैं। अत एव पद के मध्य में सन्धि का अभाव होता है। इस प्रकार जात्यस्वरित स्वभाव से ही स्वरित होता है, न कि क्षैप्र-सन्धि के परिणाम स्वरूप। इस लिए यह स्वरित स्वतन्त्र-स्वरित भी कहलाता है क्योंकि यह अपनी सत्ता के लिए पूर्ववर्ती उदात्त पर आश्रित नहीं होता ॥ १३ ॥

[ क्षैप्रस्वरितविधानम् ]

## अन्तःस्थापत्तावुदात्तस्यानुदात्ते क्षैप्रः ॥ १४ ॥

**सू० अ०**—अनुदात्त ( स्वर ) बाद में होने पर ( पूर्ववर्ती ) उदात्त ( स्वर ) के अन्तःस्थ हो जाने पर ( निष्पन्न स्वरित ) क्षैप्र ( कहलाता है )।

### निर्मलभाष्यम्

'स्वरे नामिनोऽन्तःस्था' ( ३ २ १६ ) इत्यनेन नामिनः समानाक्षरस्य इवर्णस्य उवर्णस्य ऋवर्णस्य ऌवर्णस्य च अन्तःस्थापत्ति आनुपूर्व्येण यकारः वकारः रेफः लकारश्चोक्तः। सन्धिरेषा क्षैप्रनाम्ना ख्याता। क्षैप्रसंज्ञायाः प्रयोगः शौनकेन कृतः—'समानाक्षरमन्तःस्थां स्वामकण्ठ्यं स्वरोदयम्' 'न समानाक्षरे स्वे स्वे' 'ते क्षैप्रनाम सन्धयः' ( ऋ० प्रा० २ २१-२३ )। अस्यां सन्धौ **अनुदात्ते** असवर्णस्वरे परे **उदात्तस्य** नामिनः समानाक्षरस्य **अन्तःस्थापत्तौ** अन्तःस्थभावे परस्यानुदात्तस्य स्थाने निष्पन्नः स्वरितः **क्षैप्रः** क्षैप्रसंज्ञकः भवति। यथा—'अभ्यंर्चत' ( सं० ७ ८२-१ ) 'वीड्वङ्गः' ( सं० ६ १२५.१ )। ऋवर्णस्य रेफभावे ऌवर्णस्य लकारभावे च निष्पन्नस्य स्वरितस्य निदर्शनं संहितायां न प्राप्तम्।

शौनकेन क्षैप्रसन्धौ जायमानस्य स्वरितस्य कृते क्षैप्रसंज्ञा विहिता—

> वैवृत्ततैरोव्यञ्जनौ क्षैप्राभिनिहितौ च तान्।
> प्रश्लिष्टं च यथासन्धि स्वरानाचक्षते पृथक् ॥
> ( ऋ० प्रा० ३.१८ )

तैत्तिरीयप्रातिशाख्यमते उदात्तस्य इवर्णस्योवर्णस्य च आनुपूर्व्याद् यकारवकारभावे निष्पन्नः स्वरितः क्षैप्रः—'इवर्णोकारयोर्यंवकारभावे क्षैप्र उदात्तयोः' ( तै० प्रा० २०.१ ) कात्यायनस्यापि मतमेवमेव—'युवर्णौ यवौ क्षैप्रः' ( वा० प्रा० १.११५ ) ॥ १४ ॥

## शशिकला

'( असवर्ण ) स्वर बाद में होने पर नामिन् स्वरों का अन्तःस्थ हो जाता है' ( ३.२१६ ) इसके द्वारा नामिन् समानाक्षर इवर्ण, उवर्ण, ऋवर्ण तथा ऌवर्ण के क्रमशः यकार, वकार, रेफ तथा लकार होने का विधान किया गया है। यह सन्धि क्षैप्र नाम से अभिहित होती है। इस सन्धि के लिए क्षैप्र संज्ञा का प्रयोग शौनक ने किया है। 'स्वरवर्णबाद में हो तो पूर्ववर्ती अकष्ठ्च समानाक्षर ( इ, ई, उ, ऊ ) अपना अन्तःस्थ हो जाता है' 'यदि अपना अपना ( अकष्ठ्च ) समानाक्षर बाद में हो तो ( पूर्ववर्ती अकष्ठ्च समानाक्षार अन्तःस्थ नहीं होता )' 'अविकृत ( प्राकृत ) परवर्ती ( स्वरवर्ण ) वाली ये सन्धियाँ क्षैप्र कहलाती है। ( ऋ० प्रा० २.२१-२३ ) इस सन्धि में असवर्ण अनुदात्त स्वर बाद में होने पर उदात्त नामिन् स्वर का अन्तःस्थभाव होने पर परवर्ती अनुदात्त स्वर के स्थान में स्वरित हो जाता है। वह स्वरित क्षैप्र स्वरित कहलाता है। जैसे—'अ॒भ्यर्चत'[1] 'वी॒ड्वं॒ङ्गः'[2]। ऋकार के रेफ तथा ऌकार के लकार होने पर निष्पन्न स्वरित का उदाहरण शौनक शाखा की संहिता में प्राप्त नहीं होता।

शौनक ने क्षैप्र सन्धि में निष्पन्न स्वरित के लिए क्षैप्र स्वरित संज्ञा का प्रयोग किया है— सन्धियों के अनुसार इन ( स्वरित ) स्वरों को पृथक् रूप से वैवृत, तैरोव्यञ्जन, क्षैप्र, अभिनिहित और प्रश्लिष्ट ( स्वरित ) कहते हैं' ( ऋ० प्रा० ३.१८ )। तै० प्रा० के मत में उदात्त इवर्ण तथा उवर्ण के क्रमशः यकार तथा वकार होने पर निष्पन्न स्वरित को क्षैप्र स्वरित कहा गया है—'उदात्त इवर्ण तथा उवर्ण के यकार तथा वकार होने पर ( निष्पन्न स्वरित ) क्षैप्र ( कहलाता है )' ( तै० प्रा० २०.१ )। कात्यायन के अनुसार 'इवर्ण तथा उवर्ण के यकार तथा वकार होने पर ( निष्पन्न स्वरित ) क्षैप्र कहलाता है' ( वा० प्रा० १.११५ )। १४ ॥

---

१. अ॒भि। अ॒र्च॑त॒ (प० पा०)

२. वी॒डु—अ॒ङ्गः (प० पा०)

## अन्तःपदेऽपि पञ्चपद्याम् ॥ १५ ॥

**सू० अ०**—पञ्चपदी में अन्तःपद में भी ( अनुदात्त स्वर से पूर्ववर्ती उदात्त स्वर के अन्तःस्थ हो जाने पर निष्पन्न स्वरित क्षैप्र कहलाता है )।

### निर्मलभाष्यम्

पञ्चपद्यां पुल्लिङ्गस्य प्रथमाविभक्तौ एकवचने द्विवचने बहुचने द्वितीयाविभक्तौ एकवचने द्विवचने च पदस्य मध्येऽपि अन्तःस्थापत्तौ निष्पन्नः स्वरितः क्षैप्रसंज्ञकः भवति। यथा—'पिप्पल्यः सम्' ( सं० ६.१०९.२ ) 'रुदत्यः पुरुषे हते' ( ११.९.१४ )। पञ्चपद्यामिति किम् ? 'पृदाक्वम्' ( सं० १० ४.१७ ) 'विलिप्त्यम्' ( सं० १२.४.४१ ) इत्यत्र क्षैप्रः न भवति। प्रत्युत नित्यरेव ॥ १५ ॥

### शशिकला

पञ्चपदी अर्थात् पुल्लिङ्ग के प्रथमा विभक्ति के एक वचन, द्विवचन, बहुवचन तथा द्वितीया विभक्ति के एक वचन, द्विवचन में पद के मध्य में भी अन्तःस्थभाव होने पर निष्पन्न स्वरित क्षैप्र संज्ञक होता है। जैसे—'पिप्पल्यः सम्'[1] 'रुदत्यः पुरुषे हते'[2]। सूत्र में 'पञ्चपदी में' यह क्यों कहा गया? 'पृदाक्वम्'[3] 'विलिप्त्यम्'[4] यहाँ क्षैप्र स्वरित नहीं होता, प्रत्युत नित्य ( जात्य ) स्वरित होता है ॥ १५ ॥

## ऊकारस्य सर्वत्र ॥१६॥

**सू० अ०**—(उदात्त) ऊकार का (वकार होने पर निष्पन्न स्वरित) सर्वत्र (क्षैप्र कहलाता है)।

### निर्मलभाष्यम्

अन्तःपदे ऊकारस्य वकारभावे सर्वत्र पञ्चपद्यामपञ्चपद्यां च निष्पन्नः स्वरितः क्षैप्रसंज्ञः भवति। यथा—'तन्वा' (सं० १.३३४) 'तन्वे' (सं० १.३.१) 'चम्वोर्योनिं' ( सं० ९.१०.१२ ) 'वध्वश्च' (सं० ९.२.४१) 'तन्वाम्' (सं० १.१८.३) ॥१६॥

---

१. पिप्पल्यः। सम् (प० पा०)
२. रुदत्यः। पुरुषे। हते (प० पा०)
३. पृदाक्वम् (प० पा०)
४. विलिप्त्यम् (प० पा०)

### शशिकला

अन्तःपद में उदात्त ऊकार का वकार होने पर पञ्चपदी तथा अपञ्चपदी में सर्वत्र होने वाला स्वरित क्षैप्र स्वरित कहलाता है। जैसे—'तन्वा'[१] 'तन्वे'[२] 'चुम्वौर्योनिः'[३] 'वुध्वश्च'[४] 'तुन्वाम्'[५] ॥१६॥

## ओण्योश्च ॥१७॥

सू० अ०—'ओण्योः' का भी (अन्त्य स्वरित क्षैप्र होता है)।

### निर्मलभाष्यम्

चशब्दोऽत्र 'क्षैप्रः' इत्यन्वादिशति। ओण्योः इत्यस्य स्वरितः क्षैप्रसंज्ञः भवति। यथा—ओ॒ण्योः क॒विक्र॑तुम् (सं० ७.१४.१) ॥१७॥

### शशिकला

'ओण्यो' इस पद का स्वरित क्षैप्रसंज्ञक होता है। जैसे—ओ॒ण्योः क॒विक्र॑तुम्'[६] ॥१७॥

[ तैरोव्यञ्जनस्वरितविधानम् ]

## व्यञ्जनव्यवेतस्तैरोव्यञ्जनः ॥१८॥

सू० अ०—व्यञ्जन से व्यवहित (उदात्तपूर्व स्वरित) तैरोव्यञ्जन (कहलाता है)।

### निर्मलभाष्यम्

'उदात्तादनुदात्तं स्वर्यते' 'नोदात्तस्वरितपरम्' (३.३.२३,२६) इत्येतेभ्यां उदात्ते स्वरिते वा परे अविद्यमाने सति उदात्तात्परस्यानुदात्तस्य स्वरितविधानम्। तत्स्वरितः चेत् पूर्वेणोदात्तेन व्यञ्जनव्यवेतः व्यञ्जनव्यवहितः स्यात् तत्तैरोव्यञ्जनसंज्ञकं भवति। यथा—'देवीर्द्वारो

१. तन्वा (प० पा०)
२. तन्वे (प० पा०)
३. चुम्वोः। योनिः (प० पा०)
४. वध्वः। च॒। (प० पा०)
५. तन्वाम् (प० पा०)
६. ओ॒ण्योः। क॒वि—क्र॑तुम् (प० पा०)

बृहतीर्विश्वमिन्वा ( सं० ५.१२.५ ) 'निधिभिः सखायः' ( सं० ७७२.२ ) 'अमृतासः' ( सं० ७७३ ३ ) इत्यादिषु पूर्वेणोदात्तेन व्यञ्जनव्यवहितः स्वरितः तैरोव्यञ्जनसंज्ञः भवति ।

शौनकमतेऽपि उदात्ते स्वरिते वा परे अविद्यमाने सति उदात्तात् परः व्यञ्जनेनान्तर्हितः अनुदात्तः स्वरितः ।

उदात्तपूर्वं नियतं विवृत्या व्यञ्जनेन वा ।
स्वर्यन्तेऽन्तर्हितं न चेदुदात्तस्वरितोदयम् ॥ (ऋ० प्रा० ३.१७)

तदेव तैरोव्यञ्जनसंज्ञः—'वैवृत्ततैरोव्यञ्जनौ' (ऋ० प्रा० ३.१८) । तैत्तिरीयप्रातिशाख्यानुसारं पदे उदात्ताद्व्यञ्जनव्यवेतः स्वरितः तैरोव्यञ्जनः—'उदात्तपूर्वस्तैरोव्यञ्जनः' ( तै० प्रा० २०.७ ) । कात्यायनानुसारमुदात्तपूर्वः व्यञ्जनयुतः स्वरितः तैरोव्यञ्जनः 'स्वरो व्यञ्जनयुतस्तैरोव्यञ्जनः' ( वा० प्रा० १.१७ ) । व्यञ्जनयुतः व्यञ्जनव्यवेतः इत्यर्थः ॥१८॥

### शशिकला

'उदात्त तथा स्वरित बाद में होने पर स्वरित नहीं होता' 'उदात्त से परवर्ती अनुदात्त स्वरित ( हो जाता है )' के द्वारा उदात्त से परवर्ती अनुदात्त के स्वरित होने का विधान किया गया है। वह स्वरित यदि पूर्ववर्ती उदात्त से व्यञ्जन द्वारा व्यवहित हो तो तैरोव्यञ्जन संज्ञक होता है। जैसे—'देवीर्द्वारो बृहती विश्वमिन्वा' 'निधिभिः सखायः' 'अमृतासः' इत्यादि में पूर्ववर्ती उदात्त से व्यञ्जनव्यवहित स्वरित तैरोव्यञ्जन कहलाता है।

शौनक के मत में भी उदात्त अथवा स्वरित बाद में न होने पर उदात्त से परवर्ती व्यञ्जनव्यहित अनुदात्त स्वरित हो जाता है। वही स्वरित तैरोव्यञ्जन होता है। तै० प्रा० के अनुसार यह स्वरित एक पद में होता है। कात्यायन के अनुसार व्यञ्जन से युक्त उदात्तपूर्व स्वरित तैरोव्यञ्जन कहलाता है। व्यञ्जन से युक्त का अर्थ है, व्यञ्जन से व्यवहित ॥१८॥

[ पादवृत्तस्वरितविधानम् ]

## विवृत्तौ पादवृत्तः ॥१९॥

सू० अ०—विवृत्ति में ( होने वाला उदात्तपूर्व-स्वरित ) पादवृत्त (कहलाता है) ।

## निर्मलभाष्यम्

द्वयोः व्यञ्जनाव्यवहितयोः स्वरयोः मध्ये विवृत्ति भवति। यथोक्तं शौनकेन—'स्वरान्तरं तु विवृत्तिः' (ऋ० प्रा० २.३)। विवृत्तौ चेत् पूर्वस्वरवर्णः उदात्तः परश्चानुदात्तः, तत्र तस्यानुदात्तस्य स्वरितः भवति। पूर्वोदात्ताद् विवृत्तिव्यवहितः स्वरितः पादवृत्तसंज्ञकः। यथा—'याः कृत्या आङ्गिरसीर्याः कृत्या आसुरीर्याः कृत्याः स्वयङ्कृता या उ चान्येभिराभृताः' (सं० ८५.९) इत्यत्र विवृत्तिव्यवहितः क्रमेण 'आ' 'आ' 'उ' इत्ययं स्वरितः पादवृत्तसंज्ञकः। शौनकेन अस्य कृते वैवृत्तसंज्ञा प्रयुक्ता—'वैवृतस्तैरोव्यञ्जनौ…' (ऋ० प्रा० ३.१८) ॥१९॥

## शशिकला

व्यञ्जन से अव्यवहित दो स्वरों के बीच विवृत्ति होती है। जैसा शौनक ने कहा है - 'स्वरों के मध्य में विवृत्ति होती है'। विवृत्ति में यदि पूर्ववर्ती स्वर उदात्त तथा परवर्ती अनुदात्त हो तो उस अनुदात्त का स्वरित हो जाता है, वह स्वरित पादवृत्त कहलाता है। जैसे—"याः कृत्या आङ्गिरसीर्याः कृत्या आसुरीर्याः कृत्याः स्वयङ्कृता या उँ चान्येभिराभृताः"[1]। यहाँ विवृत्ति से व्यवहित उदात्तपूर्व 'आ' 'आ' तथा 'उ' का स्वरित पादवृत्त संज्ञक है। शौनक ने पादवृत्त के लिए वैवृत्त संज्ञा का प्रयोग किया है ॥१९॥

[ अवग्रहस्वरितविधानम् ]

## अवग्रहे सविधः ॥२०॥

**सू० अ०**—पृथक्करण (अवग्रह) में (होने वाला उदात्तपूर्व स्वरित) उसी प्रकार वाला (अवग्रह) (कहलाता है)।

## निर्मलभाष्यम्

पदपाठे सावग्रहपदस्य समस्तपदस्य अवग्रहः पृथक्करणं भवति। एषु सावग्रहपदेषु पूर्वपदस्यान्तः उदात्तः परपदस्यादिः अनुदात्तः चेत् तदनुदात्तस्य स्वरितः भवति। स स्वरितः अवग्रहव्यवधानत्वात् सविधः अवग्रहसंज्ञः भवति। यथा—'उक्षान्नाय' 'वशान्नाय' (सं० ३.२१.६) शतौदना'

---

१. याः। कृत्याः। आङ्गिरसीः। याः। कृत्याः। आसुरीः। याः। कृत्याः। स्वयम्—कृताः। याः। ॐ इत्यूँ। च। अन्येभिः। आ—भृताः (प० पा०)

(सं० १०.९.१) 'शतायुंषा' (सं० ३.११.३,४) 'दीर्घायुः' (सं० १४.२.२) इत्यत्र संहितायां सावग्रहपदस्य पूर्वपरपदयोः सन्धौ एकीभावे जाते पूर्वोदात्तस्य परस्यानुदात्तस्य एकादेशः उदात्तः। तदेकादेशात् प्राप्तादुदात्तात् परस्यानुदात्तस्य एव स्वरितः दृश्यते, न तु अवग्रहस्वरितः। परञ्च पदपाठेऽवग्रहस्वरितः प्राप्यते। अधोलिखितेषु निदर्शनेषु एकीभावस्याभावत्वाद् अवग्रहस्वरितः संहितायामेव दृश्यते। 'शतवृंषण्यम्' (सं० १.३.१) 'संश्रुंतम्' (सं० १.३.६) 'आभृंतः' (सं० १ ६ ४) इत्यत्रावग्रहेण व्यवहितः स्वरितः पादवृत्तः ॥२२॥

## शशिकला

पदपाठ में समस्त पद का पृथक्करण होता है। इन समस्त पदों में पूर्ववर्ती पद का अन्त स्वर उदात्त तथा परवर्ती का आदि स्वर अनुदात्त हो तो अनुदात्त स्वरित हो जाता है। वह स्वरित अवग्रह का व्यवधान होने के कारण अवग्रह स्वरित कहलाता है। जैसे—'उक्षान्नाय'[1] 'वशान्नाय'[2] 'शतौदंना'[3] 'शतायुंषा'[4] 'दीर्घायुः'[5]। यहाँ संहिता में सावग्रह पद के पूर्वपद तथा परपद में एकीभाव के परिणाम स्वरूप एकादेश उदात्त हो गया है। पदपाठ में अवग्रह स्वरित दिखलाई पड़ता है किन्तु अधोलिखित उदाहरणों में एकादेश प्राप्त न होने से संहिता में ही दिखलाई पड़ता है—'शतवृंषण्यम्'[6] 'संश्रुंतम्'[7] 'आभृंतः'[8] ॥२०॥

[ कम्पविधानम् ]

### अभिनिहितप्राश्लिष्टजात्यक्षैप्राणामुदात्तस्वरितोदयानामणुमात्रा निघाता[9] विकम्पितं तत्कवयो वदन्ति ॥ २१ ॥

सू० अ०—उदात्त तथा स्वरित है बाद में जिसके ऐसे अभिनिहित, प्राश्लिष्ट, जात्य तथा क्षैप्र ( स्वरित ) की ( परवर्ती ) अणुमात्रा निघात होती है। उसी को आचार्य लोग विकम्पित कहते हैं।

---

१. उक्ष—अंन्नाय (प० पा०)
२. वशा—अंन्नाय (प० पा०)
३. शत—ओंदना (प० पा०)
४. शत—आंयुषा (प० पा०)
५. दीर्घ—आंयुः (प० पा०)
६. शत—वृंषण्यम् (प० पा०)
७. सम्—श्रुंतम् (प० पा०)
८. आ—भृंतः (प० पा०)
९. (क) निधातो इति पाठः।

## निर्मलभाष्यम्

उदात्तश्च स्वरितश्च उदये परे यस्य स उदात्तस्वरितोदयः। अभिनिहितः प्राश्लिष्टः जात्यः क्षैप्रश्च अभिनिहितप्राश्लिष्टजात्यक्षैप्राः। **उदात्तस्वरितोदयानां** उदात्तः स्वरितः वा उदये परे येषां तेषां अभिनिहितप्राश्लिष्ट**जात्यक्षैप्राणाम्** अभिनिहितस्य प्राश्लिष्टस्य जात्यस्य क्षैप्रस्य च परवर्ती **अणुमात्रा** चतुर्थांशमात्रा **निघाता** अनुदात्तं भवति। तदनुदात्तं **विकम्पितं** कम्पं भवति इति **कवयः वदन्ति** उच्यन्ते। अभिनिहित यथा—'योऽभीयातः' (सं० ११.२.१३) 'योऽस्याम्' (सं० ३ २९ १) 'धुर्मोऽभीन्धे' (सं०११ ३ १८) 'भागोऽप्स्वन्तः' ( सं० १० ५ १५ ) इत्यादयः। प्राश्लिष्ट यथा—'भिन्द्दीदम्' ( सं० ७.१८ १ ) 'दिशीतः' ( सं० ११ २.१२ ) इत्यादयः। जात्य यथा—'अमावास्यायाम्' ( सं० ७ ७९.२ ) रुद्रत्यः पुरुषे' ( सं० ११ ९ १४ ) इत्यादयः। क्षैप्रस्य यथा—'नद्यो नाम ( सं० ३.१३.१ ) 'पिप्पल्यः सम्' ( सं० ६.१०९.२ ) इत्यादयः।

कम्पस्यावबोधनार्थं स्वरितस्य उच्चारणप्रक्रिया ध्यातव्या। सूत्रकारमते "स्वरितस्यादितो मात्रार्धमुदात्तम्" ( १.१ १७ ) इत्यनेन स्वरितस्य पूर्वार्धभागः उदात्तेन स्वरेण उच्चारितः भवति। परार्धभागस्य विषयेऽपि अत्र विहितम्—परभागोऽनुदातो भवति—'उदात्तपूर्वः परोऽनुदात्तः स्वरितसन्धिः' ( ३.३.१० )।

प्रस्तुतविधानेन उदात्ते स्वरिते वा परे सति स्वरितस्य पराणुमात्राकाल एव निघातः अनुदात्तः। एवमवशिष्टस्तु पूर्वभागः उदात्तः। उदात्तपरे स्वरितस्य पूर्वभागस्योदात्तस्योच्चारणे ध्वन्यारोहः जातस्ततः पराणुमात्रिकस्यानुदात्तस्योच्चारणे ध्वन्यवरोहश्च। पुनः परोदात्तस्योच्चारणे ध्वन्यारोहः भवति। एवमुदात्ते परे सति स्वरितस्य पूर्वभागस्योदात्तस्य ध्वन्यारोहानन्तरं परस्योदात्तस्य ध्वन्यारोहस्य पूर्वञ्च मध्येऽणुमात्रिकस्यानुदात्तस्य ध्वन्यावरोहे काठिन्यं भवति। अत एव तस्मिन् कम्पनविशेषञ्जायते। तदेव कम्पनविशेषः कम्पसंज्ञयाऽभिहितः। एवमेव स्वरिते परे स्वरितस्य पूर्वभागस्योदात्तस्योच्चारणे ध्वन्यारोहः ततः पराणुमात्रिकस्यानुदात्तस्य कृते ध्वन्यावरोहः पुनश्च परस्य स्वरितस्य पूर्वभागस्योदात्तस्योच्चारणे ध्वन्यारोहः। स्वरिते परेऽपि स्वरितस्य पूर्वभागस्योदात्तस्य परस्वरितस्य च पूर्वभागस्योदात्तस्यारोहमध्येऽणुमात्रिकस्य अनुदात्तस्यावरोहे एवमेव कम्पः ज्ञातव्यः।

अभिनिहितप्राश्लिष्टजात्यक्षैप्राणामेव किम् ? अन्यत्र तैरोव्यञ्जन-पादवृत्तावग्रहाणां कथं न कम्पः। उच्यते—एते तैरोव्यञ्जनादयः स्वरित-स्वरा मूलतः अनुदात्तरेव। उदात्तात्परः अनुदात्तः स्वरितः, परश्च उदात्ते स्वरिते वा परे अनुदात्तः स्वरितः न भवति। अत एव उदात्ते स्वरिते वा परे सति एते नोपलभ्यन्ते। तत्र तु अनुदात्तः एव। ध्यातव्यमिदमत्र स्वरि-तानामभिनिहितप्राश्लिष्टजात्यक्षैप्रेषु परेष्वेव एवं कम्पः भवति। यतो हि अन्ये स्वरिताः उदात्तपूर्वाः भवन्ति। उदात्तपूर्वाभावात् स्वरितपूर्वाद् अन्येषां स्वरितानां प्राप्तिरेव न। एवं उदात्ते परे अभिनिहितप्राश्लिष्टजात्यक्षैप्रेषु वा परेषु सत्सु एव अभिनिहितप्राश्लिष्टजात्यक्षैप्राणां परभागरनुदात्तः विकम्पितं भवति। अत्रोऽन्यत्र कम्पस्य स्थितिरेव नोपलब्धा ॥ २१ ॥

## शशिकला

उदात्त तथा स्वरित है बाद में जिसके वह उदात्तस्वरितोदय है। अभिनिहित, प्राश्लिष्ट, जात्य तथा क्षैप्र अभिनिहितप्राश्लिष्टजात्यक्षैप्र हैं। उदात्त अथवा स्वरित बाद में होने पर अभिनिहित, प्राश्लिष्ट, जात्य तथा क्षैप्र का परवर्ती चतुर्थांश मात्रा ( अणुमात्रा ) अनुदात्त ( निघात ) होता है। वह अनुदात्त विकम्पित होता है—ऐसा आचार्य लोग मानते ( कहते ) हैं। अभिनिहित जैसे—'यो॑ऽभीयातः' 'ये॑ऽस्याम्' 'ध॒र्मो॑ऽभो॑न्धे' भा॒गो॑ऽ-प्स्वन्तः' इत्यादि। प्रश्लिष्ट जैसे—'भि॒न्दी॑दम्' 'दि॒शी॑तः' इत्यादि। जात्य जैसे—'अ॒मा॒वा॒स्या॑ माम्' 'रु॒द॒त्यः पुरु॑षे' इत्यादि। क्षैप्र जैसे—'न॒द्यो॑ नाम॑' 'पि॒प्प॒ल्यः॑ सम्' 'रु॒द॒त्यः॑ पुरु॑षे ह॒ते' इत्यादि।

कम्प की जानकारी के लिए स्वरित की उच्चारण प्रक्रिया ध्यातव्य है। सूत्रकार के अनुसार 'स्वरित का पूर्ववर्ती आधा भाग उदात्त होता है। परार्ध भाग अनुदात्त होता है।' यहाँ बतलाया गया है कि उदात्त अथवा स्वरित बाद में होने पर अभिनिहित इत्यादि स्वरितों की परवर्ती चतुर्थांशमात्रा अनुदात्त होता है। इस प्रकार अवशिष्ट पूर्ववर्ती भाग उदात्त होता है। उदात्त बाद में होने पर स्वरित के पूर्ववर्ती भाग उदात्त के उच्चारण में ध्वनि का आरोह तथा परवर्ती चतुर्थांश अनुदात्त के उच्चा-रण में ध्वनि का अवरोह होता है पुनः परवर्ती उदात्त के उच्चारण में ध्वनि का आरोह हो जाता है। इस प्रकार उदात्त बाद में होने पर स्वरित के आदि भाग उदात्त तथा परवर्ती उदात्त के उच्चारण के मध्य में स्वरित के परवर्ती अणुमात्रिक अनुदात्त के अवरोह में कठिनाई होती है

जिससे उस अनुदात्त की अवरोह ध्वनि में एक विशेष प्रकार का कम्पन हो जाता है। वही कम्पन कम्प कहलाता है। इसी प्रकार स्वरित बाद में होने पर स्वरित के पूर्ववर्ती भाग उदात्त के उच्चारण में ध्वनि का आरोह तथा परवर्ती चतुर्थांशमात्रिक अनुदात्त के उच्चारण में ध्वनि के अवरोह के बाद परवर्ती स्वरित के आदि भाग उदात्त के उच्चारण में ध्वनि का आरोह होता है। इस प्रकार स्वरित बाद में होने पर भी पूववर्ती तथा परवर्ती स्वरित के आदि भाग उदात्त के उच्चारण में ध्वनि के आरोहों के मध्य पूर्ववर्ती स्वरित का परवर्ती चतुर्थांश मात्रा-कालिक भाग अनुदात्त के उच्चारण में कम्प हो जाता है।

अभिनिहित, प्राश्लिष्ट, जात्य तथा क्षैप्र स्वरित का ही कम्प क्यों होता है। अन्य तैरोव्यञ्जन, पादवृत्त तथा अवग्रह स्वरितों का क्यों नहीं होता। इस विषय में कहते हैं कि ये तैरोव्यञ्जन इत्यादि स्वरित मूल रूप से अनुदात्त होते है। ये उदात्त से परवर्ती अनुदात्त के स्थान पर प्राप्त स्वरित हैं किन्तु उदात्त अथवा स्वरित बाद में होने पर अनुदात्त स्वरित नहीं होता—अनुदात्त ही रहता है। इसलिए उदात्त अथवा स्वरित बाद में होने पर ये स्वरित प्राप्त ही नहीं होते। यहाँ यह ध्यातव्य है कि स्वरितों में अभिनिहित, प्राश्लिष्ट, जात्य तथा क्षैप्र बाद में होने पर कम्प की प्राप्ति होती है क्योंकि इनसे अन्य स्वरितों के पूर्व में उदात्त होता है अतः ये उदात्तपूर्व स्वरित भी कहे जाते हैं। कम्प के विषय में स्वरित पूर्व में होता है अतः उससे बाद में उदात्तपूर्व स्वरित हो ही नहीं सकते। इस प्रकार उदात्त तथा अभिनिहित, प्राश्लिष्ट, जात्य और क्षैप्र स्वरितों के बाद में होने पर ही अभिनिहित, प्राश्लिष्ट, जात्य तथा क्षैप्र स्वरितों का कम्प होता है। इससे अन्यत्र कम्प की स्थिति ही नहीं प्राप्त होती।

अथर्व वेद की संहिताओं में ह्रस्व स्वर वाले स्वरित का कम्प १'_ चिह्न से तथा दीर्घ स्वर वाले स्वरित का कम्प ३'_ चिह्न से प्रदर्शित किया जाता है॥ २१॥

[ उदात्तेन एकादेश उदात्तः ]

## एकादेश उदात्तेनोदात्तः ॥ २२ ॥

**सू॰ अ॰**—( स्वरों की सन्धि में ) उदात्त के साथ एकादेश उदात्त ( होता है )

## निर्मलभाष्यम्

अत्र स्वरयोः सन्धिः विहिता। एकीभाव-सन्धौ उदात्तेन पूर्वेण परेण वा उदात्तेन सह एकादेशं उदात्तः स्यात्। यस्मिन्नेकीभावसन्धौ पूर्वमुत्तरं वा उदात्तं इतरन्तु अन्ये स्वराः तत्र एकादेशेन निष्पन्नः स्वरः उदात्तः भवति। यथा—'एणीव' (सं० ५.१४.११) 'मृगीव' (सं० ५.१४.११) 'उतान्तरिक्षम्' (सं० २.१२.१) 'दिव्यासनिः' ॥ २२ ॥

## शशिकला

यहाँ स्वरों की सन्धि का विधान किया गया है। एकीभाव सन्धि में पूर्ववर्ती अथवा परवर्ती उदात्त के साथ एकीभाव उदात्त होता है। जिस एकीभाव सन्धि में पूर्ववर्ती अथवा उत्तरवर्ती उदात्त होता है तथा दूसरा अन्य स्वर होता है वहाँ एकादेश से निष्पन्न स्वर भी उदात्त होता है। जैसे – एणीव'[1] 'मृगीव'[2] 'उतान्तरिक्षम्'[3] 'दिव्यासनिः'[4] ॥ २२ ॥

[ उदात्तादनुदात्तस्य स्वरितभावः ]

## उदात्तादनुदात्तं स्वर्यते ॥ २३ ॥

सू० अ०—उदात्त से बाद में अनुदात्त स्वरित हो जाता है।

## निर्मलभाष्यम्

स्वराणामेकीभावे स्वरविशेषमुक्त्वा इदानीं व्यञ्जनेनाव्यवहितानां च स्वराणां यः स्वरितः संहितायां भवति तमाह। उदात्ताद् उदात्तस्वरात् परम् अनुदात्तम् अनुदात्तस्वरं स्वरितं भवति। यथा—'ते नो मुञ्चतम्' (सं० ४.२६.५) 'यश्चर्षणिप्रः' (सं० ४.२४.३) ॥२३॥

## शशिकला

स्वरों के एकीभाव में स्वर-विशेष उदात्त का कथन करके व्यञ्जन से अव्यवहित तथा व्यञ्जन से व्यवहित स्वरों का जो स्वरित संहिता में

---

१. एणी—इव (प० पा०)
२. मृगी—इव (प० पा०)
३. उत। अन्तरिक्षम् (प० पा०)
४. दिव्या। असनिः (प० पा०)

होता है, उसको कहते हैं। उदात्त स्वर से बाद में व्यञ्जन का व्यवधान होने पर अथवा न भी होने पर अनुदात्त स्वरित हो जाता है। जैसे—'ते नों मुञ्चतम्'[1] 'यश्चर्षणिप्रः'[2] ॥ २३ ॥

## व्यासेऽपि समानपदे ॥ २४ ॥

**सू० अ०**—विच्छेद न होने वाले एकपद में भी ( उदात्त से बाद में अनुदात स्वरित हो जाता है )।

### निर्मलभाष्यम्

**समानपदे** एकपदे **व्यासे** विच्छेदाभावे अपि उदात्तात्परम् अनुदात्तं स्वरितं भवति। यथा—'अयुतम्' ( सं० ८ २.२१ ) 'अमृतम्' ( सं० १.४.४ ) 'अन्तरिक्षम्' ( सं० २.१२ १ ) इत्यादयः ॥ २४ ॥

### शशिकला

विच्छेद न होने वाले एक पद में भी उदात्त से बाद में अनुदात्त स्वरित हो जाता है। जैसे— अयुतम्'[3] 'अमृतम्'[4] 'अन्तरिक्षम्'[5] इत्यादि ॥ २४ ॥

## अवग्रहे च ॥ २५ ॥

**सू० अ०**—पृथक्करण होने पर ( अवग्रह में ) भी ( उदात्त से बाद में अनुदात्त स्वरित हो जाता है )।

### निर्मलभाष्यम्

**चशब्दः** 'उदात्तादनुहस्तं स्वर्यते' ( ३ ३.२३ ) इत्यन्वादिशति। पदपाठे **अवग्रहे** पृथक्करणेऽपि समानपदे उदात्तादनुदात्तं स्वरितं भवति। पदपाठे समस्तपदानां पृथक्करणं भवति। तत्रापि पृथक्करणे चेत् पूर्वपदान्तः उदात्तः पराद्यनुदात्तश्च तदनुदात्तं स्वरितं भवति। यथा—'सु-शृतम् ( प०

---

१. ते। नः। मुञ्चतम् (प० पा०)
२. यः। चर्षणि—प्रः (प० पा०)
३. अयुतम् (प० पा०)
४. अमृतम् (प० पा०)
५. अन्तरिक्षम् (प० पा०)

पा० सुशृंतम्' ( सं० ७७२ ३ ) 'सु-दृंढम् ( प० पा० ) सुदृंढम्' ( सं० १०.२.३ ) 'सु-भृंतम् ( प० पा० ) सुभृंतम्' ( सं० ६.३९ १ ) 'सु-हुंतम् ( प० पा० ) सुहुंतम्' ( सं० ६ ७१ १ ) इत्यादयः । अयमेव स्वरितः अवग्रहसंज्ञः विद्यते ।। २५ ।।

## शशिकला

सूत्र में प्रयुक्त शब्द 'उदात्त से बाद में अनुदात्त स्वरित हो जाता है' का अन्वादेश करता है । पदपाठ में पृथक्करण होने पर भी एक पद में उदात्त से बाद में अनुदात्त स्वरित हो जाता है । वस्तुतः पदपाठ में समस्तपदों का पृथक्करण हो जाता है । वहाँ पृथक्करण होने पर भी यदि पूर्वपद अन्तोदात्त तथा परपद का आदि अनुदात्त हो तो वह अनुदात्त स्वरित हो जाता है । जैसे— सु-शृंतम् ( प० पा० ) सुशृंतम्' ( सं० पा० ) सु-दृंढम् (प० पा० ) सुदृंढम्' ( सं० पा० ) 'सु-भृंतम् ( प० पा० ) सुभृंतम्' ( सं० पा० ) 'सु-हुंतम् ( प० पा० ) सुहुंतम्' ( सं० पा० ) इत्यादि ।।२५।।

[ तन्निषेधः ]

# नोदात्तस्वरितपरम् ॥ २६ ॥

सू० अ०—उदात्त तथा स्वरित है बाद में जिसके वह ( उदात्त से बाद वाला अनुदात्त स्वरित ) नहीं ( होता ) ।

## निर्मलभाष्यम्

पूर्वविधानस्य 'उदात्तादनुदात्तंस्वर्यंते' (३ २.२३) इत्यस्यापवादोऽयम् । उदात्तः स्वरितश्च परं यस्य **तदुदात्तस्वरितपरम्**. अनुदात्तं, उदात्तात् परं विद्यमानमपि स्वरितं न भवति । यथा —'शं न् आपः' ( सं० १.६.४ ) 'यो अ्स्य विश्व जंन्मनः' ( सं० ११४ २३ ) 'अ्स्य सुतस्य् स्वंः' ( सं० २. ५ २ ) इत्यादयः । अस्यानुदात्तस्य कृते तैत्तिरीयप्रातिशाख्ये विक्रमसंज्ञा प्रयुक्ता—'स्वरितयोर्मध्ये यत्र नीचं स्यादुदात्तयोर्वाऽन्यतरतो वोदात्तस्वरितयोः स विक्रमः' ( तै० प्रा० २१.१ )। कात्यायनेन अस्य कृते निहितसंज्ञा प्रयुक्ताः 'निहितमुदात्तस्वरितपरम्', ( वा० प्रा० ४.१३८ ) इति ।।२६।।

## शशिकला

यह पूर्ववर्ती विधान 'उदात्त से बाद में अनुदात्त स्वरित ( हो जाता है )' का अपवाद है । उदात्त तथा स्वरित बाद में है जिसके वह उदात्त-

स्वरितपर है। उदात्त तथा स्वरित बाद में है जिसके वह उदात्त से परवर्ती अनुदात्त स्वरित नहीं होता। जैसे—'शं न् आपः'[१] 'यो अ॒स्य विश्वजंन्मनः'[२] 'अ॒स्य सु॒तस्य॒ स्वः'[३]। इस अनुदात्त के लिए तै० प्रा० में विक्रम संज्ञा का प्रयोग किया गया है—'दो स्वरितों के मध्य में, दो उदात्तों के मध्य में अथवा इससे अन्य उदात्त तथा स्वरित के मध्य में अनुदात्त विक्रम कहलाता है'। कात्यायन ने इसके लिए निहित संज्ञा का प्रयोग किया है—'उदात्त तथा स्वरित बाद में होने पर उदात्त से बाद में (अनुदात्त) निहित कहलाता है'॥ २६॥

[ प्रचयविधानम् ]

## स्वरितादनुदात्त[४] उदात्तश्रुतिः ॥ २७॥

सू० अ०—स्वरित से बाद में (एक अथवा अनेक) अनुदात्त प्रचय (उदात्तश्रुति) (हो जाता है)।

### निर्मलभाष्यम्

**स्वरितात्** स्वरितस्वरात् परः एकोऽनेको वा **अनुदात्तः उदात्तश्रुतिः** प्रचयः भवति। चेत् तस्य परे उदात्तः स्वरितः वा न स्यात्। 'उदात्तश्रुति' इत्यनेन ज्ञायते यत् स्वरितात् अनुदात्तस्योच्चारणं उदात्तश्रुत्याः उदात्तवद्भवति। यथा—'देवीर्द्वारो बृहतीर्विश्वमिन्वाः' (सं० ५.१२.५) 'माध्वींधातारा विदथस्य सत्पती'' (सं० ७.७३.४) इत्यादयः॥ २७॥

### शशिकला

स्वरित से बाद में एक अथवा अनेक अनुदात्त प्रचय हो जाता है यदि उस अनुदात्त से बाद में उदात्त अथवा स्वरित न हो। 'उदात्तश्रुति' से ज्ञात होता है कि स्वरित से बाद में अनुदात्त का उच्चारण उदात्त के समान होता है। जैसे—'देवीर्द्वारो बृहतीर्विश्वमिन्वाः'[५] 'माध्वींधातारा विदथस्य सत्पती'[६] इत्यादि॥ २७॥

---

१. शम्। न॒ः। आपः (प० पा०)
२. यः। अ॒स्य। वि॒श्व-जंन्मन (प० पा०)
३. अ॒स्य। सु॒तस्यं। स्वं (प० पा०)
४. (क) अनुदात्तमुदात्तश्रुतिः इतिपाठः।
५. देवीः। द्वा॒र॒ः। बृ॒ह॒ती॒ः। वि॒श्व॒म् इ॒न्वाः (प० पा०)
६. माध्वी। धा॒र्ता॒रा॒। वि॒द॒थ॒स्य॒। स॒त्प॒ती॒ (प० पा०)

## व्यासेऽपि समानपदे ॥२८॥

सू० अ०—विच्छेद न होने वाले एकपद में भी (स्वरित से बाद में अनुदात्त प्रचय हो जाता है)।

### निर्मलभाष्यम्

**व्यासे** अविच्छेदे सत्यपि **समानपदे** एकपदे स्वरितादनुदात्तः उदात्त-श्रुतिःप्रचयः भवति। यथा—'सखा॑या' (सं० ९९.२०) 'कुकार्टिकाम्'[1] (सं० १०.२.८) इत्यादयः ॥२८॥

### शशिकला

विच्छेद न होने वाले (व्यास) एक पद में स्वरित से बाद में अनु-दात्त प्रचय हो जाता है। जैसे—'सखा॑या' 'कुकार्टिकाम्' इत्यादि ॥२८॥

## अवग्रहे च ॥२९॥

सू० अ०—पृथक्करण होने पर (अवग्रह में) भी (स्वरित से बाद में अनुदात्त प्रचय हो जाता है)।

### निर्मलभाष्यम्

चशब्दोऽत्र 'स्वरितादनुदात्त उदात्तश्रुतिः' इत्यन्वादेशकः। पदपाठे समस्तपदस्य **अवग्रहे** पृथक्करणे सत्यपि स्वरितात् पूर्वपदान्तात् परपद-स्यादितः एक अनेकः वा अनुदात्त. उदात्तश्रुतिः भवति। यथा—श्वन्-वती (प० पा०) 'श्वन्वती' (सं० ११९.१५) 'स्वः—वतीः (प० पा०) स्ववंतीः' (सं० १८.१.२०) 'अश्मन्'—वतीः (प० पा०) अश्मंन्वतीः (सं० १२.२.२६) इत्यादयः ॥२९॥

[ तन्निषेधः ]

## स्वरितोदात्तेऽनन्तरमनुदात्तम्[2] ॥३०॥

सू० अ०—स्वरित तथा उदात्त बाद में होने पर (स्वरित से) बाद वाला (अनुदात्त) अनुदात्त (ही रहता है)।

---

१. कुकार्टिकाम् (प० पा०)

२. (क) नन्तरमुदात्तम् इति पाठः

### निर्मलभाष्यम्

स्वरितश्चोदात्तश्च स्वरितोदात्तौ। तस्मिन् **स्वरितोदात्ते** परे सति स्वरितादनन्तरं परमनुदात्तम् अनुदात्तमेव, न तु उदात्तश्रुतिः। यथा—'अजस्तद्ददृशे क्व' (सं० १०.८.४१) 'इदं देवाः शृणुत ये' (सं० २ १२.२) "इदमिन्द्र शृणुहि सोमप यत्" (सं० २.१२ ३) इत्यादयः ॥३०॥

### शशिकला

स्वरित तथा उदात्त बाद में होने पर स्वरित से परवर्ती अनुदात्त अनुदात्त ही रहता है। जैसे—'अजस्तद् ददृशे क्व'[1] 'इदं देवा शृणुत ये'[2] 'इदमिन्द्र शृणुहि सोमप यत्'[3] इत्यादि ॥३०॥

## अस्वराणि व्यञ्जनानि[4] ॥३१॥

सू० अ०—व्यञ्जन वर्ण स्वर-विहीन होते हैं।

### निर्मलभाष्यम्

स्वरवर्णानामुदात्तादिस्वरविषयकं विधानं कृतम्। अत्र व्यञ्जनानां स्वरविषयकं विधानं करोति। **व्यञ्जनानि** व्यञ्जनवर्णाः **अस्वराणि** स्वर-विहीनाः भवन्ति। उदात्तादिस्वरधर्मः स्वराणामेव, न तु व्यञ्जनानाम्। व्यञ्जनं केवलमवस्थातुं न शक्नोति, अत एव सापेक्षं विद्यते। स्वरस्तु निरपेक्षः। अत एव व्यञ्जनानां स्वरः न भवति सापेक्षत्वात्। उदात्तादि-स्वरचिन्तायां व्यञ्जनं स्वराङ्गं भवति। यद्व्यञ्जनं यस्य स्वरस्याङ्गं तस्यैव स्वरेण तस्याप्युच्चारणं भवति। यथोक्तं—

स्वरो उच्चः स्वरो नीचः स्वरः स्वरित उच्यते।
व्यञ्जनान्यनुवर्तन्ते यत्रासौ तिष्ठति स्वरः॥ (पा० शि०)

एवं स्वराणामेव उदात्तादिस्वरधर्मः भवति, न तु व्यञ्जनानाम् ॥३१॥

### शशिकला

स्वरवर्णों का उदात्तादि स्वर-विषयक विधान कर दिया गया है। यहाँ व्यञ्जनों का स्वर-विषयक विधान किया जा रहा है। व्यञ्जन वर्ण

---

१. अजः। तत्। ददृशे। क्व (प० पा०)
२. इदम्। देवाः। शृणुत। ये (प० पा०)
३. इदम्। इन्द्रः। शृणुहि। सोमप। यत् (प० पा०)
४. (ख) सूत्रमिदम् नास्ति।

स्वरविहीन होते हैं। उदात्तादि धर्म स्वर-वर्णों का होता है; व्यञ्जनवर्णों का नहीं। व्यञ्जनों का पूर्ण उच्चारण स्वर के विना नहीं हो सकता अत एव वे स्वरों के सापेक्ष होते हैं जबकि स्वरवर्ण निरपेक्ष होते हैं क्योंकि उनके पूर्ण उच्चारण में किसी अन्य वर्ण की अपेक्षा नहीं होती। इसलिए सापेक्ष होने से व्यञ्जन वर्णों का स्वर नहीं होता। उदात्तादि स्वर के विषय में व्यञ्जन वर्ण स्वरों के अङ्ग होते हैं। जो व्यञ्जन जिस स्वर वर्ण का अङ्ग होता है उसी स्वर वर्ण के स्वर से उनका भी उच्चारण होता है जैसा कहा गया है—

'स्वर ही उदात्त होता है स्वर ही अनुदात्त होता है तथा स्वर ही स्वरित होता है। व्यञ्जन तो उस स्वर वर्ण के स्वर का अनुवर्तन करते हैं, जिसके वे अङ्ग होते हैं'।

इस प्रकार उदात्तादि धर्म स्वरों के ही होते हैं, व्यञ्जनों के नहीं ॥३१॥

## स्वरवन्तीत्यान्यतरेयः[1] ॥३२॥

सू० अ०—आन्यतरेय (आचार्य) के अनुसार (व्यञ्जन भी) स्वर-युक्त होते हैं।

### निर्मलभाष्यम्

व्यञ्जनानि **स्वरवन्ति** स्वरयुक्तानि भवन्ति **इति आन्यतरेयः** आचार्यः मन्यते। 'परस्य स्वरस्य व्यञ्जनानि' (१.२.१४) इत्यादिना आङ्गाङ्गि-भाव विहितः। व्यञ्जनं यस्य स्वरवर्णस्याङ्ग भवति तस्यैवाङ्गिस्वरस्य स्वरेण उच्चारितं भवति। स्वरं बिना तु तस्योच्चारणं भवितुं नार्हति। अत एव यस्य स्वरवर्णस्य स्वरेण व्यञ्जनस्योच्चारणं भवति, तत्स्वरः एव व्यञ्जनस्यापि स्वरः भवति। यथा 'मधु' (सं० १.३४.२), इत्यत्र 'परस्य स्वरस्य व्यञ्जनानि' (१.२.१४) इत्यनेन मकारः धकारश्च क्रमेण अकारस्य उकारस्य च स्वरेण उच्चारितः भवति। अत एव अकारस्य स्वरः एव मकारस्य स्वरः, उकारस्य स्वरश्च धकारस्य स्वरः विद्यते। एवमेव व्यञ्ज-नान्यपि स्वरयुक्तानि भवन्ति, न तु अस्वराणि ॥३२॥

### शशिकला

व्यञ्जन वर्ण भी स्वरयुक्त होते हैं, ऐसा आन्यतरेय आचार्य मानते हैं। 'व्यञ्जन परवर्ती स्वरवर्ण के अङ्ग होते हैं' इत्यादि सूत्रों द्वारा अङ्गा-

१. (ख) सूत्रमिदमनास्ति।

ङ्गिभाव कहा गया है। व्यञ्जन जिस स्वर वर्ण का अङ्ग होता है उसी अङ्गी स्वर वर्ण के स्वर से उच्चारित होता है। स्वर के बिना व्यञ्जन का उच्चारण नहीं हो सकता। अत एव जिस स्वर वर्ण के स्वर से व्यञ्जन का उच्चारण होता है, वहीं स्वर उस व्यञ्जन का होता है। जैसे—'मधु' यहाँ 'व्यञ्जन परवर्ती स्वर के अङ्ग होते हैं' इस विधान से मकार तथा धकार क्रमशः अकार तथा उकार के स्वर से उच्चारित होते हैं इस लिए अकार का स्वर ही मकार का भी स्वर है तथा उकार का स्वर धकार का भी स्वर है। इस प्रकार व्यञ्जन भी स्वर युक्त होते हैं, स्वर-विहीन नहीं होते ॥३२॥

## सन्धेः स्वरितम्[1] ॥३३॥

**सू० अ०**—संयोग के ( स्थल में भी व्यञ्जन ) स्वरयुक्त होता है।

### निर्मलभाष्यम्

**सन्धेः** द्वयोः व्यञ्जनयोः बहूनां व्यञ्जनानां वा संयोगस्य स्थलेऽपि, व्यञ्जनं **स्वरितं** स्वरयुक्तं भवति, न तु स्वरविहीनम्। यथा—'इन्द्रः' ( सं० १.९.१ ) इत्यत्र नकार दकाररेफाणां संयोगः। अत्र संयोगस्य स्थले 'संयोगादि पूर्वस्य' ( १.२.१५ ) इत्यनेन नकारः पूर्वस्वरस्य इकारस्य स्वरेण उच्चारितः भवति। अत एव इकारस्य स्वरः एव नकारस्यापि स्वरः विद्यते। दकाररेफौ च परस्वरस्य अकारस्य स्वरेण उच्चारितौ भवतः। अत एव अकारस्य स्वरः एव दकारस्य रेफस्य च स्वरः विद्यते ॥३३॥

### शशिकला

दो अथवा दो से अधिक व्यञ्जनों के संयोग के स्थान पर भी व्यञ्जन स्वर युक्त होते हैं, स्वर-विहीन नहीं होते हैं। जैसे—'इन्द्र' यहाँ नकार, दकार तथा रेफ इन तीन व्यञ्जनों का संयोग है। इस संयोग के स्थल पर 'संयोग का आदि व्यञ्जन पूर्ववर्ती स्वर वर्ण का अङ्ग होता है' से नकार पूर्ववर्ती स्वर वर्ण इकार के स्वर से उच्चारित होता है। अत एव इकार का स्वर ही नकार का भी स्वर होता है। दकार और रेफ परवर्ती अकार के स्वर से उच्चारित होते हैं अत एव अकार का स्वर ही दकार तथा रेफ का भी स्वर होता है ॥३३॥

---

१. (ख) सूत्रमिदं नास्ति।

## पूर्वरूपमित्यान्यतरेयः[1] ॥३४॥

**सू० अ०**—आन्यतरेय आचार्य के अनुसार तीन व्यञ्जनों के संयोग में बीच वाला व्यञ्जन अपने पूर्ववर्ती (स्वर के) रूप को (प्राप्त करता है)।

### निर्मलभाष्यम्

त्रयाणां व्यञ्जनानां संयोगे मध्यवर्ति व्यञ्जनं स्वस्य पूर्वरूपं-पूर्वस्वरस्य रूपं स्वरं प्राप्नोति इति आन्यतेयः मन्यते। आन्यतरेयाचार्यानुसारं त्रयाणां व्यञ्जनानां संयोगे मध्यवर्तिव्यञ्जनं पूर्वस्वरस्य स्वरेणोच्चारितं भवतीत्यर्थः। यथा – 'इन्द्रः' ( सं० १९१ ) इत्यत्र दकारोऽपि स्वस्य पूर्वस्वरस्य इकारस्य स्वरेणोच्चारितः भवति। नकारः 'संयोगादि पूर्वस्य' (१.२.१५) इत्यनेन पूर्वस्वरस्य इकारस्य स्वरेण रेफश्च 'परस्य स्वरस्य व्यञ्जनानि (१ २.१४) इत्यनेन परस्वरस्य अकारस्य स्वरेण च उच्चारितः भवति ॥३४॥

### शशिकला

तीन व्यञ्जनों के संयोग में मध्यवर्ती व्यञ्जन अपने पूर्ववर्ती स्वर वर्ण के स्वर को प्राप्त करता है—ऐसा आन्यतरेय आचार्य मानते हैं। आन्यतरेय आचार्य के अनुसार तीन व्यञ्जन के संयोग में मध्यवर्ती व्यञ्जन अपने पूर्ववर्ती स्वर वर्ण के स्वर से उच्चारित होता है—यह अर्थ है। जैसे—'इन्द्रः' यहाँ संयोग में दकार अपने पूर्ववर्ती स्वर वर्ण इकार के स्वर से उच्चारित होता है। नकार 'संयोग का आदि व्यञ्जन पूर्ववर्ती स्वर का अङ्ग होता है' से पूर्ववर्ती इकार के स्वर से तथा रेफ 'व्यञ्जन परवर्ती स्वर वर्ण के अङ्ग होते हैं' से परवर्ती स्वर वर्ण इकार के स्वर से उच्चारित होता है ॥ ३४ ॥

## उत्तररूपं शाङ्खमित्रिः[2] ॥३५॥

**सू० अ०**—शाङ्खमित्रि आचार्य के अनुसार तीन व्यञ्जनों के संयोग में बीच वाला व्यञ्जन ( अपने ) परवर्ती ( स्वर-) के रूप को प्राप्त करता है।

---

१. (ख) सूत्रमिदं नास्ति।
२. (ख) सूत्रमिदं नास्ति।

## निर्मलभाष्यम्

त्रयाणां व्यञ्जनानां संयोगे मध्यवर्ति व्यञ्जनं स्वस्य उत्तररूपं परस्य स्वरस्य रूपं स्वरं प्राप्नोति । इति शाङ्खमित्रिः आचार्यः मन्यते । शाङ्खमित्र्याचार्यानुसारं त्रिव्यञ्जनसंयोगे मध्यवर्तिव्यञ्जनं स्वस्य परस्वरस्य स्वरेणोच्चारित भवतीत्यर्थः । यथा—'इन्द्रः' ( १.९. ) इत्यत्र दकारः परस्वरस्य अकारस्य स्वरेण उच्चारितः भवति । नकारः पूर्वस्वरस्य इकारस्य स्वरेण रेफश्च परस्वरस्य अकारस्य स्वरेण च उच्चारितः भवति ॥३५॥

## शशिकला

तीन व्यञ्जनों के संयोग में मध्यवर्ती व्यञ्जन अपने परवर्ती स्वर वर्ण के स्वर को प्राप्त करता है—ऐसा शाङ्खमित्रि आचार्य मानते है। शाङ्खमित्रि आचार्य के अनुसार तीन व्यञ्जनों के संयोग में मध्यवर्ती व्यञ्जन अपने परवर्ती स्वरवर्ण के स्वर से उच्चारित होता है —यह अर्थ है। जैसे—'इन्द्रः' यहाँ मध्यवर्ती व्यञ्जन दकार परवर्ती स्वर अकार के स्वर से उच्चारित होता है। नकार पूर्ववर्ती स्वर इकार तथा रेफ परवर्ती स्वर अकार के स्वर से उच्चारित होता है ॥ ३५ ॥

## अक्षरस्य स्वर्यमाणस्य स्वर्यते[1] ॥ ३६ ॥

सू० अ०—व्यञ्जन ( अपने अङ्गी ) स्वर वर्ण ( अक्षर ) के स्वर से युक्त होता है।

## निर्मलभाष्यम्

व्यञ्जनं यस्याङ्गं भवति तस्य **स्वर्यमाणस्य** स्वरयुक्तस्य **अक्षरस्य** स्वरवर्णस्य **स्वर्यते** स्वरेण युक्तः भवति । स्वाङ्गीभूतस्य स्वरवर्णस्य स्वरेण उच्चारितः भवति । यथा - 'मधु' ( सं० १.३४.२ ) इत्यत्र मकारः धकारश्च 'परस्य स्वरस्य व्यञ्जनानि' ( ३.२.१४ ) इत्यनेन स्वस्य स्वर्यमाणस्य अङ्ग्यक्षरस्य क्रमशः अकारस्य उकारस्य च स्वरेण स्वर्यते ।' अग्निः' ( सं० १ ७.४ ) इत्यत्र गकारः संयोगादि पूर्वस्य' ( १.२.१५ ) इत्यनेन पूर्वस्वर्यमाणस्य स्वरस्य अकारस्य. नकारः परस्य स्वरस्य व्यञ्जनानि' ( १.२.१४ ) इत्यनेन परस्वर्यमाणस्य इकारस्य, विसर्जनीयश्च 'पद्यश्च' ( १.२.१६ ) इत्यनेन पूर्वस्वर्यमाणस्य इकारस्य च स्वरेण स्वर्यते ॥ ३६ ॥

---

१. (ख) सूत्रमिदं नास्ति ।

### शशिकला

व्यञ्जन जिस स्वर वर्ण का अङ्ग होता है, उसी स्वरयुक्त स्वरवर्ण के स्वर से युक्त होता है। व्यञ्जन अपने अङ्गी स्वरवर्ण के स्वर से उच्चारित होता है। जैसे—'मधु' यहाँ मकार और धकार 'व्यञ्जन परवर्ती स्वर के अङ्ग होते हैं' से परवर्ती स्वरवर्ण का अङ्ग होने के कारण क्रमशः अकार तथा उकार के स्वर से युक्त होते हैं। 'अग्निः' यहाँ गकार संयोग का आदि व्यञ्जन पूर्ववर्ती स्वर का अङ्ग होता है' से पूर्ववर्ती स्वरवर्ण का अङ्ग होने के कारण अकार के स्वर से युक्त होता है। नकार 'व्यञ्जन परवर्ती स्वरवर्ण के अङ्ग होते हैं' से इकार का अङ्ग होने से उसके स्वर से युक्त होता है और विसर्जनीय 'पदान्त्य वर्ण भी पूर्ववर्ती स्वर के अङ्ग होते हैं' से पूर्ववर्ती इकार का ही अङ्ग होने से इकार के स्वर से युक्त होता है ॥३६॥

## अर्धं ह्रस्वस्य पादं दीर्घस्य इत्येके[1] ॥३७॥

**सू० अ०**—ह्रस्व (अक्षर) में (व्यञ्जन) (अक्षर के आधे) तथा दीर्घ (अक्षर) में (अक्षर के चतुर्थांश) स्वर वाला होता है, ऐसा कुछ आचार्य मानते हैं।

### निर्मलभाष्यम्

स्वर्यमाणस्याक्षरस्य कियद्भागं व्यञ्जनस्य स्वरं भवतीति इत्यत्र विहितम्। यस्य स्वरस्य व्यञ्जनमङ्गं भवति, स स्वरवर्णः ह्रस्वं चेत् तस्य **ह्रस्वस्य** ह्रस्वस्वरवर्णस्य **अर्धम्** अर्धभागं व्यञ्जनस्य स्वरः भवति। दीर्घं चेत् तस्य **दीर्घस्य** दीर्घस्वरवर्णस्य **पादं** चतुर्थं भागं अर्धमात्रिकमित्यर्थः, व्यञ्जनस्य स्वरः भवति। **इत्येके** इति एके कतिपये आचार्याः मन्यन्ते। कतिपयाचार्यानुसारं ह्रस्वाक्षरस्य अर्धभागस्य अर्धमात्रिकस्य स्वरेण, दीर्घाक्षरस्य च चतुर्थभागस्यार्धमात्रिकस्य स्वरेण व्यञ्जनमुच्चारितं भवति। ह्रस्वस्वरस्य यथा—'मधु' ( सं० १.३४.२ ) इत्यत्र मकारः धकारश्च क्रमेण अकारेण उकारेण सह उच्चारितः भवति। अत्र मकारः धकारश्च स्वस्य अङ्गीभूतस्य ह्रस्वस्वरवर्णस्य पूर्वार्धभागस्य स्वरेण उच्चारितः भवति। दीर्घस्य यथा—'गुहा' ( सं० १.८.४ ) इत्यत्र हकारः आकारेण सह उच्चारितः। आकारः दीर्घः। अत एव हकारः आकारस्य चतुर्थांशभागस्यार्धमात्रिकस्य स्वरेण उच्चारितः भवति ॥३७॥

---

१. (ख) सूत्रमिदं नास्ति।

### शशिकला

स्वर्यमाण अक्षर में कितना भाग व्यञ्जन का होता है, इसको बतलाया जा रहा है। व्यञ्जन जिस स्वरवर्ण का अङ्ग होता है, वह स्वरवर्ण यदि ह्रस्व है तो व्यञ्जन उस ह्रस्वस्वरवर्ण के आधाभाग के स्वर वाला होता है। तात्पर्य यह है कि ह्रस्व स्वर में उसके अङ्गीभूत स्वर का आधा भाग व्यञ्जन तथा आधा भाग वह अङ्गी स्वर होता है। यदि अङ्गी स्वर दीर्घ है तो उसमें चौथाई भाग ( आधी मात्रा ) व्यञ्जन तथा डेढ़ ( १½ ) मात्रा अंगी स्वर का होता है। यह कतिपय आचार्यों का मत है। जैसे 'मधु' में मकार तथा धकार ह्रस्वस्वरवर्ण क्रमशः अकार तथा उकार के स्वर से उच्चारित होते हैं। यहाँ मकार अपने अंगी स्वर अकार तथा धकार अपने अंगी स्वर उकार के आधे भाग से उच्चारित होता है। तथा 'गुहा' में हकार दीर्घ स्वरवर्ण आकार का अंग है अतः हकार आकार के चौथाई भाग ( आधी मात्रा वाले ) स्वर से उच्चारित होता है। अवशिष्ट भाग स्वर वर्ण का होता है ॥३७॥

## सर्वमिति शाङ्खमित्रिः[१] ॥३८॥

सू० अ०—शाङ्खमित्रि ( आचार्य ) के अनुसार ( व्यञ्जन अपने अङ्गी स्वरवर्ण के ) सम्पूर्ण ( भाग वाले स्वर वाला होता है )।

### निर्मलभाष्यम्

व्यञ्जनं स्वस्याङ्गिस्वरवर्णस्य **सर्वम्** सम्पूर्णभागस्य स्वरेण युक्तं भवति तत्स्वरः ह्रस्वः भवतु दीर्घो वा, **इति** शाङ्खमित्रिः आचार्यः मन्यते। शाङ्खमित्रिः इति नामधेयस्याचार्यस्य मते व्यञ्जनं स्वाङ्गिस्वरवर्णस्य सम्पूर्णभागस्य स्वरेण उच्चारितं भवतीत्यर्थः। निदर्शनं पूर्वे सूत्रे द्रष्टव्यम् ॥३८॥

### शशिकला

व्यञ्जन अपने अङ्गी स्वरवर्ण के सम्पूर्ण भाग के स्वर से युक्त होता है। वह स्वर वर्ण ह्रस्व हो अथवा दीर्घ हो, ऐसा शाङ्खमित्रि आचार्य मानते हैं। उदाहरण इससे पहले वाले सूत्र में देख लेना चाहिए ॥३८॥

---

१. (ख) सूत्रमिदं नास्ति।

## अक्षरस्यैषः विधानः विद्यते यद्विस्वरीभावः[1] ॥३९॥

सू० अ० यह ( पूर्वोक्त ) जो अस्वरभाव वाला विधान है, वह ( व्यञ्जनयुक्त ) अक्षर से सम्बन्धित है।

### निर्मलभाष्यम्

'अस्वराणि व्यञ्जनानि' ( ३.३.३१ ) इत्यादिना व्यञ्जनस्य अस्वरात्मकत्वं विहितम्। पूर्वविहितः **यद्विस्वरीभावः** यः अस्वरभावः **विधानः** नियमः **विद्यते, एषः विधानः अक्षरस्य** व्यञ्जनयुक्तस्य स्वरविषयकं स्वरवर्णस्य विद्यते। अस्वराणि व्यञ्जनानि इत्यादिना विहितं विधानं व्यञ्जनयुक्तस्वरवर्णविषयकं विद्यते इत्यर्थः ॥३९॥

### शशिकला

'व्यञ्जन स्वर विहीन होते हैं। ( ३.३.३१ ) इत्यादि द्वारा व्यञ्जन के स्वर विहीन होने का विधान किया गया है। यह पूर्वविहित विधान स्वर रहित व्यञ्जनों के विषय में हैं तथा व्यञ्जन युक्त स्वर वर्ण के विषय में हैं ॥३९॥

[ विरामकालनिरूपणम् ]

## ऋगर्धर्चपदान्तावग्रहविवृत्तिषु मात्राकालः कालः[2] ॥४०॥

सू० अ०—ऋचाओं, अर्धर्चों, पदान्त, अवग्रह तथा विवृत्ति में एकमात्राकाल का समय लगता है।

### निर्मलभाष्यम्

**ऋगर्धर्चपदान्तावग्रहविवृत्तिषु** ऋग्योः, अर्धर्चयोः पदान्ते अवग्रहे विवृत्तौ च **मात्राकालः कालः** भवति। द्वयोः ऋग्योः, द्वयोरर्धर्चयो, पदान्ते, अवग्रहे विवृत्तौ च मात्राकालस्य व्यवधानः भवतीत्यर्थः। ऋग्योः यथा— '...अद्य दधातु मे। पुनरेहि ·' ( सं० १.१.१–२ )। अर्धर्चयोः यथा '... रूपाणि विभ्रतः। वाचस्पतिः (सं० १.१.१)। पदान्ते यथा 'अद्य दधातु मे' ( सं० १.१.१ )। अवग्रहे यथा—'भूरिधायसम्' ( सं० १.२.१ ) 'भूरि वर्पसम्' ( सं० १.२.१ ) इत्यादयः। विवृतौ यथा – 'कृत्या आङ्गिरसी' 'कृत्या आसुरी' 'या उ' ( सं० ८.५९ ) ॥४०॥

॥ इति श्रीमत्पण्डितदशरथपाठकसूनुना डा० जमुनापाठकेन कृते निर्मलभाष्ये चतुरध्यायिकायाः तृतीयाध्यायस्य तृतीयः पादः ॥

---

१. (ख) सूत्रमिदं नास्ति।

२. (ख) सूत्रमिदं नास्ति।

## शशिकला

दो ऋचाओं, दो अर्द्धऋचाओं, पदान्त, अवग्रह तथा विवृति के मध्य में एक मात्रा का व्यवधान होता है। दो ऋचाओं में जैसे—'· अद्य दधातु मे। पुनरेहि ' ! दो अर्धर्च में जैसे—' · रूपणि विभ्रतः। वाचस्पति · !' पदान्त में जैसे 'अद्य दधातु मे'। अवग्रह में जैसे —'भूरिधायसम्' 'भूरि-वर्पसम्'। विवृति में जैसे—'कृत्या आसुरी' 'कृत्या आङ्गिरसीः', 'या उ' ॥४०॥

॥ चतुरध्यायिका के तृतीय अध्याय के तृतीय पाद की डा० जमुना पाठक कृत शशिकला व्याख्या समाप्त ॥

## अथ चतुर्थः पादः

( नकारस्य णकारभावः )

### ऋवर्णरेफषकारेभ्यः समानपदे नो णः ॥१॥

**सू० अ०**—एकपद में ऋवर्ण, रेफ तथा षकार से बाद में नकार का णकार हो जाता है।

#### निर्मलभाष्यम्

**समानपदे** एकपदे ऋवर्णरेफषकारेभ्यः ऋवर्ण, रेफ, षकार एतेभ्यः परस्य **नः** नकारस्य **णः** णकारः भवति। यथा—स्तृणीहि' ( सं० ७.९९.१ ) ॥१॥

#### शशिकला

एक पद में ऋवर्ण, रेफ तथा षकार से बाद में नकार का णकार हो जाता है। जैसे—'स्तृणीहि'[1] ॥१॥

### पूर्वपदाद्द्रुघणादीनाम् ॥२॥

**सू० अ०**—पूर्वपद से बाद में द्रुघण इत्यादि के ( नकार का णकार हो जाता है )।

#### निर्मलभाष्यम्

पूर्वपदः सावग्रहपदस्य पूर्वपदः। निमित्तभूतात् **पूर्वपदाद्** द्रुघणादीनां= द्रुघण इत्यादीनां नकारस्य णकारः भवति। यथा—'द्रुघणः' ( सं० ७.२८. १ )। आदीनामित्यनेन ज्ञायते यदन्यत्रापि भवति। तद्विषये निदर्शनानि द्रष्टव्यानि—'ग्रामण्यः' ( सं० ३ ५.७ ) 'रक्षोहणम्' ( सं० ८.३.१ ) 'बृहस्पतिप्रणुत्तानाम्' ( सं० ८.८.१९ ) 'पृषदाज्यप्रणुत्तानाम्' ( सं० ११.१०. १९ ) 'परायणम्' ( सं० १.३४ ३ ) 'वृषायमाणः' ( सं० २.५.७ ) 'परिपाणम्' ( सं० २.१७ ७ ) 'वृत्रहणा' ( सं० ४.२८.३ ) 'त्रिणामन्' ( सं० ६.७४.३ ) 'पुरुणामानम्' ( सं० ६ ९९ १ ) 'उरूणसः' ( सं० १८.२.१३ ) 'सहस्रणीथाः' ( सं० १८ २.१८ ) 'सुप्रपाणे' ( सं० ४.२१.७ ) 'सुप्रायणा' ( सं० ५.१२.५ ) 'अनुप्रयाणम्' ( सं० ७.७३.६ ) ॥२॥

1. स्तृणाहि ( प० पा० )

### शशिकला

निमित्तभूत पूर्वपद से बाद में द्रुघण इत्यादि के नकार का णकार हो जाता है। जैसे—द्रुघणः'[1]। सूत्र में प्रयुक्त 'आदि का' से ज्ञात होता है कि इससे अन्यत्र भी होता है। उस विषय में ये उदाहरण द्रष्टव्य हैं— 'ग्रामण्यः' 'रक्षोहरणम्......'[2] ॥२॥

## अकारान्तादह्नः ॥३॥

**सू० अ०**—अकारान्त ( पूर्व पद ) से बाद में अह्न ( के नकार का णकार हो जाता है )।

### निर्मलभाष्यम्

**अकारान्तात्** अकारः अन्ते यस्य तस्मात् पूर्वपदान्तात् **अह्नः** इत्यस्य नकारस्य णकारः भवति। यथा—'अपराह्णः' ( सं० ९.६.४६ ) 'सहस्राह्ण्यम्' ( सं० १०.८.१८ )। अकारान्तादिति किम् ? इत्यत्र पूर्वभाष्यकारेण निदर्शन-द्वयं दत्तम्—'निरह्नः' 'पर्यह्न' इति। यच्छौनकशाखायाः संहितायां न प्राप्यते ॥३॥

### शशिकला

अकार है अन्त में जिसके ऐसे पूर्वपद से बाद में अह्न के नकार का णकार हो जाता है। जैसे—अपराह्णः'[3] सहस्राह्ण्यम्'[4]। सूत्र में अकारान्त से बाद में यह क्यों कहा गया ? इस विषय में पूर्वभाष्यकार ने 'निरह्नः' तथा 'पर्यह्न' ये दो उदाहरण दिए हैं जो शौनक शाखा की संहिता में नहीं मिलते।

---

१ द्रुघणः ( प० पा० )

२ ग्रामण्यः ( प० पा० ) रक्षः—हनम् ( प० पा० ) बृहस्पति-प्रनुत्तानाम् ( प० पा० ) पृषदाज्य—प्रनुत्तानाम् ( प० पा० ) परा—अयनम्, ( प० पा० ) वृषय—मानः ( प० पा० ) परि-पानम् ( प० पा० ) वृत्र—हना ( प० पा० ) त्रि—नामन् ( प० पा० ) पुरु—नामानम् ( प० पा० ) सहस्र—नीथाः ( प० पा० ) सु—प्रपाने ( प० पा० ) सु—प्रायणा ( प० पा० )

३. अपर—अह्नः ( प० पा० )

४. सहस्र—अह्न्यम् ( प० पा० )

## विभक्त्यागमप्रातिपदिकान्तस्य ॥४॥

**सू० अ०** —( ऋवर्ण, रेफ तथा षकार से बाद में ) विभक्ति, आगम तथा प्रातिपदिक ( के अन्तिम नकार ) का ( णकार हो जाता है )।

### निर्मलभाष्यम्

सुबिति विभक्तिः। अतिरिक्तवर्णस्य निष्पत्तिः आगमः। अत्र नकारस्यैव आगमः ग्रहीतव्यः। 'अर्थवदधातुरप्रत्ययप्रातिपदिकम्' 'कृत्तद्धितसमासाश्च' (पा० व्या० १.२.४५.४६) इति प्रातिपदिकम्। ऋवर्णरेफषकारेभ्यः **विभक्त्यागमप्रातिपदिकान्तस्य**–विभक्त्यान्तस्य आगमस्य प्रातिपदिकान्तस्य च नकारस्य णकारः भवति। यथा—'वराहेण' (सं० १२.१.४८) 'अति दुर्गाणि' (सं० ७.६३.१) 'पर्यायिणः' (सं० ७.७६.४) 'प्रवाहिणः' (सं० २०.१२७.२) ॥४॥

### शशिकला

सुप् विभक्तियाँ हैं। दो वर्णों के मध्य में अतिरिक्त वर्ण का आ जाना आगम है। यहाँ नकार के आगम का ही ग्रहण होता है। धातु और प्रत्यय को छोड़ कर अर्थवान् तथा कृदन्त, तद्धितान्त तथा समास—ये प्रातिपदिक कहलाते हैं। ऋवर्ण, रेफ तथा षकार से बाद में विभक्ति, आगम तथा प्रातिपदिकान्त नकार का णकार हो जाता है। जैसे—'वराहेण' 'अति दुर्गाणि' 'पर्यायिणः' 'प्रवाहिणः ॥४॥

## उपसर्गाद्धातो नानापदेऽपि[1] ॥५॥

**सू० अ०**—पृथक् पद में भी उपसर्ग से बाद में धातु ( के नकार ) का ( णकार हो जाता है )।

### निर्मलभाष्यम्

**नानापदेऽपि** पृथक्पदेऽपि **उपसर्गात्** परस्य **धातोः** नकारस्य णकारः भवति। यथा—'प्र णयति' (सं० ९.६.४) 'प्र णीयन्ते' (सं० ९.६.५) 'परि णीयमनाम्' (सं० १८ ३.३) ॥५॥

### शशिकला

पृथक्पद में भी उपसर्ग से बाद में धातु के नकार का णकार हो जाता है। जैसे—'प्र णयति'[2] 'प्र णीयन्ते'[3] परि णीयमानम्'[4] ॥५॥

---

१. (क) नानापदेष्वपि इति पाठः
२. प्र। नयति (प० पा०)
३. प्र। नीयन्ते (प० पा०)
४. परि। नीयमानम् (प० पा०)

## प्रपराभ्यामेनः ॥ ६ ॥

सू०अ०—( पृथक्पद में ) प्र तथा परा से बाद में एन ( के नकार का णकार हो जाता है । ) ।

### निर्मलभाष्यम्

पृथक्पदे **प्रपराभ्यां** प्र परा इत्येतेभ्याम् **एनः** एन इत्यस्य नकारस्य णकारः भवति । यथा—'प्रैणान् छृणुहि (सं० १०. ३. २ ) 'प्रैणान् नुदे' ( सं० ३. ६. ८ ) 'प्रैणान् वृक्षस्य' ( सं० ३. ६. ८ ) 'परैणान् देवः' ( सं०८. ३. १६) 'परैणान् देवः (सं० ८.३.१६ ) । 'प्रपराभ्यामिति किम्' ? 'पर्येनान्प्राणः' ( सं० ९. २. ५ ) इत्यत्र माभूत् ।।६।।

### शशिकला

प्र तथा परा से बाद में एन के नकार का णकार हो जाता है। जैसे—'प्रैणान् छृणुहि[1]' 'प्रैणान् नुदे[2]' 'प्रैणान् वृक्षस्य[3]' 'परैणान्देवः[4]' । सूत्र में प्र तथा परा से बाद में यह क्यों कहा गया ? 'पर्येनान्प्राणाः[5]' यहाँ न होवें ।।६।।

## प्रपरिभ्यां नः[6] ॥ ७ ॥

सू० अ०—( पृथक्पद में ) प्र तथा परि से बाद में 'नः' का ( णकार हो जाता है ) ।

### निर्मलभाष्यम्

नानापदे **प्रपरिभ्यां** प्र परि इत्येतेभ्यांः नः इत्यस्य नकारस्य णकारः भवति । यथा—'प्र ण आयूंषि' ( सं० २. ४. ६ ) 'प्र णो जनय' ( सं० ३. १६. ३ ) प्र णो यच्छ' ( सं० ३.२०.२ ) 'प्र णो यच्छतु' ( सं० ३.२० ३) 'प्र णो वनिः' (सं० ५.७.३) 'प्र णो वोचः' ( सं० ७.२.१, ५.५ )

---

१. प्र । एनान् । शृणुहि (प० पा०)
२. प्र । एनान् । नुदें (प० पा०)
३. प्र । एनान् । वृक्षम् (प० पा०)
४. परा । एनान् । देवः (प० पा०)
५. परि । एनान् । प्राणः । (प० पा०)
६. (क) (ख) सूत्रमिदं नास्ति । ह्विटनीमहाभागस्य दृष्ट्या सूत्रं भवितव्यम् ।

'परि णः' ( सं० १ २. २ ) परि णो ब्रूहि ( सं० १७५ ) 'परि णः पातु' ( सं० २. ४. २ ) 'परि णः पाहि' ( सं० २.७.३ ४ ) 'परि णो वृङ्ग्धि' ( सं० ६. ३७ २ ) 'परि णो ददातु' ( सं० १२ ३. ५५–६० ) परिणः पातु' ( सं० ३. १. ५ ) । प्रपरिभ्यामिति किम् ? 'वि नाशय' ( सं० ३. १. ५ ) इत्यत्र माभूत् ॥७॥

### शशिकला

पृथक्पद में प्र तथा परि से बाद में नकार का णकार हो जाता है। जैसे— प्र ण आयूंषि' '... ..'[१] । सूत्र में 'प्र तथा परि से बाद में' यह क्यों कहा गया ? 'वि नाशय[२]' यहाँ न होवे ॥ ७ ॥

## आशीरुरुष्वगृहेषुशिक्षेभ्यश्च[३] ॥ ८ ॥

सू० अ०—आशीः, उरुष्व, गृहेषु, शिक्ष से बाद में ( नकार का णकार हो जाता है ) ।

### निर्मलभाष्यम्

चशब्दोऽत्र नः इत्यस्यान्वादेशकः । **आशीरुरुष्वगृहेषुशिक्षेभ्यः** आशीः उरुष्व गृहेषु शिक्ष इत्येतेभ्यः नः इत्यस्य नकारस्य णकारः भवति । यथा —'आशीर्णं ऊर्जम्' (सं० २.२९.३) 'उरुष्या णः' (सं० ६.४.३) 'शिक्षा णो अस्मिन्' ( सं० १८. ३ ६७ ) । शौनकशाखायाः संहितायां गृहेषु इत्यस्मात् परस्य नकारस्य णकारभावः न प्राप्यते । तत्र तु 'गृहेषु नः' ( सं० ६.७९.१, ७.६०.५ ) इत्येवेमेव दृश्यते । सम्भवतः कस्याञ्चिद् हस्तलिप्यामासीदेव अथवा शाखान्तरे भवितव्यम् । यस्मात् सूत्रकारेण विधानं विहितम् ॥ ८ ॥

### शशिकला

चशब्द 'नकार का' अन्वादेशक है। आशीः उरुष्व, गृहेषु तथा शिक्ष से बाद में नः के नकार का णकार हो जाता है। जैसे— आशीर्णं

---

१. प्र । न । आयूंषि (प० पा०) प्र । नः । जनय (प० पा०) प्र । नः । यच्छ (प० पा०) प्र । नः । यच्छतु (प० पा०) प्र । नः । वनिः (प० पा०) प्र । नः । वोचः (प०पा०) परि । नः । पाहि (प० पा०) परि । नः । वृङ्ग्धि (प० पा०) परि । नः । ददातु (प० पा०) परि । नः । पातु (प० पा०)

२. वि । नाशय (प० पा०)

३. (क) (ख) सूत्रमिदं नास्ति । ह्विटनीमहाभागस्य दृष्टया सूत्रं भवितव्यम् ।

ऊर्जम्'[१] उरुष्या णः[२]' 'शिक्षा णो अस्मिन्[३]' । शौनकशाखा की संहिता में 'गृहेषु' से बाद में नकार के णकार होने का उदाहरण नहीं मिलता। वहाँ 'गृहेषु नः[४] ही प्राप्त होता है। सम्भव है किसी हस्तलिपि में नकार के णकार का उदाहरण रहा हो अथवा अन्य शाखा की संहिता में रहा हो जिससे सूत्रकार ने गृहेषु से बाद में भी नकार के णकार होने का विधान किया है ॥ ८ ॥

## नशश्च[५] ॥ ९ ॥

**सू० अ०**—( उपसर्ग से बाद में ) नश् ( के नकार ) का भी (णकार हो जाता है )।

### निर्मलभाष्यम्

उपसर्गाद् **नशश्च** नश् इत्यस्य नकारस्य णकारः भवति । यथा—'दुर्णशम्' ( सं० ५.११६ ) ॥ ९ ॥

### शशिकला

उपसर्ग से बाद में नश् के नकार का भी णकार हो जाता है । जैसे—'दुर्णशम्'[६] ॥ ९ ॥

## धातुस्थाद्यकारात्[७] ॥ १० ॥

**सू० अ०**—धातु में विद्यमान यकार से बाद में भी ( नकार का णकार हो जाता है )।

### निर्मलभाष्यम्

**धातुस्थाद्** धातौ विद्यमानाद् **यकाराद्** यकारवर्णात् परस्य नकारस्य णकारः भवति। यथा—'शिश्रियाणः' ( सं० १२.१३१ ) 'शिश्रियाणम्' ( सं० १.१२.२, २.५.६ ) ॥ १० ॥

---

१. आशीः । नः । ऊर्जम् (प० पा०)
२. उरुष्य । नः । (प० पा०)
३. शिक्ष । नः । अस्मिन् (प० पा०)
४. गृहेषु । नः (प० पा०)
५. (क) नसश्च इतिपाठः । (ख) नास्ति सूत्रमिदम् ।
६. दुः—नशम् ( प० पा० )
७. (क) धातुस्यादयकाराद् इति पाठः । (ख) सूत्रमिदं नास्ति ।

### शशिकला

धातु में विद्यमान यकार से बाद में नकार का णकार हो जाता है। जैसे—'शिश्रियाणः' 'शिश्रियाणम्' ॥ १० ॥

## उरू[1] ॥ ११ ॥

सू० अ०—उकार का ऊकार होने पर ( परवर्ती नकार का णकार हो जाता है )।

### निर्मलभाष्यम्

संहितायां उः उकारस्य ऊ ऊकारभावे, ह्रस्वस्य उकारस्य दीर्घभावे इत्यर्थः, परस्य नकारस्य णकारः भवति। यथा—'मो षू णः' 'ऊ षू णः'॥११॥

### शशिकला

उकार का संहिता में दीर्घ ऊकार हो जाने पर परवर्ती नकार का णकार हो जाता है। जैसे—'मो षू णः'[2] ऊ षू णः'[3] ॥ ११ ॥

## ब्रह्मण्वत्यादीनाम्[1] ॥ १२ ॥

सू० अ०—ब्रह्मण्वती इत्यादि में ( नकार का णकार हो जाता है)।

### निर्मलभाष्यम्

ब्रह्मण्वत्यादीनाम् ब्रह्मण्वती इत्यादीनां नकारस्य णकारः भवति। यथा—ब्रह्मण्वती' ( सं० ८.१३.१३ ) बहुवचनेन ज्ञायते यदन्यत्रापि भवति। तद्विषये निदर्शनं द्रष्टव्यम्—'ब्रह्मण्वतीम्' (सं० ६.१०८.२) ॥१२॥

### शशिकला

ब्रह्मण्वती इत्यादि में नकार का णकार हो जाता है। जैसे—'ब्रह्मण्वती'। सूत्र में बहुवचन के प्रयोग से ज्ञात होता है कि अन्यत्र भी होता है। उस विषय में यह उदाहरण द्रष्टव्य है—'ब्रह्मण्वतीम्' ॥ १२ ॥

---

१. (ख) नास्ति सूत्रमिदम्।
२. मो इति। सु। नः (प० पा०)
३. ऊँ इति। सु। नः ( प० पा० )
१. (ख) नास्ति सूत्रमिदम्।

## निपातस्य च[1] ॥ १३ ॥

**सू० अ०**—निपात के भी ( नकार का णकार हो जाता है )।

### निर्मलभाष्यम्

**निपातस्य च** निपातस्यापि नकारस्य णकारः भवति। यथा—'प्रणपात्' ( सं० १० ५.७ ) इत्यत्र निपातस्य न इत्यस्य णकारः ॥१३॥

### शशिकला

निपात के भी नकार का णकार हो जाता है। जैसे—'प्रणपात्' यहाँ निपात के नकार का णकार हो गया है ॥ १३ ॥

## पुनर्णयामसि ॥ १४ ॥

**सू० अ०**—पुनः से बाद में नयामसि ( के नकार ) का ( णकार हो जाता है )।

### निर्मलभाष्यम्

**पुनर्णयामसि** इत्यत्र पुनः इत्यस्माद् नयामसि इत्यस्य नकारस्य णकारः भवति। यथा—'पुनर्णयामसि ( सं० ५.१४.७ ) ॥ १४ ॥

### शशिकला

पुनर्णयामसि में पुनः से बाद में नयामसि के नकार का णकार हो जाता है। जैसे 'पुनर्णयामसि'[2] ॥ १४ ॥

## नवतेश्च ॥ १५ ॥

**सू० अ०**—'पुनः से बाद में' नु (धातु के नकार) का भी ( णकार हो जाता है )।

### निर्मलभाष्यम्

**चशब्दोऽत्र** पुनः इत्यस्यान्वादेशकः। पुनः इत्यस्मात् परस्य **नवतेश्च** नुधातोऽपि नकारस्य णकारः भवति। यथा—'चन्द्रमाश्च पुनर्णवः' ( सं० १०.७.३३ ) 'या रोहन्ति पुनर्णवाः' ( सं० ८.७.८ ) 'पुनरागाः पुनर्णवः' ( सं० ८.१.२० ) ॥ १५ ॥

---

१. (क) निपातस्य ख इति पाठः (ख) सूत्रमिदं नास्ति।

२. पुनः—नयामसि (प० पा०)

### शशिकला

चशब्द यहाँ 'पुनः से बाद में' का अन्वादेशक है। पुनः से बाद में नु धातु के नकार का णकार हो जाता है। जैसे— चन्द्रमाश्च पुनर्णवः'[१] 'या रोहन्ति पुनर्णवाः'[२] पुनरागाः पुनर्णवः'[३] ॥ १५ ॥

## पूर्याणः[४] ॥ १६ ॥

सू० अ०—पूर्याणः ( में नकार का णकार हो जाता है )।

### निर्मलभाष्यम्

पूर्याणः इत्यत्र नकारस्य णकारः भवति। यथा—'पथिभिः पूर्याणैः' ( सं० १८.१.५४ ) ॥ १६ ॥

### शशिकला

पूर्याणः में नकार का णकार हो जाता है। जैसे-'पथिभिः पूर्याणैः'[५] ॥ १६ ॥

## दुर्णाम्नः ॥ १७ ॥

सू० अ०-दुः से बाद में नामन् ( के नकार का णकार हो जाता है)।

### निर्मलभाष्यम्

दुर्णाम्नः इत्यत्र दुः इत्यस्माद् नामन् इत्यस्य नकारस्य णकारः भवति। यथा—दुर्णाम्नीः सर्वाः' ( सं० ४.१७.५ ) 'दुर्णामा तत्र' ( सं० ८. ६.१ ) 'दुर्णामा च' ( सं० ८.६ ४ )। दुः इत्यस्मात् किम् ? 'सुनामा च' ( सं० ८.६.४ ) इत्यत्र माभूत् ॥ १७ ॥

### शशिकला

दुर्णाम्नः में दुः से बाद में नामन् के नकार का णकार हो जाता है। यथा 'दुर्णाम्नीः सर्वाः'[६] 'दुर्णामा तत्र'[७] 'दुर्णामा च'[८]। सूत्र में 'दुः से बाद में' यह क्यों कहा गया ? 'सुनामा च'[९] यहाँ नकार का णकार न होवे ॥ १७ ॥

---

१. चन्द्रमाः। च। पुनः—नवः (प० पा०)
२. याः। रोहन्ति। पुनः—नवाः (प० पा०)
३. पुनः। आ। अगाः। पुनः—नवः (प० पा०)
४. (क) दुर्याणः इति पाठः।
५. पथि—भिः। पूः—यानैः (प० पा०)
६. दुः—नाम्नीः। सर्वाः (प० पा०)
७. दुः-नामा। तत्र (प० पा०)
८. दुः—नामा। च ( प० पा० )
९. सु—नामा। च (प० पा०)

## अवग्रहादृकारात्[1] ॥ १८ ॥

सू० अ०—अवग्रह वाले ऋकार से बाद ( वाले पद के नकार का णकार हो जाता है )।

### निर्मलभाष्यम्

अवग्रहाद् अवग्रहान्ते विद्यमानाद् ऋकाराद् उत्तरपदस्य नकारस्य णकारः भवति। यथा—'पितृयाणाः' ( सं० ६ ११७.३ ) 'पितृयाणैः' (सं० १८४.१) 'नृमणाः' (सं० १६.३.५)। ऋकारादिति किम् ? 'देवयानाः' (सं० ६.११७ ३ ) इत्यत्र माभूत् ॥ १८ ॥

### शशिकला

अवग्रह के अन्त में विद्यमान ऋकार से बाद में उत्तरपद के नकार का णकार हो जाता है। जैसे—'पितृयाणाः'[2] 'पितृयाणैः'[3] 'नृमणाः'[4]। सूत्र में 'ऋकार से बाद में' यह क्यों कहा गया ? 'देवयानाः'[5] यहाँ न होवे ॥ १८ ॥

[ तन्निषेधः ]

## न मिनाति[6] ॥ १९ ॥

सू० अ०—( उपसर्ग से बाद में ) मी ( धातु के नकार का णकार नहीं होता )।

### निर्मलभाष्यम्

'उपसर्गाद्धातोर्नानापदेऽपि' (३.४.५) इत्यास्यापवादोऽयम्। पृथक्पदे उपसर्गाद् मिनाति मीधातोः नकारस्य णकारः न भवति। यथा—'प्र मिनीत्' ( सं० १०,११० ३ ) 'प्र मिनाति' ( सं० १८ ४.६० ) 'प्र मिनामः' ( सं० १९.५९ २ ) ॥ १९ ॥

---

१. (ख) नास्ति सूत्रमिदम्।
२. पितृ–यानाः (प० पा०)
३. पितृ–यानैः (प० पा०)
४. नृ–मना (प० पा०)
५. देव–यानाः (प० पा०)
६. (क) प्रमिनन्ति न मिनन्ति इतिपाठः।

### शशिकला

'पृथक् पद में भी उपसर्ग से बाद में धातु के नकार का णकार हो जाता है' इस विधान का यह अपवाद है। पृथक् पद में उपसर्ग से बाद में भी धातु के नकार का णकार नहीं होता। जैसे—'प्र मिनीत्'[1] 'प्र मिनाति'[2] 'प्र मिनामः'[3] ॥ १९ ॥

## नभेः[4] ॥ २० ॥

सू० अ०—नभ् के ( नकार का णकार नहीं होता )।

### निर्मलभाष्यम्

**नभेः** नभ् इत्यस्य नकारस्य णकारः न भवति। यथा—'प्र नभस्व' ( सं० ७.१९.१ ) 'प्र नभताम्' ( सं० ७.१९.२ ) ॥ २१ ॥

### शशिकला

नभ् के नकार का णकार नहीं होता। जैसे—'प्र नभस्व' 'प्र नभताम्' ॥ २० ॥

## भानोश्च ॥ २१ ॥

सू० अ०—भानु ( के नकार ) का ( भी णकार नहीं होता )।

### निर्मलभाष्यम्

चशब्दोऽत्र न इत्यन्वादिशति। **भानोश्च** भानु इत्यस्यापि नकारस्य णकारः न भवति। यथा—'चित्रभानो' ( सं० ४.२५ ३ ) 'प्र भानवः' ( सं० १३ २.४६ ) ॥ २१ ॥

### शशिकला

सूत्र में प्रयुक्त च शब्द यहाँ न का अन्वादेश करता है। भानु के नकार का भी णकार नहीं होता। जैसे—'चित्रभानो'[5] 'प्र भानवः'[6] ॥२१॥

## परेर्हिनोतेः ॥ २२ ॥

सू० अ०—परि से बाद में हि ( धातु के नकार ) का ( णकार नहीं होता )।

---

१. प्र। मिनीत् (प० पा०)
२. प्र। मिनाति ( प० पा० )
३. प्र। मिनामः ( प० पा० )
४. (ख) सूत्रमिदं नास्ति।
५. चित्र-भानो इति ( प० पा० )
६. प्र। भानवः ( प० पा० )

## निर्मलभाष्यम्

**परेः** परि इत्यस्मात् परस्य हिनोतेः हिधातोः नकारस्य णकारः न भवति। यथा—'परिहिनोमि' ( सं० ८.४.६ )। परेः इति किम्? 'प्र हिणोमि' ( सं० १२.२.८ ) इत्यत्र निषेधः माभूत् ॥ १६ ॥

## शशिकला

परि से बाद में हि धातु के नकार का णकार नहीं होता। जैसे—'परिहिनोमि'[१]। 'परि' से बाद में' यह क्यों कहा गया? 'प्र हिणोमि'[२] यहाँ नकार के णकारभाव का निषेध न होवे ॥ २२ ॥

## पदान्तस्पर्शयुक्तस्य ॥ २३ ॥

**सू० अ०**—पदान्त तथा स्पर्शयुक्त ( नकार ) का ( णकार ) नहीं होता )।

## निर्मलभाष्यम्

**पदान्तस्पर्शयुक्तस्य** पदान्तस्य स्पर्शयुक्तस्य च नकारस्य णकारः न भवति। यथा—पूषन् तव' ( सं० ७९.३ ) 'सङ्क्रन्दनः' (सं० ५.२०.९) 'ग्रन्थिः' (सं० ९ ३.२)। 'ऋवर्णरेफषकारेभ्यः समानपदे नो णः' (३.४.१)। इत्यनेन षकाराद् रेफाच्च नकारस्य णकारः प्राप्तः। तन्निषिध्यते ॥ २३ ॥

## शशिकला

पदान्त तथा स्पर्शयुक्त नकार का णकार नहीं होता। जैसे—'पूषन् तव'[३] 'सङ्क्रन्दनः'[४] 'ग्रन्थिः'[५]। यहाँ 'एक पद में ऋवर्ण, रेफ तथा षकार से बाद में होने पर नकार का णकार हो जाता है' से नकार के णकार होने की प्राप्ति थी जिसका निषेध हो गया है ॥ २३ ॥

## नशेः षान्तस्य ॥ २४ ॥

**सू० अ०**—षकार है अन्त में जिसके ऐसे नश् धातु ( के नकार का) (णकार नहीं होता)।

---

१. परि–हिनोमि ( प० पा० )
२. प्र। हिनोमि (प० पा०)
३. पूषन्। तव (प० पा०)
४. सम्। क्रन्दनः (प० पा०)
५. ग्रन्थिः (प० पा०)

## निर्मलभाष्यम्

**षान्तस्य** षकारः अन्ते यस्य तस्य **नशेः** नश्धातोः नकारस्य णकारः न भवति । यथा—'परिनष्टः 'निर्नष्टः' 'दुर्नष्टः' ( लौकिकोदाहरणम् ) । षान्तस्य इति किम् ? 'दुर्णशम्' (सं० ५.११.६) इत्यत्र निषेधः न भवति । निदर्शनमस्य शौनकशाखायाः संहितायां न प्राप्यते अतएव विधानमिदं शिष्याणामवबोधनार्थम् इति । अथवा निदर्शनमर्थवचरणस्य अन्यशाखायामासीत् यत्कृते सूत्रकारेण विहितमिदं विधानम् ॥ २४ ।

## शशिकला

षकार है अन्त में जिसके उस नश् धातु के नकार का णकार नहीं होता । जैसे—'परिनष्टः' 'निर्नष्टः' 'दुर्नष्टः' ( लौकिकोदाहरण ) । 'ष अन्त में है जिसके ऐसे का' यह क्यों कहा गया ? 'दुर्णशम्' यहाँ नकार के णकारभाव का निषेध न होवे । शौनकशाखा की संहिता में इसका उदाहरण नहीं मिलता । अत एव सूत्रकार ने शिष्यों के ज्ञान के लिए यह विधान किया है अथवा अथर्वचरण की अन्य शाखा की संहिता में रहा होगा जो आज लुप्त हो गयी है । इसलिए यह विधान किया गया है ॥ २४ ॥

## स्वरलोपे हन्तेः ॥ २५ ॥

**सू० अ०**—स्वर का लोप होने पर हन् धातु के ( नकार का णकार नहीं होता ) ।

## निर्मलभाष्यम्

**हन्तेः** हन् धातोः **स्वरलोपे** स्वरस्य अकारस्य लोपे नकारस्य णकारः न भवति । यथा—'वृत्रघ्नः' (सं० ४.२४.१) 'वृत्रघ्नाः' (सं० ३.६.२) । स्वरलोपे इति किम् ? 'रक्षोहणम्' ( सं० ८.३.१ ) इत्यत्र माभूत् ॥२५॥

## शशिकला

स्वर का लोप होने पर हन् धातु के नकार का णकार नहीं होता । जैसे—'वृत्रघ्नः'[1] 'वृत्रघ्नाः'[2] । 'स्वर का लोप होने पर' यह क्यों कहा गया ? 'रक्षोहणम्'[3] यहाँ नकार के णकार होने का निषेध न होवे ॥२५॥

---

१. वृत्रघ्नः ( प० पा० )
२. वृत्रघ्नाः ( प० पा० )
३. रक्षः-हनम् ( प० पा० )

## क्षुभ्नादीनाम् ॥ २६ ॥

**सू० अ०—क्षुभ्न इत्यादि के ( नकार का णकार नहीं होता )।**

### निर्मलभाष्यम्

क्षुभ्नादीनां क्षुभ्न इत्यादीनां नकारस्य णकारः न भवति। शौनक-शाखायाः संहितायाम् क्षुभ्न इत्यस्य निदर्शनं न प्राप्यते। 'क्षोभणश्चर्षणीम्' ( सं० १९.१३ २ ) इत्यत्र क्षुभ्धातोः नकारस्य णकारः एव प्राप्तः। सूत्रे प्रयुक्तेन आदीनामित्यनेन ज्ञायते यदन्यत्रापि नकारस्य णकारः न भवति। तद्विषये निदर्शनानि द्रष्टव्यानि—परिनृत्यन्तोरिव' ( सं० १०.७.४३ ) 'मधुना प्रपीनाः' ( सं० १२.३.४१ ) 'परिनृत्यन्ति' ( सं० १२.५ ४८ ) प्र नभस्व' ( सं० ७.१८.१ ) 'प्र नभताम्' ( सं० ७.१८.२ ) 'प्रनृत्यन्तः' ( सं० ८६.११ ) ॥ २६ ॥

### शशिकला

क्षुभ्न इत्यादि के नकार का णकार नहीं होता। क्षुभ्न के नकार के णकारभाव का निषेध शौनकशाखा की संहिता में नहीं मिलता। क्षोभण-श्चर्षणीम्'[1] यहाँ क्षुभ् धातु के नकार का णकार ही प्राप्त होता है। सूत्र में प्रयुक्त 'आदि के' से ज्ञात होता है कि इससे अन्यत्र भी नकार के णकारभाव का निषेध होता है। उस विषय में ये उदाहरण द्रष्टव्य हैं—'परिनृत्य-न्तोरिव [2] 'मधुना प्रपीनाः'[3] 'परिनृत्यन्ति'[4] 'प्र नभस्व'[5] 'प्र नभताम्'[6] 'प्रनृत्यन्तः'[7] ॥ २६ ॥

## व्यवाये शसलैः ॥ २७ ॥

**सू० अ०—शकार, सकार तथा लकार से व्यवहित होने पर ( भी नकार का णकार नहीं होता )।**

---

१. क्षोभणः। चर्षणीनाम् (प० पा०)
२. परिनृत्यन्त्योः–इव (प० पा०)
३. मधुना। प्र–पीनाः (प० पा०)
४. परि–नृत्यन्ति ( प० पा० )
५. प्र–नभस्व ( प० पा० )
६. प्र–नभताम् (प० पा०)
७. प्र–नृत्यन्तः ( प० पा०)

### निर्मलभाष्यम्

**शसलैः** शकारेण सकारेण लकारेण च **व्यवाये** व्यवहितेऽपि नकारस्य णकारः न भवति । यथा—'कः पृश्निम्' (सं० ७.१०४.१) 'अन्तरदृश्यमानः' (सं० १०.८.१३) 'प्रसवानाम्' (सं० ५.१४.१) । लकारेण व्यवहितस्य निदर्शनं शौनकशाखायाः संहितायां न प्राप्यते ॥ २७ ॥

### शशिकला

शकार, सकार तथा लकार से व्यवहित होने पर भी नकार का णकार नहीं होता । जैसे—'कः पृश्निम्'[१] 'अन्तरदृश्यमानः'[२] 'प्रसवानाम्'[३] । लकार से व्यवहित का उदाहरण शौनकशाखा की संहिता में नहीं मिलता ॥ २७ ॥

## चटतवर्गैश्च ॥ २८ ॥

**सू० अ०** चवर्ग, टवर्ग तथा तवर्ग से (व्यवहित होने पर भी नकार का णकार नहीं होता ) ।

### निर्मलभाष्यम्

चशब्दोऽत्र 'व्यवाये' इत्यस्यान्वादेशकः । **चटतवर्गैः** चवर्गेण, टवर्गेण तवर्गेण च व्यवहिते नकारस्य णकारः न भवति । यथा 'उपर्चनः ( सं० ९.४.२३ ) 'मित्रवर्धनः' (सं० ४ ८.६) वर्तनिरनु' (सं० ७.२१.१) ॥ २८ ॥

### शशिकला

च शब्द यहाँ 'व्यवहित होने पर' का अन्वादेशक है । चवर्ग, टवर्ग तथा तवर्ग से व्यवहित होने पर भी नकार का णकार नहीं होता । जैसे—'उपर्चनः'[४] 'मित्रवर्धनः'[५] 'वर्तनिरनु'[६] ॥ २८ ॥

## पदेनावर्जिते ॥ २९ ॥

**सू० अ०**—आ को छोड़कर ( अन्य ) पद से व्यवहित होने पर भी ( नकार का णकार नहीं होता ) ।

---

१. कः । पृश्निम् ( प० पा० )
२. अन्तः । अदृश्य–मानः ( प० पा० )
३. प्र–सवानाम् (प० पा०)
४. उपर्चनः (प० पा०)
५. मित्र–वर्धनः (प० पा०)
६. वर्तनिः । अनु (प० पा०)

### निर्मलभाष्यम्

चशब्दोऽत्रापि व्यवाये इत्यस्यान्वादेशकः। **आवर्जिते** आपदव्यतिरिक्ते **पदेन** व्यवहितेऽपि नकारस्य णकारः न भवति। यथा—'परीमे गामनेषत्' ( सं० ६.२८.२ )। आवर्जिते इति किम् ? 'पर्याणद्धम्' ( सं० १४.२.१२ ) इत्यत्र निषेधः माभूत् ॥ २९ ॥

### शशिकला

सूत्र में प्रयुक्त च शब्द यहाँ 'व्यवधान होने पर' का अन्वादेशक है। आ से अन्य पद से व्यवधान होने पर भी नकार का णकार नहीं होता। जैसे—'परीमे गामनेषत्'[1]। सूत्र में 'आ को छोड़कर' यह क्यों कहा गया ? 'पर्यांणद्धम्'[2] में निषेध न होवे ॥ २१ ॥

## तुविष्टमः ॥ ३० ॥

**सू० अ०**—तुविष्टमः में सकार का आगम होता है।

### निर्मलभाष्यम्

**तुविष्टमः** इत्यत्र षकारस्यागमः भवति। यथा—'तुविष्टमः' (सं० ६.३३.३)। नकारस्य णकारविधाने तदपवादे चाऽनधिकृतं सूत्रमिदम् ॥३०॥

॥ इति श्रीमत्पण्डितदशरथपाठकसूनुना डा० जमुनापाठकेन कृते निर्मलभाष्ये चतुरध्यायिकायाः तृतीयाध्यायस्य चतुर्थः पादः ॥

॥ इति तृतीयोऽध्यायः ॥

### शशिकला

तुविष्टमः में षकार का आगम होता है। जैसे—'तुविष्टमः'[3]। नकार के णकारविधान तथा उसके अपवाद के विधान के प्रसंग में षकार के आगम का अनधिकृत विधान हुआ है ॥ ३० ॥

॥ चतुरध्यायिका के तृतीय अध्याय के चतुर्थ पाद की डा० जमुनापाठक कृत शशिकला व्याख्या समाप्त ॥

॥ तृतीय अध्याय समाप्त ॥

---

१. परि। इमे। गाम्। अनेषत् ( प० पा० )
२. परि। आ–नद्धम् ( प० पा० )
३. तुवि–तमः ( प० पा० )

# चतुर्थोऽध्यायः

## अथ प्रथमः पादः

[ अध्यायविषयनिर्देशनम् ]

**समासावग्रहविग्रहान् पदे यथोवाच छन्दसि शाकटायनः । तथा प्रवक्ष्यामि[1] ॥१-२॥**

**सू० अ०**—संहिता के पदपाठ में समास, अवग्रह तथा विग्रह को जैसा शाकटायन ने कहा है, वैसा मैं ( सूत्रकार ) भी विधान करूँगा ।

### निर्मलभाष्यम्

**छन्दसि** अथर्वचरणस्य संहितायां **पदे** पादपाठे **यथा** येन प्रकारेण **समासावग्रहविग्रहान्** समासः समस्तपदः अवग्रहः पृथक्करणं **विग्रहश्च** विच्छेदश्च तान् **शाकटायनः** पदपाठकारः शाकटायनाचार्य **उवाच** कथितवान् **तथा** तेनैव प्रकारेण अहं सूत्रकारः **प्रवक्ष्यामि** कथयिष्यामि, विधानं करिष्यामीत्यर्थः । 'उपसर्ग आख्यातेनोदात्तेन समस्यते' ( ४.१.५४ ) इत्यादिना समास उक्तः । 'पूर्वेणावग्रहः' (४.१ ६०) इत्यादिना अवग्रहः, 'अनर्थककर्मप्रवचनीयान्ययुक्तैर्विग्रहोऽभिवितन्वादिषु' (४ १ ५६) इत्यादिना विग्रहश्च विहितः ॥१-२॥

### शशिकला

अथर्वचरण की संहिताओं के पदपाठ के विषय में पदपाठकार शाकटायन ने जिस प्रकार समास समस्त पद, अवग्रह=पृथक्करण तथा विग्रह=पदविच्छेद को कहा है उसी प्रकार मैं ( सूत्रकार ) भी विधान करूँगा । जैसे—'अनुदात्त आख्यात के साथ उपसर्ग समस्त हो जाते हैं' ( ४.१ ५४ ) के द्वारा समास को कहा गया है । 'पूर्ववर्ती पद से पृथक्करण होता है ( ४.१ ६० ) इत्यादि के द्वारा अवग्रह तथा 'अभि वि तनु' इत्यादि में अनर्थक, कर्मप्रवचनीय (तथा) अन्य ( पदों ) से युक्त होने पर ( उपसर्ग ) से ( आख्यात का ) विच्छेद होता है ( ४ १.५६ ) के द्वारा विच्छेद कहा गया है ॥१-२॥

---

१. (ख) सूत्रद्वयं नास्ति ।

[ पदानां भेदाः ]

## चतुष्टयं पदम् । नामाख्यातोपसर्गनिपाताः[1] ॥३–४॥

**सू० अ०**—नाम, आख्यात, उपसर्ग तथा निपात चार प्रकार के पद होते हैं ।

### निर्मलभाष्यम्

**नामाख्यातोपसर्गनिपाताः** नाम च आख्यातश्चोपसर्गश्च निपाताश्चेति **चतुष्टयं** चतुर्धा **पदं** पदजातं भवति ॥३–४॥

### शशिकला

नाम, आख्यात, उपसर्ग और निपात—ये चार प्रकार के पद होते हैं ॥३–४॥

[ आख्यातसंज्ञाविधानम् ]

## आख्यातं यत्क्रियावाचि[2] ॥५॥

**सू० अ०**—जो क्रिया-वाचक ( पद ) है ( वह ) आख्यात ( कहलाता ) है ।

### निर्मलभाष्यम्

**क्रियावाचि** धात्वर्थः क्रिया तस्य वाचकं यत्पदं **तदाख्यातम्** आख्यात-संज्ञकम्, आख्यातमभिधीयत इत्यर्थः । यथा—'भवति' ( सं० ३.२२४ ) 'पचति' (सं० १०.९४) इत्यादयः । येन पदेन वक्ता क्रियामभिदधाति तदाख्यातम् । यथोक्तं यास्केन —'भावप्रधानमाख्यातम्' ( नि० १.१ ) । शौनकेनोक्तम्—'तदाख्यातं येन भावं सधातु' 'क्रियावाचकमाख्यातम्' ( ऋ० प्रा० १२.१९,२५ ) । भवतीति भावः क्रिया । यथोक्तं यास्केन—'भवतीति भावस्य । आस्ते शेते व्रजति तिष्ठतीति' ( नि० १.१ ) । दुर्गाचार्य मते—'आख्यायन्ते स्त्रीपुंनपुंसकानि क्रिया गुणभावेन वर्तमानान्येन क्रिया च तेषामुपरि वर्तमानेत्याख्यातम्' ( नि० ११ दुर्गभाष्यम् ) । पुनर्यत्र

---

१. (क) नामाख्यातोपसर्गनिपातानाम् इतिपाठः ।
(ख) सूत्रद्वयं नास्ति ।

२. (ख) सूत्रमिदं नास्ति ।

नामाख्याते उभे भवतः तत्र भावस्यैव प्राधान्यम् । यथोक्तम्—'यद् यत्रोभे भावप्रधाने भवतः' ( नि० १.१ )। एवं वाक्ये आख्यातमेव प्रधानमिति फलितम् । संज्ञाप्रयोजनम्—'आख्यातं नाम वा यत्स्यात् सर्वमेव समस्यते' ( ४.१.१८ ) इत्यादयः ।।५।।

## शशिकला

क्रिया-वाचक पद आख्यात कहलाता है। जैसे—'भवति' 'पचति' इत्यादि। जिस पद के द्वारा वक्ता क्रिया का कथन करता है, वह आख्यात कहलाता है। जैसा यास्कने कहा है—'आख्यात भाव (=क्रिया)—प्रधान होता है। शौनक ने भी कहा है—'आख्यात वह है जिसके द्वारा वक्ता क्रिया का कथन करता है और जो धातु से समन्वित होता है। 'आख्यात क्रिया-वाचक होता है' ( ऋ० प्रा० १२.१९.२५ )। ऐसा होता है—यह क्रिया का सामान्य लक्षण है। जैसा यास्क ने कहा है—'होता है, यह भाव का लक्षण है जैसे—वह है, सोता है, जाता है, बैठा है इत्यादि' ( नि० १.१ )। दुर्गाचार्य के अनुसार—'आख्यात वह है जिसके द्वारा स्त्रीलिङ्ग, पुलिङ्ग तथा नपुंसकलिङ्ग रूपी द्रव्य क्रिया की अपेक्षा गौड़ रूप से प्रकट किए जाते हैं और उनकी अपेक्षा क्रिया प्रधान रूप से व्यक्त की जाती है। ( नि० १.१ दुर्गभाष्य )। जहाँ नाम तथा आख्यात दोनों प्रधान होते हैं वहाँ भाव की प्रधानता होती हैं—यह यास्क का कथन है। इस प्रकार वाक्य में क्रिया ही प्रधान होती है। संज्ञा का प्रयोजन—'आख्यात तथा नाम सभी समस्त होते हैं ( ४.१.१८ ) इत्यादि ।।५।।

[ नामसंज्ञाविधानम् ]

## नाम सत्वाख्यमुच्यते[1] ।।६।।

**सू० अ०**—द्रव्य ( सत्व ) वाचक ( पद ) नाम कहलाता है।

## निर्मलभाष्यम्

**सत्वाख्यं** सत्वं द्रव्यं तस्य वाचकं पदं **नाम** नामसंज्ञया **उच्यते** अभिधीयते। यथा—'अग्निः' ( सं० १.७४ ) 'इन्द्रः' ( सं० १.७.२ ) इत्यादयः यत्र द्रव्यं प्रधानं तन्नाम इत्युच्यते। यथोक्तम् 'सत्वप्रधानानि नामानि' ( नि० १.१ )। शौनकमते यत्पदेन वक्ता सत्वमभिदधाति तन्नाम इत्यभि-

---

१. (ख) सूत्रमिदं नास्ति ।

धीयते—'तन्नाम येनाभिदधाति सत्वम्' ( ऋ० प्रा० १२.१८ )। लिङ्ग-सङ्ख्योरत्र सद्भाव इति च सत्वम्। यथोक्तम्—'मूर्तं सत्वभूतं सत्वनाम-भिर्व्रज्या पक्तिरिति' ( नि० १.१ )। ननु व्रज्या पक्तिरित्यत्र व्रज् पच् धातुरेव कथं तन्नाम ? उच्यते कृदभिहितो भावो द्रव्यवत्प्रकाशते। अत एव एते नाम एव। यथोक्तं—'अद इति सत्त्वानामुपदेशः। गौरश्वः पुरुषो हस्तीति' ( नि० १.१ )। दुर्गाचार्यमते—नमन्त्याख्यातशब्दे गुणभावेन नमयन्ति वा स्वमर्थमाख्यातशब्दवाच्ये गुणभावेनेति नामानि' ( नि० १.१ दुर्गभाष्यम् ) इति। संज्ञाप्रयोजनम् नाम नाम्नानुदात्तेन समस्तम्। प्रकृति स्वरम्' ( ४ १.९-१० ) इत्यादयः ॥६॥

## शशिकला

सत्व = द्रव्य का वाचक पद नाम कहलाता है। जैसे—'अग्निः' 'इन्द्रः' इत्यादि। जहाँ द्रव्य की प्रधानता होती है, वह नाम कहलाता है। जैसा कहा गया है—'नाम सत्व-प्रधान होते हैं' ( नि० १.१ )। शौनक के अनुसार वक्ता जिस पद से सत्व का कथन करता है वह नाम है। कभी-कभी भाव भी मूर्तरूप को प्राप्त होकर सत्वरूप में आया हुआ द्रव्य नाम से अर्थात् लिङ्ग सङ्ख्या, वचन इत्यादि से युक्त पदों से व्यवहृत होता है जैसे व्रज्या, पक्ति इत्यादि ( नि० १.१ )। यहाँ शङ्का होती है कि व्रज्या तथा पक्ति में क्रमशः व्रज् तथा पच् धातुएँ है फिर यह नाम कैसे है। समाधान यह है कि ये कृदन्त प्रत्यय से अभिहित भाव द्रव्य के समान होते होते हैं अत एव ये नाम है। जैसा यास्क ने कहा है—'सभी द्रव्यों का कथन यह क्या है, इस सामान्य शब्द से ही हो जाता है। जैसे—गौः, अश्वः, पुरुषः, हस्ती इत्यादि' ( नि० १.१ )। दुर्गाचार्य के अनुसार 'नाम वे है जो गौण रूप से आख्यात शब्द में झुक जाते हैं अथवा जो अपने आप को आख्यात शब्द के अर्थ में गौण रूप से झुका देते हैं' ( नि० १.१ दुर्गभाष्य ) संज्ञा का प्रयोजन—'नाम पद अनुदात्त नाम पद से समस्त हो जाते हैं तथा उनका प्रकृति स्वर ( उदात्त ) रहता है' ( ४ १.९-१० ) इत्यादि ॥६॥

### [ निपातसंज्ञाविधानम् ]

**निपाताश्चादयः सर्वेः[1] ॥७॥**

**सू० अ०**—च इत्यादि सभी निपात ( कहलाते हैं )।

---

१. (क) सत्व इति पाठः। (ख) सूत्रमिदं नास्ति।

## निर्मलभाष्यम्

**चादयः** 'च' इत्यादयः **सर्वे: निपाताः** निपातसंज्ञकाः भवन्ति। यथा—'द्यां च पृथिवीम्' 'चान्तस्तिष्ठति' 'चास्रावम्' 'चान्तस्तिष्ठतु' (सं० १ २ ४) 'नीचा' ( सं० १.२१.२ ) 'नीचैः' ( सं० २ ३.३ ) 'नेव मांसे' 'न पीवसि' नेव मज्जस्वाहृतम्' ( सं० १.११.४ ) 'अलम्' ( सं० ६.१०९.१ ) इत्यादयः। उपमाद्यर्थेषु अनेकप्रकारेषु निपतन्ति अत एव निपाताः अभिधीयन्ते। यथोक्तं यास्केन—'उच्चावचेष्वर्थेषु निपतन्ति इति निपाताः' (नि० १.२ )। निपातानां प्रयोगः अनेकार्थेषु भवति। संज्ञाप्रयोजनम्—'उदात्तस्तु निपातो यः सानुदात्तः क्वचित्भवेत्। समस्यते यथाविधम्' ( ४.१.२१ ) इत्यादयः ॥७॥

## शशिकला

च इत्यादि सभी निपात कहलाते हैं। जैसे 'द्यां च पृथिवीम्' 'चान्तस्तिष्ठति' 'चा स्रावम्' 'चान्तस्तिष्ठतु' नेव मांसे' 'न पीवसि' 'नेव मज्जस्वाहृतम्' 'अलम्' यहाँ। च, न, अन्तः, अलम्—ये निपात हैं। ये अनेक प्रकार के अर्थों में प्रयुक्त होते हैं इस लिए निपात कहलाते हैं (नि० १.२)। संज्ञा का प्रयोजन—'जो उदात्त निपात किसी स्थल पर अनुदात्त हो जाय तो नियमानुसार समस्त हो जाता है' इत्यादि ॥७॥

[ उपसर्गसंज्ञाविधानम् ]

# उपसर्गास्तु प्रादयः[1] ॥८॥

**सू० अ०**—प्र इत्यादि उपसर्ग कहलाते हैं।

## निर्मलभाष्यम्

**प्रादयः** प्र इत्यादयः **उपसर्गाः** उपसर्गसंज्ञकाः भवन्ति। यथा—'प्र नृत्यन्तः' ( सं० ८ ६.११ ) 'प्र मोदिनीम्' ( सं० ४.३८.४ ) 'प्रतिनन्दन्ति' ( सं० ३.१० २ ) 'प्र तिरन्ते' ( सं० १४.२.३६ ) 'प्रतिशिक्षन्ति' ( सं० ४.२२.६ ) इत्यादयः। उपसर्गः नामाख्यातयोः अर्थे वैशिष्ट्यं जनयति। उपसर्गविषये यास्केन बहूनामाचार्याणां मतानि प्रस्तुतानि। शाकटायनस्य मते नामाख्याताभ्यां सह उपसर्गाः सार्थकाः, अन्यथा तु निरर्थका एव—'न निर्बद्धा उपसर्गा अर्थान्निराहुरिति शाकटायनः' ( नि० १.१ )। गार्ग्यस्य

---

१. (ख) सूत्रमिदं नास्ति।

मते स्वतन्त्रा अपि उपसर्गा सार्थकाः, न तु निरर्थकाः—'उच्चावचाः पदार्था भवन्तीति गार्ग्यः' ( नि० १.१ )। दुर्गाचार्यानुसारं—'आख्यातमुपगृह्यार्थ-विशेषमिमे तस्यैव सृजन्तीत्युपसर्गाः' ( नि० १.२ दुर्गभाष्यम् )। वैदिका-भरणकारमते—'गतितया कर्मप्रवचनीयतया वा पदान्तेरुपसृजन्ते इत्युप-सर्गाः' ( तै० प्रा० १.२५ वै० ) इति। संज्ञाप्रयोजनम्—'नाम नाम्नोपसर्गैस्तु सम्बन्धार्थं समस्यते' ( ४.१ ३५ ) इत्यादयः ॥८॥

## शशिकला

प्र इत्यादि उपसर्ग कहलाते हैं। जैसे—'प्र नृत्यन्तः' 'प्र मोदिनीम्' 'प्रतिनन्दन्ति' 'प्रतिरन्ते' 'प्रतिशिक्षन्ति' इत्यादि। ये उपसर्ग नाम तथा आख्यात के अर्थ में वैशिष्ट्य उत्पन्न करते हैं। उपसर्ग के विषय में यास्क ने बहुत से आचार्यों के मतों को प्रस्तुत किया है। शाकटायन के मत में नाम तथा आख्यात के साथ उपसर्ग सार्थक होते हैं अन्यथा निरर्थक होते हैं—'( नाम तथा आख्यात से ) अलग हुए उपसर्ग स्वतन्त्र अर्थों को नहीं कहते' ( नि० १.१ )। गार्ग्य के अनुसार स्वतन्त्र उपसर्ग भी सार्थक होते हैं, निरर्थक नहीं—'उपसर्गों के अर्थ अनेक प्रकार के होते हैं' ( नि० १.१ )। दुर्गाचार्य के मत में 'आख्यात का ग्रहण करके ये उस आख्यात के ही अर्थ में वैशिष्ट्य उत्पन्न कर देते हैं (नि० १.१ दुर्गभाष्यम्)। संज्ञा का प्रयोजन—'नाम ( पद ) नाम तथा उपसर्ग के साथ सम्बन्ध के लिए समस्त हो जाते हैं' ( ४.१.३५ ) इत्यादि ॥८॥

### [ नामसमासविधानम् ]

**नाम नाम्नानुदात्तेन समस्तम्। प्रकृतिस्वरम्[1] ॥ ९-१० ॥**

सू० अ०—नाम ( -पद ) ( परवर्ती ) अनुदात्त नाम ( -पद ) से समस्त होता है तथा (पूर्ववर्ती नाम पद का) मूलस्वर (विद्यमान रहता है)।

## निर्मलभाष्यम्

उदात्तः **नाम** नामपदः **अनुदात्तेन** अनुदात्तस्वरयुक्तेन परेण **नाम्ना** नामपदेन **समस्तं** भवति। तत्र पूर्वस्य नामपदस्य **प्रकृतिस्वरं** मूलस्वरम् उदात्तं विद्यमानं भवति। यथा—'इन्द्रंज्येष्ठा' ( सं० ३.१९.६ ) 'इन्द्रंपत्नी' ( सं० २०.१२६.९ ) 'इन्द्रंपुत्रे' ( सं० ३.१०.१३ ) 'इन्द्रंमेदिनौ' ( सं० ११.

१ (ख) सूत्रद्वयं नास्ति।

११.१८ ) 'इन्द्रंसखा' ( सं० ४५.२ ) 'इन्द्रापूषणा' ( सं० १९.१०.१ ) मित्रा-वरुणा' ( सं० ४.२९.३ ) 'मित्रावरुणौ' ( सं० ४.२९.६ )। अनुदात्तेनेति किम् ? 'इन्द्रावरुंणा' ( सं० १९.१०.१ ) 'इन्द्रासोमा' ( सं० १९.१०.१ ) 'मित्रावरुंणयोः' ( सं० १०.५.११ ) इत्यादिषु माभूत् ॥ ९-१० ॥

**शशिकला**

उदात्त नामपद परवर्ती अनुदात्त नामपद से समस्त होता है। वहाँ पूर्ववर्ती नामपद का प्रकृतिस्वर उदात्त विद्यमान रहता है। जैसे—'इन्द्रं-ज्येष्ठा……'[1]। अनुदात्त यह क्यों कहा गया ? 'इन्द्रावरुंणा'[2] 'इन्द्रा-सोमा'[3] 'मित्रावरुंणयोः'[4] इत्यादि में न होवे ॥ ९-१० ॥

## न युष्मदस्मद्वचनानि[5] ॥ ११ ॥

**सू० अ०**—युष्मत् तथा अस्मत् से युक्त पद समस्त नहीं होते।

**निर्मलभाष्यम्**

**युष्मदस्मद्वचनानि** युष्मद् अस्मच्च इत्यनेन युक्तं पदं समस्तं न भवति। यथा—'त्वद्योनयः' ( सं० १३ १.२ ) 'त्वायतः' (सं० २०.२१.३ ) 'त्वावतः' (सं० २०.७६.४) 'अस्मत्सखा' ( सं० ६.१२५.१ )।

**शशिकला**

युष्मत् तथा अस्मत् से युक्त पद समस्त नहीं होता। जैसे—'त्वद्यो-नयः' 'त्वायतः' 'त्वावतः' 'अस्मत्सखा' ॥ ११ ॥

## न चामन्त्रितमिष्यते[6] ॥१२ ॥

**सू० अ०**—सम्बोधन ( आमन्त्रित ) पद भी ( समस्त पद ) नहीं कहा जाता।

---

१. इन्द्रं–ज्येष्ठाः। इन्द्रं–पत्नी। इन्द्रं–पुत्रे। इन्द्रं–मेदिनी। इन्द्रं–सखा। इन्द्रं–पूषणा। मित्र–वरुंणा। मित्र–वरुणौ (प० पा०)।

२. इन्द्र–वरुंणा (प० पा०)

३. इन्द्र–सोमा (प० पा०)

४ मित्र–वरुंणयोः (प० पा०)

५. (ख) सूत्रमिदं नास्ति।

६. (ख) सूत्रमिदं नास्ति।

**निर्मलभाष्यम्**

**आमन्त्रितं** सम्बोधनपदं च समस्तपदं **न इष्यते** कथ्यते । **यथा—** 'वनस्पते' (सं० ६.१२५.१) ।

**शशिकला**

सम्बोधनपद समस्त नहीं होता । जैसे—'वनस्पते' ॥१२॥

[ समासे गतिस्वरविधानम् ]

## नामानुदात्तं प्रकृतिस्वरो गतिः[1] ॥ १३ ॥

**सू० अ०**—( यदि समास में ) नाम ( पद ) अनुदात्त हो तो 'गति' प्रकृतिस्वर वाला होता है ।

**निर्मलभाष्यम्**

'उपसर्गाः क्रियायोगे गतिस्तथा' ( ४.१.४९ ) इत्यनेन गतिसंज्ञा विहिता । पाणिनिनापि विहितम्—'प्रादय उपसर्गाः' क्रियायोगे' 'गतिश्च' ( पा० व्या० १.४.५७-५९ ) इति । 'एकाक्षरा उदात्ताः' 'आद्युदात्तास्तथापरे' 'अभीत्यन्तः' ( ४.१ ४६-४८ ) इति उपसर्गाणां स्वराः विहिताः । यदि **नाम** नामपदः **अनुदात्तं** सर्वानुदात्तं भवति तदा **गतिः** गतिसंज्ञकः पदः, उपसर्गः इत्यर्थः, **प्रकृतिस्वरः** स्वविहितस्वरानुसारं भवति । एकाक्षरः उदात्तः, अभीति वर्जयित्वा द्व्यक्षरात्मकः आद्युदात्तः, अभि अन्तोदात्तः इति । **यथा**— 'सुविद्वांसः' ( सं० ४ १४.४ ) 'सुविद्वांसम्' ( सं० २०.६६.२ ) 'सुभेषजम्' ( सं० २.३.१ ) 'सुभूत्या' ( सं० ३ १४.१ ) 'सुपक्वे' ( सं० ५.२९.६ ) सुप्राव्या' ( सं० ४.३०.६ ) 'अभिजिताः' ( सं० .२.३.६ ) अभिद्युभिः' ( सं० २०.२१.५ ) 'परिगृहीता' ( सं० ११.३.१५ ) 'परिमिता' ( सं० ९.१५-२७ ) 'प्रतिष्ठितः' ( सं० १९.९.१४ ) 'प्रतिशत्रवः' ( सं० ४.२२.६ ) 'अवरूढौ' ( सं० ६.१४०.१ ) 'अवक्षामम्' ( सं० ६.३७.३ ) कुचरः ( सं० ७.२७.२ ) 'कुर्णपम्' ( सं० ११.१२.४ ) इत्यादयः । अनुदात्तमिति किम् ? 'सुगार्हपत्य.' ( सं० १२ २ ४५ ) 'सुगोपातम्' 'अभिचारः' ( सं० ११.१.२२ ) अभिशोकः ( सं० १ २५ ३ ) इत्यादिषु गतिः प्रकृतिस्वरो माभूत् ॥ १३ ॥

**शशिकला**

'क्रिया के साथ प्रयुक्त उपसर्ग गति कहलाते हैं' के द्वारा गति संज्ञा का विधान किया गया है ( ४.१.४९) । पाणिनि ने भी गति संज्ञा का विधान

१. (क) सूत्रमिदं नास्ति ।

करते हुए कहा है—'क्रिया के योग में उपसर्ग गति कहलाते हैं ( पा० व्या० १.४.५७-५९ )। 'एक अक्षर वाले उपसर्ग उदात्त होते हैं,' 'दो अक्षरों वाले आद्युदात्त होते हैं' तथा 'अभि अन्तोदात्त होता है' ( ४.१.४६-४८ ) के द्वारा उपसर्गों के स्वर कहे गये हैं। यदि नाम पद अनुदात्त ( सर्वानुदात्त ) हो तो गतिसंज्ञक पद अपने प्रकृतिस्वर के अनुसार रहते हैं अर्थात् एकाक्षरात्मक गति उदात्त, द्वयक्षरात्मक आद्युदात्त तथा अभि अन्तोदात्त रहता है। जैसे—'सुविद्वांसः……' । सूत्र में अनुदात्त —यह क्यों कहा गया ? सुगार्हपत्यः'[२] 'सुगोपातम्' 'अभिचारः'[३] 'अभिशोकः'[४] इत्यादि में गति प्रकृतिस्वर वाला न होवे ॥ १३ ॥

## अनुच्चो वा नाम चेत्स्यादुदात्तम्[५] ॥१४॥

सू० अ०—यदि नाम ( -पद ) उदात्त ( स्वर वाला ) हो तो (गति) अनुदात्त होता है।

### निर्मलभाष्यम्

पूर्वस्यापवादोऽयम्। वा इति समुच्चये। **चेत्** यदि **नाम** नामपदः **उदात्तम्** उदात्तस्वरयुक्तः, तदा गतिः **अनुच्चः** सर्वानुदात्तः भवति। 'अभिमुदः' ( सं० ११.९.२६ ) 'अभिशाचः' ( सं० १८.४.४४ ) 'अवकेशः' ( सं० ६.३०.२ ) 'अवभृथम्' ( सं० ९.११.५ ) 'सुगार्हपत्यः' ( सं० १२.२.४५ ) 'सुचक्रः' ( सं० ४.१२.६ ) 'परिक्रोशम्' ( सं० २०.७४.७ ) परिपाणं' (सं० ( सं० ८.५१ ) 'प्रविद्वान्' ( सं० ४.२६.१ ) 'प्रस्तरः' ( सं० १६.२.६ ) इत्यादयः। उदात्तमिति किम् ? 'सुविद्वांसः' ( सं० ४.१४.४ ) 'परिगृहीता' ( सं० ११.३.१५ ) 'प्रतिष्ठितः' ( सं० ११.९.१८ ) 'प्रतिशत्रवः' ( सं० ४.२२.६ ) इत्यादिषु गतिः अनुदात्तः माभूत् ॥ १४ ॥

---

१. सु-विद्वांसः। सु-विद्वांसम्। सु-भेषजम्। सु-भूत्वा। सु-पक्वे। सु-प्राव्या। अभि-जिताः। 'अभि-द्युभिः'। परि-गृहीता। परि-मिता। प्रति-स्थितः। प्रति-शत्रवः। अव-रुद्धो। अव-क्षामम्। कु-चरः (प० पा०)।

२. सु-गार्हपत्यः (प० पा०)

३. सु-गोपातम्। अभिचारः (प० पा०)

४. अभिशोकः (प० पा०)

५. (क) सूत्रमिदं नास्ति।

## शशिकला

यह पूर्ववर्ती विधान का अपवाद है। यहाँ वा समुच्चय के अर्थ में प्रयुक्त है। यदि नामपद उदात्तस्वर वाला हो तो गति सर्वानुदात्त होता है। जैसे—अभिमुदः' ...... '[1]। सूत्र में उदात्त—ऐसा क्यों कहा गया? 'सुविद्वांसः' 'परिगृहीता' 'प्रतिष्ठितः' 'प्रतिशत्रवः' इत्यादि में अनुदात्त न होवे ॥ १४ ॥

## क्रियायोगे गतिपूर्वः समासोऽयम् । यावान्तोऽनुच्चाः समर्थास्तान् समस्येत्[2] ॥ १५-१६ ॥

**सू० अ०**—क्रिया के योग में 'गति' पूर्व में होने पर यह ( गति ) समस्त होता है तथा जितने भी अनुदात्त ( गति ) होते हैं, ( सभी ) समर्थ होते हैं। ( अत एव ) उन सबको समस्त कर देना चाहिए।

## निर्मलभाष्यम्

**क्रियायोगे** क्रियया संयोगे **गतिपूर्वः** पूर्वः उपसर्गः **समासोऽयं** समस्तः भवति। तत्र **यावान्तः** एकाधिकाः **अनुच्चाः** अनुदात्तस्वरयुक्ताः उपसर्गाः ते सर्वे समासार्थं **समर्थाः** भवन्ति अत एव **तान्** सर्वान् अनुदात्तान् उपसर्गान् क्रियायोगे **समस्येत्** समस्तं कुर्यात्। यथा—'अपावृत्य' ( सं० १२.२.३४ ) 'अनुसञ्चरन्ति' ( सं० ३.२१.७ ) 'अनुसम्प्रयाहि' ( सं० ११.१.३६ ) 'निरादधत्' ( सं० १२.२.३९ ) 'समादाय' ( सं० ९.५.२३ ) 'समादधति' ( सं० ६.७६.१ ) इत्यादयः ॥ १५-१६ ॥

## शशिकला

गति पूर्व में होने पर क्रिया के साथ समस्त होता है। वहाँ जितने भी एकाधिक अनुदात्त उपसर्ग होते हैं वे सभी समर्थ होते हैं अत एव उन सभी उपसर्गों को क्रिया के साथ में समस्त कर देना चाहिए। जैसे—'अपावृत्य' ...... '[3] ॥ १४-१६ ॥

---

१. अभि-मुदः। अभि-शाचः। अव-केश। अव-भृथम्। सु-गार्हपत्यः। सु-चक्रेः। परि-क्रोशम्। परि-पाणः। प्र-विद्वान्। प्र-स्तरः (प० पा०)।

२. (ख) सूत्रद्वयं नास्ति।

३. अप-आवृत्य। अनु-सञ्चरन्ति। अनु-सम्प्रयाहि। निः-आदधत्। सम्-आदाय। सम्-आदधति (प० पा०)

**यत्रानेकोऽप्यनुच्चोऽस्ति परश्च प्रकृतिस्वरः ।**
**आख्यातं नाम वा यत्स्यात् सर्वमेव समस्यते¹ ॥ १७-१८ ॥**

**सू० अ०**—जहाँ अनेक (एक से अधिक) अनुदात्त ( उपसर्ग ) होते हैं तथा परवर्ती प्रकृतिस्वर वाला होता है तो वह ( परवर्ती ) आख्यात हो अथवा नाम हो—सभी समस्त होते हैं ।

### निर्मलभाष्यम्

**यत्र** यस्मिन्स्थले **अनेकः** एकाधिकः **अनुच्चः** अनुदात्त उपसर्गं **अस्ति** विद्यते, **परश्च** परवर्तिपदश्च प्रकृतिस्वरः स्वस्य मूलस्वरयुक्तो भवति, तत्परपदः **आखयातं** क्रियापदः **वा** अथवा, **नाम** नामपदः **यत्स्यात्** यद्भवति **तत्सर्वमेव समस्यते** समस्तं भवति । वस्तुतस्तु एकाक्षरः उपसर्गः उदात्तः, द्व्यक्षरात्मकश्च अभिवर्जयित्वा आद्युदात्तः. अभि च अन्तोदात्तः भवति । यदि स्वप्रकृतिस्वरं त्यक्त्वा यत्र द्वौ उपसर्गौ अनुदात्तावस्थायां विद्येते तत्र परवर्तिना प्रकृतिस्वरयुक्तेन आख्यातेन नामपदेन च समस्तौ भवतः । यथा—'अ॒न्वा॒न॒शे' ( सं० ४.२५ २ ) अ॒न्वा॒ग॒न्ता' ( सं० ६.१२३.१-२ ) 'अ॒पा॒वृत्य॑' ( सं० १२ २.३४ ) 'अ॒भ्या॒चा॒रम्' ( सं० १०.३.२ ) 'अ॒भ्या॒क्रामं॑म्' ( सं० १. ७ ४२ ) 'अ॒भ्यु॒देत्य॑' ( सं० १५.११.१ ) इत्यादयः ॥ १७-१८ ॥

### शशिकला

जिस स्थान पर अनेक अनुदात्त उपसर्ग होते हैं और परवर्ती पद प्रकृति स्वर वाला होता है, वहाँ परवर्ती पद आख्यात हो अथवा नाम हो, सभी पद समस्त हो जाते हैं । वस्तुतः एकाक्षर उपसर्ग उदात्त, अभि से अन्य द्व्यक्षर उपसर्ग आद्युदात्त तथा अभि अन्तोदात्त होता है । यदि दो उपसर्ग अपने प्रकृतिस्वर को त्यागकर सर्वानुदात्त हों तो वहाँ परवर्ती प्रकृतिस्वर वाले नाम तथा आख्यात से समस्त हो जाते हैं । जैसे —'अ॒न्वा॒न॒शे'[2] 'अ॒न्वा॒ग॒न्ता'[3] 'अपा॒वृत्य॑'[4] 'अ॒भ्या॒चा॒रम्'[5] 'अ॒भ्या॒क्रामं॑म्'[6] 'अ॒भ्यु॒देत्य॑'[7] इत्यादि ॥ १७-१८ ॥

---

१. (ख) सूत्रद्वयं नास्ति ।
२. अ॒नु॒–आ॒न॒शे (प० पा०)
३. अ॒नु॒–आ॒ग॒न्ता (प० पा०)
४. अ॒प॒–आ॒वृत्य॑ (प० पा०)
५. अ॒भि॒–आ॒चा॒रम् (प० पा०)
६. अ॒भि॒–आ॒क्रामं॑म् (प० पा०)
७. अ॒भि॒–उ॒देत्य॑ (प० पा०)

**सोपसर्गं तु यन्नीचैः पूर्वं[1] यदि वा परम्**

**उदात्तेन समस्यन्ते यथैतत्सुप्रतिष्ठितम्[2] ॥१९-२०॥**

**सू० अ०**—जो अनुदात्त स्वर वाला उपसर्ग पूर्व में हो अथवा बाद में हो ( वह अनुदात्त उपसर्ग ) उदात्त ( उपसर्ग ) के साथ समस्त हो जाता है। 'सुप्रतिष्ठितम्' यह उदाहरण है।

### निर्मलभाष्यम्

**यन्नीचैः** अनुदात्तस्वरयुक्तः यदुपसर्गः, तं **सोपसर्गं** उपसर्गेण सहितं **उदात्तेन** उदात्तस्वरयुक्तेन उपसर्गेण **समस्यन्ते** समस्तपदं प्राप्नुवन्ति। सः अनुदात्तस्वरयुक्तः उपसर्गं उदात्तादुपसर्गात् **पूर्वं** स्यात् **वा** अथवा **परं** स्यात्। उदाहरति **यथा** एतत्—'सुप्रतिष्ठितम्' ( सं० १२ १.६३ )। अत्र परवर्ती अनुदात्तः उपसर्गः 'प्र' स्वस्य पूर्वेण उदात्तस्वरयुक्तेनोपसर्गेण 'सु' इत्यनेन समस्तं भवति।

### शशिकला

जो अनुदात्तस्वर युक्त उपसर्ग है, उस अनुदात्तयुक्त उपसर्ग को उदात्त स्वर वाले उपसर्ग से समस्त कर देते हैं। वह अनुदात्त स्वरयुक्त उपसर्ग पूर्व में हो अथवा बाद में हो। उस विषय में यह उदाहरण देते हैं—'सुप्रतिष्ठितम्'[3]। यहाँ परवर्ती अनुदात्त उपसर्ग 'प्र' अपने पूर्ववर्ती उदात्त उपसर्ग सु' से समस्त हो जाता है ॥ १९-२० ॥

**उदात्तस्तु निपातो यः सानुदात्तः क्वचिद्भवेत्,**

**समस्यते यथाविधम्। इतिहासो निदर्शनम्।**

**नघारिषां सुसहेत्येवमादीन्युदाहरेत्[4] ॥२१-२३॥**

**सू० अ०**—जो उदात्त निपात किसी स्थल पर अनुदात्त हो जाय तो वह नियमानुसार समस्त हो जाता है। 'इतिहास' ( पद ) उदाहरण है। नघारिषां, सुसहे इत्यादि को भी उदाहरित करना चाहिए।

---

१. (क) पूर्व इति पाठः।
२. (ख) सूत्रद्वयं नास्ति।
३. सु-प्रतिष्ठितम् (प० पा०)।
४. (ख) सूत्रत्रयं नास्ति।

## निर्मलभाष्यम्

'निपाता आद्युदात्ता' ( पा० व्या० ) इत्यनेन निपातस्य उदात्तत्वमुक्तम्। सः **उदात्तः** उदात्तस्वरयुक्तः **निपातः** संहितायां **क्वचित्** स्थानविशेषे **सानुदात्तः** अनुदात्तस्वरयुक्तः भवेत्, सर्वानुदात्तः भवेदित्यर्थः, तर्हि सोऽनुदात्तस्वरयुक्तः निपातपदः **यथाविधं** विधानानुसारं **समस्यते** समस्तः भवति। विषयेऽस्मिन् उदाहरणं निर्दिशति—'इतिहासः' ( सं० १५ ६ ११ ) 'नघारिषाम्' ( सं० ८.२.६ ) 'सुसह' ( सं० ६.६४.३ )। आदीनि इति बहुवचनेन ज्ञायते यदन्यत्रापि भवति। तद्विषये निदर्शनानि द्रष्टव्यानि—'यथाभागम्' ( सं० ११.११.२६ 'यथावशम्' ( सं० ३.१३.४,७ ) 'अघहारः' ( सं० ६ ६६.१ ) 'अघायवः' ( सं० १.२७ १ ) 'अघायुः' ( सं० ४.३.२ ) 'अघारिणौ' ( सं० ११.११.१४ ) 'अघाश्वस्य' ( सं० १०.४.१० ) इत्यादयः। सानुदात्तः इति किम्? 'यथा सूर्यः' ( सं० ७.१४.१ ) 'यथामुम्' ( सं० ५.८.७ ) इत्यादिषु माभूत् ॥२१-२३॥

## शशिकला

'निपात पद आद्युदात्त होते हैं' इस विधान से निपातपदों का आद्युदात्त होना कहा गया है। जो उदात्त स्वर वाला निपात संहिता में किसी स्थान पर अनुदात्त स्वर वाला हो जाय तो वह अनुदात्त स्वर वाला निपातपद विधान के अनुसार समस्त होता है। इस विषय में उदाहरण निर्दिष्ट हैं— इतिहासः'[१] 'नघारिषाम्'[२] सुसह'।[३] आदि इस बहुवचन से ज्ञात होता है कि इससे अन्यत्र भी होता है। इस विषय में ये उदाहरण द्रष्टव्य है—'यथाभागम्'[४] 'यथावशम्'[५] अघहारः'[६] 'अघायवः'[७] 'अघायुः'[८] 'अघारिणौ'[९] 'अघाश्वस्य'[१०] इत्यादि। सानुदात्त—यह क्यों कहा गया? 'यथा सूर्यः'[११] 'यथामुम्'[१२] इत्यादि में समस्त न होवे ॥२१-२३॥

---

१ इतिह—आसः (प० पा०)
२. नघ-रिषाम् (प० पा०)
३. सु-सह (प० पा०)
४. यथा-भागम् (प० पा०)
५. यथा-वशम् (प० पा०)
६. अघ-हारः (प० पा०)
७. अघ-यवः (प० पा०)
८. अघ-आयुः (प० पा०)
९. अघ-अरिणौ (प० पा०)
१० अघ-अश्वस्य (प० पा०)
११. यथा। सूर्यः (प० पा०)
१२. यथा। अमुम् (प० पा०)

## सहेत्यनेनानुदात्तं परं नाम समस्यते[1] ॥२४॥

सू० अ०—सह के साथ परवर्ती अनुदात्त नाम ( पद ) समस्त होता है।

### निर्मलभाष्यम्

**सहेत्यनेन** सह इति अनेन निपातेन **परं** परवर्ती **अनुदात्तम्** अनुदात्त-स्वरयुक्तः **नाम** नामपदः **समस्यते** समस्तं भवति। यथा 'सहकण्ठिका' ( सं० १०.९.१५ ) 'सहदेवता' ( सं० १२.४.२३ ) सहपत्न्यै' ( सं० १४. १.५८ ) 'सहपूरुषान्' ( सं० ६.५६.१ ) 'सहवीरम्' ( सं० २.६५ ) इत्यादयः ॥२४॥

### शशिकला

सह—इस निपात के साथ परवर्ती अनुदात्त ( सर्वानुदात्त ) नामपद समस्त होता है। जैसे—'सहकण्ठिका'[2] 'सहदेवता'[3] 'सहपत्न्यै'[4] 'सहपूरुषान्'[5] 'सहवीरम्'[6] इत्यादि ॥२४॥

## अनुदात्तेन चोदात्तस्वभावो यत्र चोच्यते।
## सहसूक्तवाकः सान्तर्देशा शतक्रतुः निदर्शनम्[7] ॥२५–२६॥

सू० अ०—जहाँ उदात्त स्वभाव वाला (निपात होता है) ( वहाँ वह परवर्ती ) अनुदात्त ( नाम पद ) से ( समस्त ) कहा गया है। सहसूक्तवाकः सान्तर्देशा तथा शतक्रतुः उदाहरण है।

### निर्मलभाष्यम्

**यत्र** यस्मिन्स्थले **उदात्तस्वभावः** उदात्तः स्वभावः यस्य सः निपातः **अनुदात्तेन** अनुदात्तस्वरयुक्तेन पदेन **च** समस्तं **उच्यते**। निदर्शयति—'सहसूक्तवाकः' ( सं० ७.१०२.६ ) 'सान्तर्देशाः' ( सं० ९.५.३७ ) 'शतक्रतुः' ( सं० ६.३०.१ ) ॥२५–२६॥

---

१. (ख) सूत्रमिदं नास्ति
२. सह-कण्ठिका (प० पा०)
३. सह-देवता (प० पा०)
४. सह-पत्न्यै (प० पा०)
५. सह--पुरुषान् (प० पा०)
६. सह-वीरम् (प० पा०)
७. (ख) सूत्रद्वयं नास्ति।

### शशिकला

जिस स्थान पर उदात्त स्वर से युक्त निपात होता है, वह परवर्ती अनुदात्त स्वर से युक्त पद के साथ समस्त हो जाता है। इस विषय में उदाहरण देते हैं—'सहसूंक्तवाकः'[1] 'सान्तर्देशा'[2] 'शृतक्रंतुः'[3] ॥२५-२६॥

[ विग्रहविधानम् ]

**अनुदात्तोऽनु गतिर्मध्ये पूर्वपरौ प्रकृतिस्वरौ ।**
**पूर्वेण विग्रहस्तत्र । पुरुषेऽधि समाहिते[4] ॥२७-२८॥**

**सू० अ०**—अनुदात्त 'गति' मध्य में हो तथा उससे पूर्ववर्ती तथा परवर्ती ( पद ) प्रकृति स्वर वाला हो तो वहाँ पूर्ववर्ती ( गति ) से विच्छेद होता है। 'पुरुषेऽधि समाहिते' (उदाहरण है)।

### निर्मलभाष्यम्

**अनुदात्तः** अनुदात्तस्वरयुक्तः **गतिः** गतिसंज्ञकः पदः **मध्ये**, **अनु** पश्चादर्थे, **पूर्वपरौ** पूर्ववर्ती परवर्ती च **प्रकृतिवरौ** मूलस्वरयुक्तौ, उदात्तस्वरयुक्तौ इत्यर्थः, तत्र **पूर्वेण** गतिना **विग्रहः** विच्छेदः भवति। यथा—पुरुंषे। अधिं। सुमाहिंते_ इतिं सुम्—आहिंते ( प० पा० ) 'पुरुषेऽधिं सुमाहिंते' ( सं० १०.७.१५ ) इत्यत्र अनुदात्तस्वरयुक्तः गतिः सम् इति मध्ये विद्यते। तत्पूर्वं गति अधि परं च आहिते इति प्रकृतिस्वरेण स्थितः। अत एवात्र अधि इत्यनेन समाहिते इत्यस्य पदपाठे विच्छेदः भवति॥२७-२८॥

### शशिकला

अनुदात्त स्वर वाला गतिसंज्ञक पद बीच में हो तथा उससे पहले तथा बाद में प्रकृति स्वर वाले पद हों तो वहाँ पूर्ववर्ती गति से विच्छेद होता है। जैसे—'पुरुषे। अधिं। सुमाहिंते_ इतिं सुम्—आहिंते' ( प० पा० ) 'पुरुषेऽधिं सुमाहिंते ( सं० पा० ) यहाँ अनुदात्त गति सम् बीच है। उसके

---

१. सह-सूंक्तवाकः (प० पा०)
२. सु-अंन्तर्देशाः (प० पा०)
३. शृत-क्रंतुः (प० पा०)
४. (ख) सूत्रद्वयं नास्ति।

पूर्व में अधि तथा बाद में आहिते अपने प्रकृति स्वर वाले हैं। अत एव यहाँ पूर्ववर्ती गति अधि से समाहिते पद का पदपाठ में विच्छेद हो गया है ॥२७–२८॥

**उदात्तोऽनु गतिर्यत्रानुदात्तं परं पदम् ।**

**पूर्वेण विग्रहस्तत्र । संसुभूत्या निदर्शनम्[1] ॥२९–३०॥**

सू० अ०—जहाँ उदात्त ( गति ) के पश्चात् गति हो तथा उससे बाद में अनुदात्त पद हो तो वहाँ पूर्ववर्ती ( गति ) से विच्छेद होता है। संसुभूत्या उदाहरण है।

### निर्मलभाष्यम्

संहितायां **यत्र** यस्मिन्स्थले **उदात्तः** उदात्तस्वरयुक्तः गतिः **तदनु** तत्पश्चात् गतिः विद्यते। तस्माद् गतिसंज्ञकपदात् **परं** परवर्ती **पदं** पदः **अनुदात्तम्** अनुदात्तस्वरयुक्तः सर्वानुदात्तः इत्यर्थः, पदः भवति तत्र पूर्वेण गतिना पदपाठे **विग्रहः** विच्छेदः भवति। निदर्शयति—'सं सुभू॑त्या' ( सं० ३.१४.१ ) इत्यत्र उदात्तः गतिः सम्, तदनु गतिः सु, तस्मात् गतिसंज्ञकात् 'सु' इत्यस्मात् परं भूत्या इति अनुदात्तं पदम्। अत एवात्र पूर्वेण सम् इति गतिना पदपाठे विच्छेदः भवति ॥२९–३०॥

### शशिकला

सहिता में जिस स्थान पर उदात्त स्वर वाला गति हो, उस उदात्त स्वर वाले गति के पश्चात् पुनः गति हो तथा उससे परवर्ती पद अनुदात्त ( सर्वानुदात्त ) हो तो वहाँ पूर्ववर्ती गति से विच्छेद होता है। उदाहरण दिया गया है—'सं सुभू त्या'[2] यहाँ उदात्त गति सम् से बाद में सु गति है तथा उस गति सु बाद में सर्वानुदात्त पद भूत्या है। अतः यहाँ पूर्ववर्ती गति सम् से पदपाठ में विच्छेद हो जाता है ॥२९–३०॥

[ समस्तपदविधानम् ]

**यत्रोभे प्रकृतिस्वरे पूर्वं यच्च परं च यत् ।**

**वर्जयित्वाद्युदात्तानि सर्वमेव समस्यते[3] ॥३१–३२॥**

---

१. (ख) सूत्रद्वयं नास्ति।

२. सम्। सु-भू॑त्या (प० पा०)

३. (क) विगृह्यते इति पाठः। (ख) सूत्रद्वयं नास्ति।

**सू० अ०**—जहाँ पूर्ववर्ती तथा परवर्ती दोनों ( पद ) प्रकृतिस्वर में रहते हैं वहाँ आद्युदात्त पद को छोड़ कर दोनों पद समस्त होते हैं।

**निर्मलभाष्यम्**

**यत्र** यस्मिन्स्थले **पूर्वं यच्च** पूर्वं यत्पदः **परं च यत्** परं च पदः **उभे** पूर्वपरौ पदौ **प्रकृतिस्वरे** मूलस्वरयुक्तौ भवतः तत्र **आद्युदात्तानि** पदानि **वर्जयित्वा** त्यक्त्वा **सर्वमेव** सर्वमेव पदं **समस्यते** समस्तं भवति। यथा— 'इन्द्रापूषणा' (सं० १९.१०.१) 'द्यावापृथिवी' (सं० २.१.४,१०) ॥३१-३२॥

**शशिकला**

जिस स्थान पर पूर्ववर्ती तथा परवर्ती—दोनों पद प्रकृतिस्वर से रहते हैं वहाँ आद्युदात्त पद को छोड़कर सभी पद समस्त होते हैं। जैसे— 'इन्द्रापूषणा' 'द्यावापृथिवी' ॥३१-३२॥

## नाख्यातानि समस्यन्ते[1] ॥३३॥

**सू० अ०**—आख्यात ( परस्पर ) समस्त नहीं होते।

**निर्मलभाष्यम्**

स्पष्टम्।

**शशिकला**

सूत्र स्पष्ट है।

## न चाख्यातं नाम च[2] ॥३४॥

**सू० अ०**—आख्यात और नाम भी ( परस्पर ) समस्त नहीं होते।

**निर्मलभाष्यम्**

**आख्यातं** क्रियापदः **नाम च** नामपदश्च परस्परं **न समस्यते**। यथा -'पुनन्तु मनवः' ( सं० ६.१९.१ ) 'वारये विषम्' ( सं० ६.१२.१ ) 'रेतो भवति' ( सं० ६.११.१ ) ॥३४॥

**शशिकला**

आख्यात और नामपद भी परस्पर समस्त नहीं होते। जैसे—'पुनन्तु मानवः' 'वारये विषम्' 'रेतो भवति' ॥३४॥

---

१. (ख) सूत्रमिदं नास्ति

२. (ख) सूत्रमिदं नास्ति

[ समासविधानम् ]

**नाम नाम्नोपसर्गैस्तु सम्बन्धार्थं समस्यते[1] ॥३५॥**

**सू० अ०**—नाम ( पद ) नाम तथा उपसर्गों से सम्बन्ध के लिए समस्त होते हैं।

**निर्मलभाष्यम्**

**नाम** नामपदः **नाम्ना** नामपदेन, **उपसर्गैस्तु** उपसर्गपदैश्च **सम्बन्धार्थं** सम्बन्धद्योतनार्थं **समस्यते** समस्तं भवति। यथा—'अभिषिक्तः' ( सं० १९ ३१.१२ ) 'अभिस्कन्दम्' ( सं० ५.१४.११ ) 'अनुबुद्धम्' ( सं० ४.२४ ६ ) 'अनुमतम्' ( सं० ६ ७१ २ ) 'निकिल्विषम्' ( सं० ५.१७.११ ) 'निक्रमणम्' ( सं० १.३४.३ ) 'परिक्रोशम्' ( सं० २०.७४.७ ) 'अग्निहोत्रम्' ( सं० ११.९.९ ) 'अग्निशालम्' ( सं० ९.३ ७ ) इन्द्रगुप्ताम्' ( सं० १२.१ ११ ) 'इन्द्रवाहः' ( सं० २० ९४ ३ ) इत्यादयः ॥३५॥

**शशिकला**

नामपद नामपद के साथ तथा उपसर्ग के साथ सम्बन्ध प्रकट करने के लिए समस्त होते हैं। जैसे—'……' ॥३५॥

**न युष्मदस्मादादेशा अनुदात्तात्स्वरात्परे**

**नामोपसर्गगतिभिः समस्यन्ते कदाचन।**

**मामनु प्र ते प्रवामित्येवमादिन्युदाहरेत्[2] ॥३६-३८॥**

**सू० अ०**—युष्मद् तथा अस्मद् के आदेश से प्राप्त नाम (पद), अनुदात्त स्वर से बाद में विद्यमान 'उपसर्ग' 'गति' के साथ कभी भी समस्त नहीं होते। 'मामनु प्र ते' तथा 'प्र वाम्' इत्यादि उदाहरण हैं।

**निर्मलभाष्यम्**

**युष्मदस्मदादेशाः** युष्मदस्मदयोः प्राप्ताः आदेशा इति नाम **अनुदात्तस्वरात्** अनुदात्तस्वरयुक्तात् **परे उपसर्गगतिभिः** उपसर्गैः सह अन्यगतिसंज्ञकैः पदैश्च **कदाचन** कदापि **न समस्यन्ते** न समस्तं भवन्ति। उदाहरन्ति—'मामनु प्र ते' ( सं० ३.१८.६ ) 'होता प्र वाम्' ( सं० ७ ७३.५ )। आदीनि पदेन ज्ञायते यदन्यत्रापि न समस्यन्ते। तद्विषये निदर्शनं द्रष्टव्यम्—'तस्मिन्नह् ापि त्वम्' ( सं० १० ८.५ ) ॥ ३६-३८ ॥

---

१. (ख) सूत्रमिदं नास्ति। २. (ख) सूत्रत्रयं नास्ति।

### शशिकला

युष्मद् तथा अस्मद् के आदेश से प्राप्त नामपद, अनुदात्त स्वरयुक्त उपसर्ग तथा अन्य गतिसंज्ञक पद के साथ कभी भी समस्त नहीं होते। उदाहरण देते हैं -'मामनु प्र ते'[1] 'होता प्र वाम्'[2]। सूत्र में बहुवचन के प्रयोग से ज्ञात होता है कि इससे अन्यत्र भी होता है। इस विषय में उदाहरण द्रष्टव्य है—'तास्मिन्हापि त्वम्'[3] ॥ ३६–३८ ॥

**एतदश्चानुदात्तानीदमश्च तथैव च।**
**नामोपसर्गगतिभिः समस्यन्ते कदाचन।**
**वृहन्नेषां य एनां वनिमायन्ति पर्येनाम्पर्यस्येति**
**निदर्शनम्**[4] **॥३९–४१॥**

सू० अ० —एतत् तथा इदम् ( के आदेश से प्राप्त ) अनुदात्त नाम ( पद ) उपसर्ग तथा गति के साथ कभी-कभी समस्त हो जाते हैं। उदाहरण देते हैं—वृहन्नेषाम्, य एनां वनिमायन्ति, पर्येनाम्, पर्यस्य।

### निर्मलभाष्यम्

**एतदश्च** एतद् इत्यस्य आदेशाः चेद् **अनुदात्तानि** अनुदात्तस्वरयुक्ताः, सर्वानुदात्तस्वरयुक्ता इत्यर्थः, **तथैव च** तेनैव प्रकारेण, **इदमश्च** इदम् इत्यस्य आदेशा अपि यदि सर्वानुदात्तस्वरयुक्ताः च। एवं पदद्वयादेशेन प्राप्तः अनुदात्तः **नाम** नामपदः **कदाचनः** संहितायां स्थलविशेषे **उपसर्गगतिभिः** उपसर्गैः अन्यगतिसंज्ञकपदैश्च **समस्यन्ते** समस्तं भवन्ति। उदाहरन्ति—'वृहन्नेषाम्' ( सं० ४,१६.१ ) 'य एनां वनिमायन्ति' ( सं० १२ ४.११ ) 'पर्येनाम्' ( सं० ९.२५ ) 'पर्यस्य' ( सं० १५.१२.७ ) ॥ ३९ ४१ ॥

### शशिकला

एतत् का प्राप्त आदेश यदि सर्वानुदात्त हो, उसी प्रकार इदम् का प्राप्त आदेश यदि सर्वानुदात्त हो तो इस प्रकार इन दोनों के आदेश से

---

१. माम्। अनु। ते (प० पा०)
२. होता। प्र। वाम् (प० पा०)
३. तास्मिन्। ह। अपि। त्वम् (प० पा०)
४. (क) वनिमायेति इति पाठः। (ख) सूत्रत्रयं नास्ति।

प्राप्त सर्वानुदात्त नामपद संहिता में कहीं-कहीं उपसर्ग तथा अन्य गतिसंज्ञक पदों के साथ समस्त हो जाते हैं। उदाहरण दिया गया है—'बृहन्नेषाम्' 'य एनां वनिमायन्ति' 'पर्येनाम्' 'पर्यस्य' ॥ ३९–४१ ॥

**अनुदात्तोऽनु गतिः सर्वैः समस्तः स्वरितादिभिः ।**
**संस्राव्येण दुरमण्य[1] आचार्येति निदर्शनम्[2] ॥४२-४३॥**

सू० अ०—अनुदात्त गति परवर्ती सभी स्वरित इत्यादि ( स्वर वाले पदों) से समस्त होता है। संस्राव्येण, दुरमण्यः, आचार्यः—यह उदाहरण है।

### निर्मलभाष्यम्

**अनुदात्तः** अनुदात्तस्वरयुक्तः **गतिः** गतिसंज्ञकपदः **अनु** परवर्तिभिः, **स्वरितादिभिः** स्वरितादिस्वरयुक्तैः **सर्वैः** पदैः **समस्तः** समासयुक्तः भवति। उदाहरति—'सं_स्राव्येण' ( सं० १.१५.१ ) इत्यत्र अनुदात्तः गतिः सम् परवर्तिना अनुदात्तोदात्तस्वरितयुक्तेन स्राव्येणं पदेन समस्तः। 'दुरमण्यः' (सं० १६.२.१) इत्यत्र अनुदात्तः गतिः दुः परवर्तिना अमण्यः-पदेन समस्तः। आचार्यः ( सं० ११५.३ ) इत्यत्र अनुदात्तः गतिः आ परवर्तिना चार्यः-पदेन समस्तः ॥ ४२–४३ ॥

अनुदात्त स्वर-युक्त गतिसंज्ञक पद परवर्ती स्वरित इत्यादि स्वर वाले पदों से समस्त हो जाता है। उदाहरण देते हैं—'संस्राव्येण' यहाँ अनुदात्त गति सम् परवर्ती अनुदात्त, उदात्त तथा स्वरित स्वर वाले पद स्राव्येणं से समस्त है। 'दुरमण्यः' यहाँ अनुदात्तगति दुः परवर्ती अमण्यः से समस्त है। 'आचार्यः' यहाँ अनुदात्त गति आ परवर्ती चार्यः से समस्त है ॥४२-४३॥

[ उपसर्गसंङ्ख्याविधानम् ]

**प्रपराणि समा दुर्निरवाधि परिवीति च ।**
**अत्यभ्यपि सूदपा य उपानु प्रति विंशतिः[3] ॥४४–४५॥**

सू० अ०—प्र, परा, नि, सम्, आ, दुः, निः, अव, अधि, परि, वि, अति, अभि, अपि, सु, उत्, अप, उप, अनु, प्रति—ये बीस ( उपसर्ग हैं )।

---

१. (क) निर्दुमण्य इति पाठः। २. (ख) सूत्रद्वयं नास्ति।
३. (क) प्रपराणि समासाभिदुरवाधिपरि वीति च।
अत्यपि सूदपामीत्युपानु प्रति विंशतिः ॥ इति पाठः
(ख) सूत्रद्वयं नास्ति।

### निर्मलभाष्यम्

प्र, परा, नि, सम्, आ, दुः, निः अव, अधि, परि, वि अति, अभि, अपि, सु, उत्, अप, उप, अनु, प्रति, इत्येते विंशति उपसर्गाः सन्ति ॥४४-४५॥

### शशिकला

प्र ⋯ प्रति—ये बीस उपसर्ग हैं ॥ ४४-४५ ॥

[ उपसर्गस्वरविधानम् ]

## एकाक्षरा उदात्ताः[1] ॥ ४६ ॥

सू० अ०—एकाक्षर ( उपसर्ग ) उदात्त होते हैं ।

### निर्मलभाष्यम्

प्र, नि, आ, दुः, निः, सम्, वि, सु, उत्—इत्येते एकाक्षरा उपसर्गाः । एते **एकाक्षरा** उपसर्गा **उदात्ता** उदात्तस्वरेण युक्ताः भवन्ति । यथा—'प्र तें' ( सं० १.३ ७ ) 'प्रेन्द्रों' ( सं० १.७.४ ) 'नि यंच्छतु' (सं० १.१.३) 'निरंमय' ( सं० १.१.२ ) 'आ वह' ( सं० १.७.१ ) 'आ रभताम्' ( सं० १ ७.४ ) 'दुर्हिंतान्' ( सं० ४.३६.९ ) दुश्चरितम्' ( सं० ९.५.३ ) 'निर्ऋंतिः' ( सं० २.१०.५ ) निर्ऋंतिम्' (सं० ६.९७ २) 'संश्रुतेनं' ( सं० १ १ ४ ) 'समैंरयन्' ( सं० १.११.२ ) 'वि तंनूभे ( सं० १.१.३ ; 'वि रोंधिषि' ( सं० १ १.४ ) 'सु कंम्' ( सं० १.१७.४ ) 'सु प्रसाधय' ( सं० १.२४ ४ ) 'उत्पाताः' ( सं० १९.९ ७ ) उद्भिन्नम्' ( सं० १० ५.३६ ) इत्यादयः ॥ ४६ ॥

### शशिकला

प्र, नि. आ, दुः, निः, सम्, वि, सु तथा उत्–ये एक अक्षर वाले उपसर्ग हैं । ये एक अक्षर वाले उपसर्ग उदात्त स्वर से युक्त होते हैं । जैसे—'प्र तें' '⋯⋯ ' ॥ ४६ ॥

## आद्युदात्तास्तथापरे[2] ॥ ४७ ॥

सू० अ०—उन (एकाक्षरों) से अन्य (उपसर्ग) आद्युदात्त (होते हैं) ।

---

१ (ख) सूत्रमिदम् नास्ति ।

२. (ख) सूत्रमिदं नास्ति ।

## निर्मलभाष्यम्

परा, अव, अधि, परि, अभि, अति, अपि. अप, उप, अनु, प्रति इत्येते उपसर्गा एकाक्षरादुपसर्गादपरः द्व्यक्षराः सन्ति। अभिवर्जयित्वा अपरे एकाक्षरादुपसर्गादन्याः द्व्यक्षरा उपसर्गा आद्युदात्ताः आद्युदात्तस्वरयुक्ताः भवन्ति। यथा—'परा॑जिता' ( सं० ३.१६ ) 'परा॑भृतम्' ( सं० ५. २९.५ ) 'अव॒ त्वम्' ( सं० १११ ३ ) 'अव॑ ज॒रायु॑' ( सं० १.११.४ ) 'अधि॑ रज्जुः' ( सं० ६ ११८.२ ) 'अधि॑श्रिते' ( सं० १५.१२ २ ) 'परि॑ष्कृता' ( सं० ९ ३.१० ) 'परि॑सृष्टम्' ( सं० ८ ६ २० ) अपि॑नद्धम्' ( सं० ९ ३.१८ ) 'अपि॑शीर्णाः' ( सं० ४ ३.६ ) 'अति॒ निहो॑' ( सं० २.६.५ ) 'अति॒ द्विषः' ( सं० २ ६.५ ) 'अप॑ चिकिहि नः' ( सं० ११० ४ ) 'अप हन्मः' ( सं० १. १८ ३ ) 'उप॑हूतः' ( सं० १.१४ ) 'उप॒ सूर्य॑' ( सं० १.४ २ ) 'अनु॒ सूर्य॑म्' ( सं० १.२२ १ ) 'अनु॑ मन्य॒ताम्' सं० १ ३५ ४ ) 'प्रति॑ हर्य॑तम्' ( सं० १. ७ ३ ) 'प्रति॑ दह' ( सं० १ २८ २ ) इत्यादयः ॥ ४७ ॥

## शशिकला

परा, अव, अधि, परि, अभि. अति, अपि, अप, उप, अनु तथा प्रति–ये उपसर्ग एकाक्षर उपसर्ग से अन्य अर्थात् दो अक्षर वाले उपसर्ग हैं। अभि को छोड़कर अन्य दो अक्षर वाले उपसर्ग आद्युदात्त स्वर से युक्त होते हैं। जैसे—'परा॑जिता' '........' ॥ ४७ ॥

## अभीत्यन्तः[1] ॥ ४८ ॥

**सू० अ०**—अभि ( उपसर्ग ) अन्तोदात्त ( होता है )।

## निर्मलभाष्यम्

**अभि इति** अभि इत्ययम् उपसर्गः **अन्तः** अन्तोदात्तः भवति। यथा—'अ॒भिरूपाम्' ( सं० ८.९.९ ) 'अ॒भिहि॑तः' ( सं० ६.६३ ३ ) इत्यादयः ॥४८॥

## शशिकला

अभि—यह उपसर्ग अन्तोदात्त होता है। जैसे—'अ॒भिरूपाम्' 'अ॒भिहि॑तः' इत्यादि ॥ ४८ ॥

---

१ (ख) सूत्रमिदं नास्ति।

[ गतिसंज्ञाविधानम् ]

## उपसर्गाः क्रियायोगे गतिस्तथा[1] ॥ ४९ ॥

सू० अ०—क्रिया के योग में उपसर्ग गति कहलाते हैं अथवा ( जिस प्रकार ) क्रिया के योग में उपसर्ग होते हैं वैसे ही गति (भी होते हैं)।

### निर्मलभाष्यम्

**क्रियायोगे** क्रियया सह प्रयोगे **उपसर्गाः गतिसंज्ञकाः**। यथोक्तं पाणिनिना—'प्रादयः उपसर्गाः' 'क्रियायोगे' 'गतिश्च' पा० व्या० १.४.५७-५९) एवं क्रियया सह प्रयुक्ता उपसर्गाः गतिसंज्ञकाः भवन्ति। यथा—'समस्यति' ( सं० १२.४.९ ) 'समाकरत्' ( सं० ६ १४१.१ )। अथवा यथा क्रियायोगे उपसर्गा भवन्ति तथैव गतिश्च। क्वादयः गतिसंज्ञकाः। यथा—'कुनखिना' ( सं० ७ ६७.३ ) 'कुचरः' ( सं० ७ २७ २ ) इत्यादयः। संज्ञाप्रयोजनम्—'नामानुदात्तं प्रकृतिस्वरो गतिः' ( ४.१ १३ ॥ ४९ ॥

### शशिकला

क्रिया के साथ प्रयुक्त होने पर उपसर्ग गतिसंज्ञक होते हैं। जैसा पाणिनि ने भी कहा है—'क्रिया के योग में उपसर्ग गतिसंज्ञक होते हैं' ( पा० व्या० १ ४ ५७-५९)। इस प्रकार क्रिया के साथ प्रयुक्त उपसर्ग 'गति' कहलाते हैं। जैसे—'समस्यति' 'समाकरन्'। अथवा जिस प्रकार उपसर्ग क्रिया के योग में होते हैं उसी प्रकार गतिसंज्ञक पद भी। कु इत्यादि 'गति' हैं। जैसे—'कुनखिना' 'कुचरः' इत्यादि। संज्ञा का प्रयोजन—(यदि समास में) नामपद अनुदात्त हो तो 'गति' प्रकृतिस्वर वाला होता है' ( ४ १ १३ ) इत्यादि ॥ ४९ ॥

[ उपसर्गस्वराः ]

## आद्युदात्ता दशैतेषाम्[2] । उच्चा एकाक्षरा नव । विंशतेरुपसर्गाणामन्तोदात्तस्त्वभीत्ययम्[3] ॥ ५०—५२ ॥

---

१ (ख) सूत्रमिदं नास्ति।

२. दशैतेषा इति पाठः।

३. (ख) सूत्रत्रयं नास्ति।

**सू० अ०**—( इस प्रकार ) इनमें दस ( उपसर्ग ) आद्युदात्त होते हैं तथा एकाक्षरात्मक नौ ( उपसर्ग ) उदात्त होते हैं। ( इन ) बीस उपसर्गों में 'अभि'—यह उपसर्ग अन्तोदात्त होता है।

**निर्मलभाष्यम्**

स्पष्टम्।

**शशिकला**

यह विधान स्पष्ट है।

[ उपसर्गवृत्तिनिरूपणम् ]

**अच्छारमस्तं हस्तो लाङ्गूलं तिरः पुरः पुनर्णमः श्येनी वाती फली हिं स्रुग्वषट् प्रादुरुला ककजा स्वाहा स्वधा श्रत्स्वररला इत्युपसर्गवृत्तिनि यथाम्नातः स्वराणि[1] ॥५३॥**

**सू० अ०**—अच्छा, अरं, अस्तं, हस्तः, लाङ्गूलं, तिरः, पुरः, पुनः, नमः, श्येनी, वाती, फली, हिं, स्रुक्, वषट्, प्रादुः, उला, ककजा, स्वाहा, स्वधा, श्रत्, स्वरः, अला—ये उपसर्गवृत्ति वाले हैं। ( संहिता में ) जैसे पढ़े गये हैं, उसी प्रकार के स्वर वाले होते हैं।

**निर्मलभाष्यम्**

अच्छा, अरम्, अस्तं, हस्तः, लाङ्गूलं, तिरः, पुरः, नमः, श्येनी, वाती फली, हिं, स्रुक्, वषट् प्रादुः, उला, ककजा, स्वाहा, स्वधा, श्रत्, स्वरः, अला **इति** एतानि **उपसर्गवृत्तिनि** उपसर्गवत्प्रयोज्यमाणानि भवन्ति। **यथा**—येन प्रकारेण **आम्नातः** संहितायां ऋषिभिः पठितः तथैव **स्वराणि** स्वरयुक्तानि भवन्ति। यथा—'अच्छायन्ति' ( सं० १२ ४ १४ ) 'अच्छा वदामसि' ( सं० ६.१४२.२ ) 'अरंकृतः' ( सं० २.१२ ७ ) 'अरं गमः' ( सं० ३.१३.५ ) 'अरं गमासः' ( सं० १३.२.३३ ) 'अस्तम्' ( १० ८ १६ ) 'हस्त गृह्य' ( सं० ५ १४ ४ ) 'तिरश्चीः' ( सं० १०.२.११ ) 'तिरश्चीन्' ( सं० १९.१६.२ ) 'तिरश्च' ( सं० २०.३५ १२ ) 'पुरोगवः' ( सं० १२.१ ४० ) 'पुरोगवाः' ( सं० १८ ४ ४४ ) 'पुरोगवी' ( ४.१३.७ ) पुरोगाः' ( सं० ५.१२.११ ) 'पुरस्तात्' ( सं०१०. ८.१० ) पुनर्भुवा' ( सं० ९ ५.२८ ) 'पुनर्णवः' ( सं० ८.१.२० ) 'पुनर्वसू' (सं० १९.७.२) 'श्येनौ' (सं० ८.८३.२)

१ (ख) सूत्रमिदं नास्ति।

'वातीकारस्य' ( सं० ९.१३.२० ) 'वातीकृतस्य' ( सं० ६.१०९.३ ) 'फलीकरणाः' ( सं० ११.३.६ ) 'हिं_कारः' ( सं० ११.९५ ) 'हिं_कृण्वती' ( सं० ७.७७.८ ) 'स्रुक्कारेण' ( सं० ९६.२२ ) 'वषट्कारेण ( सं० ९.६.२२ ) प्रादुर्भवति' ( सं० ९.१.२४ ) उलंपेषु' ( सं० ७ ६८ १ ) 'कुकजाकृता' ( सं ११.१२.२५ ) 'स्वाहा_कारम्' ( सं० १५.१४.१५ ) 'स्वाहाकृतः ( सं० ७.७७.३ ) 'स्वाहाकृतम्' (सं० १५ १२.११) 'स्वधाकारम्' (सं० १५.१४.१३) 'स्वधाकारेण' ( सं० १२.४.३२, १५ १४.१४ ) 'श्रद्दधाति' (सं० ११ २ २८) 'स्वरंकृता ( १० १.२५ ) 'अलसाला' ( सं० ६.१६.४ ) ॥ ५३ ॥

## शशिकला

अच्छा ···अलः—ये पद उपसर्ग के समान प्रयुक्त होते हैं तथा जिस प्रकार के उदात्तादि स्वर के साथ संहिता में ऋषियों द्वारा पढ़े गए हैं, वैसे ही इनके स्वर होते हैं। जैसे—'अच्छा यन्ति' '·······' ॥ ५३ ॥

[ समस्तपदनिर्देशनम् ]

## उपसर्ग आख्यातेनोदात्तेन समस्यते ॥५४॥

सू० अ०—उपसर्ग ( परवर्ती ) उदात्त आख्यात से समस्त होता है।

## निर्मलभाष्यम्

**उदात्तेन** उदात्तस्वरयुक्तेन **आख्यातेन** क्रियापदेन **उपसर्गः समस्यते** समस्तः भवति संहितायाम्। पदपाठे तु अवगृह्यते, पृथक्करणं भवतीत्यर्थः। यथा—'परि-यन्ति' ( प० पा० ) 'परियन्ति' ( सं० १.१.१ ) 'सम्-अभरः' ( प० पा० ) 'समभरः' ( सं० १.९.३ ) 'सम्-स्रवन्ति' ( प० पा० ) 'सं_स्रवन्ति' ( सं० १.१५.३ ) 'अप-उदितः' ( प० पा० ) 'अपोदितः' ( सं० ६.५० २ ) 'प्र-वहन्ति ( प० पा० ) 'प्रवहन्ति' ( सं० ६.५१.२ )। उदात्तेनेति किम्? 'वि। लापय' ( प० पा० ) 'वि लापय' ( सं० १७.२ ) 'आ। तानय। पसः' ( प० पा० ) 'आ तानया पसः' ( सं० ६.१०.१२ ) 'उत्। भरे' ( प० पा० ) 'उद्भरे' (सं० ६.१०२.३) 'आ। वृश्चन्ताम्' (प० पा०) 'आ वृश्चन्ताम्' ( सं० ८.३.१६ ) 'आ। सादयति' ( प० पा० ) 'आ सादयति' ( सं० ९.६.२१ ) इत्यादिषु न समस्यते ॥ ५४ ॥

### शशिकला

संहिता में उपसर्ग उदात्तस्वरयुक्त परवर्ती क्रियापद से समस्त होता है। पूर्ववर्ती उपसर्ग तथा परवर्ती उदात्त क्रियापद एक समस्तपद होते हैं—यह अर्थ हैं। पदपाठ में उनका अवग्रह ( पृथक्करण ) होता है। जैसे—'परि-यन्ति' ( प० पा० ) 'परियन्ति' ( सं० पा० ) 'सम्-अभरः' (प०पा०) 'समभरः' ( सं० पा० ) सम्स्रवन्ति ( प० पा० ) 'संस्रवन्ति' ( सं० पा० ) 'अप-उदितः' (प० पा०) 'अपोदितः' ( सं० पा० ) 'प्र-वहन्ति' ( प० पा० ) 'प्रवहन्ति' ( सं० पा० )। सूत्र में उदात्त से युक्त—यह क्यों कहा गया ? 'वि। लापय ( प० पा० ) 'वि लापय' ( सं० पा० ) आ। तानय। पसः प० पा० ) 'आ तानया पसः' ( सं० पा० ) 'उत्। भरे ( प० पा० ) उद्भरे ( सं० पा० ) 'आ। वृश्चन्ताम्' ( प० पा० ) 'आ वृश्चन्ताम्' ( सं० पा० ) आ। सादयति ( प० पा० ) 'आ सादयति' ( सं० पा० ) इत्यादि में समस्त न होवे ॥ ५४ ॥

## अनेकोऽनुदात्तेनापि ॥५५॥

सू० अ०—अनेक ( उपसर्ग ) अनुदात्त ( आख्यात ) से भी ( समस्त होते हैं )।

### निर्मलभाष्यम्

अनेकः अपि एकाधिकोऽपि उपसर्गः अनुदात्तेन आख्यातेन संहितायां समस्यते। पदपाठे पूर्वेणोपसर्गेण परयोः उपसर्गाख्यातयोः पृथक्करणं भवति। यथा-'उत्-अवस्यति' (प० पा०) 'उदवस्यति' (सं० ९ ६ ५४) 'अनु सम्प्रयाहि' (प० पा०) अनुसम्प्रयाहि' (सं० ११.१.३६) 'सम्-आचिनुष्व' (प० पा०) 'समाचिनुष्व' ( सं० ११.३.३६ ) 'उप-सम्पराणयात् (प०पा०) उपसम्परायणात्' ( सं० १८.४.५० )। अनेको इति किम् ? 'वि। स्परत्' ( प० पा० ) 'वि स्परत्' ( सं० ६.५६.१ ) 'नि। हन्यताम्' ( प० पा० ) नि हन्यताम् ( सं० ६.७०.२ ) 'आ। प्यायताम्' ( प० पा० ) 'आ प्यायताम्' ( सं० ६.७८.१ ) वि। नश्य' ( प० पा० ) 'वि नश्य' ( सं० ६.११३.२ ) 'सम्। ऋध्यताम्' ( प० पा० ) 'समृध्यताम्' ( सं० ८.२.१३ ) इत्यादिषु माभूत्। अनुदात्तेनेति किम् ? 'अभि। वि-पश्यामि' ( प० पा० ) 'अभि विपश्यामि' ( सं० १२.१.३३ ) 'अभि। वि-जङ्गहे' ( प० पा० ) 'अभि विजङ्गहे' ( सं० ५.१९.४ ) इत्यादिषु न समस्यते। अत एव पदपाठे विगृह्यते, न अवगृह्यते ॥ ५५ ॥

**शशिकला**

संहिता में एक से अधिक ( अनेक ) उपसर्ग अनुदात्त क्रियापद से समस्त होते हैं। पदपाठ में पूर्ववर्ती उपसर्ग से परवर्ती उपसर्ग तथा क्रियापद को पृथक् किया जाता हैं। जैसे—'उत्-अवस्यति' ( प० पा० ) 'उदवंस्यति' ( सं० पा० )। अनेक—यह क्यों कहा गया ? '... ....... ...' इत्यादि में न होवे। अनुदात्त से युक्त—यह क्यों कहा गया ? 'अभि। वि-पश्यामि... ...इत्यादि में समस्त न होवे। अत एव पदपाठ में विग्रह ( विच्छेद ) होता है, अवग्रह ( पृथक्करण ) नहीं ॥ ५५ ॥

[ विग्रहविधानम् ]

## अनर्थक[1]कर्मप्रवचनीयान्ययुक्तैर्विग्रहोऽभिवितन्वादिषु ॥५६॥

**सू० अ०**—'अभि वि तनु' इत्यादि में अनर्थक, कर्मप्रवचनीय तथा अन्य ( पद ) से युक्त ( सम्बन्धित ) होने पर ( उपसर्ग से आख्यात का ) विच्छेद होता है।

**विग्रहः** विच्छेदः। संहितायां पदाः सन्धिविधानेन परस्परं संहितं भवन्ति परञ्च पदपाठे तेषां विच्छेदः भवति। यस्मात्पदाः पूर्वपरप्रभावरहिताः स्वतन्त्ररूपेण प्राप्यन्ते। पूर्वसूत्रद्वये आख्यातेनोपसर्गस्य समासत्वमुक्तम्। अत्र तयोः विच्छेदस्य विधान कृतम्। **अभिवितन्वादिषु** अभिवि तनु इत्यादिषु **अनर्थककर्मप्रवचनीयान्ययुक्तैः** अनर्थकः पादपूरणार्थकः, कर्मप्रवचनीयः 'अनुर्लक्षणे' 'तृतीयार्थे' 'हीने' ( पा० व्या० १.४.८४-८६ ) 'उपोधिके च' ( पा० व्या० १.४ ८७ ) इत्यादिना कर्मप्रवचनीयसंज्ञायां पठितः प्रादयः उपसर्गाः, अन्यः क्रियाव्यतिरिक्तपदयुक्तः य उपसर्गः, तैः आख्यातस्य विग्रहो भवति। यथा—'अभि। वि। तनु ( प० पा० ) 'अभि वि तनु' ( सं० १.१.३ )। सूत्रे आदिषु इति बहुवचनेन ज्ञायते यदतोऽन्यतोऽपि विग्रहो भवति। तद्विषये निदर्शनानि द्रष्टव्यानि—'सु। प्र। साधय' ( प० पा० ) 'सु प्र साधय' ( सं० १.२४.४ ) 'उप। प्र। अगात्' ( प० पा० ) 'उप प्र अगात् ( सं० १.२८.१ ) 'अधि। सम्। बभूविथ' ( प० पा० ) 'अधि सं बभूविथ' ( सं० ९.५.६ ) 'अधि। वि। श्रय ( प० पा० ) 'अधि वि श्रय' ( सं० ९.५.४ ) 'अधि। वि। श्रयस्व ( प० पा० ) 'अधि वि श्रयस्व'

---

१. (ख) अनर्थ इति पाठः।

( सं० ९.५.८ ) 'अधि। वि। चक्रमे ( प० पा० ) 'अधि वि चक्रमे' (सं० १० ८ ४१) 'अधि। आ। सृजामि ( प० पा० ) 'अध्या सृजामि' ( सं० १४ २.४८ ) 'अनु। सम्। रभध्वम्' ( प० पा० ) 'अनु संरभध्वम् ( सं० ६.९७.३) 'अनु। सम्। तरेम ( प०पा० ) 'अनु सं तरेम (सं० ६ १२२.१) अनु। सम्। 'चरेते' (प० पा०) अनु सं चरेते (सं० ८.९.१२) 'अनु। वि। क्रमे ( प० पा० ) 'अनु विक्रमे' (सं० १०.५.२५-३ ) 'अनु। परा। इहि' ( प० पा० ) 'अनु परेहि' (सं० १२.२.२१) 'अनु। सम्। चरत्' ( प० पा० ) 'अनु सं चरत्' ( सं० १३.२.४० ) 'अनु। वि। अचलत् ( प० पा० ) 'अनु व्यचलत् (सं० १५ ६ १)[1] 'अनु। वि। अचलन्' (प० पा०) 'अनु व्यचलन्' (सं० १५.६ २)[2] 'अभि। प्र। तस्थौ' (प० पा०) 'अभि प्र तस्थौ (सं० ४.१ ३) 'अभि। सम्। धमामि (प० पा०) अभि सं धमामि (सं० ८.२.४ ) 'अभि। नि। सीदेम' ( प० पा० ) 'अभि नि षीदेम' ( सं० १२.१.२९ ) 'अभि। सम्। रजस्व' ( प० पा० ) 'अभि सं रजस्व' ( सं० १२ ३.१२ ) 'अभि। सम्। स्पृशन्ताम्' ( प० पा० ) 'अभि सं स्पृशन्ताम्' ( सं० १२ ३.३० ) 'अभि। सम्। पुनाति' ( प० पा० ) 'अभि सं पुनाति' ( सं० १८ ३.४० ) 'परि। उत्। पातयासि ( प० पा० ) 'पर्युत्पातयासि' ( सं० १२.३.५३ ) इत्यादयः ॥५६॥

विग्रह = विच्छेद। संहिता में पद सन्धि के नियमानुसार संहित ( मिले हुए ) होते हैं किन्तु पदपाठ में उनको अलग-अलग कर दिया जाता है जिसे विग्रह (विच्छेद) कहा जाता है, जिससे पद पूर्वपर प्रभाव से रहित होकर स्वतन्त्ररूप से हो जाते हैं। पूर्ववर्ती दो सूत्रों में आख्यात के साथ उपसर्ग के समासयुक्त होने का विधान किया गया है। इस सूत्र में उनके ( उपसर्ग तथा आख्यात के ) विच्छेद ( अलग-अलग ) करने का विधान हुआ है। अनर्थक का अर्थ है—पादपूर्ति इत्यादि वाला। कर्मप्रवचनीय का अर्थ है —कर्मप्रवचनीय संज्ञा वाला। जैसे—लक्षण के अर्थ में, तृतीया के अर्थ में तथा हीन अर्थ में प्रयुक्त अनु उपसर्ग और अधिक अर्थ में प्रयुक्त उप उपसर्ग कर्मप्रवचनीय कहलाता है। (पा० व्या० १.४.८४-८७ )। अन्य पद

---

१. सं० १५.४.६, ७,१०,१३,१६,२२,२४।
२. सं० १५.६.५,८,११,१४,१७,२०,२५।

का अर्थ है—क्रिया से अन्य अर्थात् नाम पद से युक्त। 'अभि वि तनु' इत्यादि में अनर्थक, कर्मप्रवचनीय तथा अन्यपद से युक्त का क्रियापद से विच्छेद होता है। जैसे—'अभि। वि। तनु (प० पा०) 'अभि वि तनु' (सं० पा०)। सूत्र में आदिषु इस बहुवचन के प्रयोग से ज्ञात होता है कि इससे अन्यत्र भी होता है। इस विषय में ये उदाहरण द्रष्टव्य हैं—'सु। प्र। साधय' (प० पा०) 'सु प्र साधय' (सं० पा०)………॥५६॥

## पूर्वेणाभिविपश्याम्यादिषु ॥ ५७ ॥

**सू० अ०**—'अभि विपश्यामि' इत्यादि में पूर्ववर्ती (उपसर्ग) से (विच्छेद होता है)।

### निर्मलभाष्यम्

**अभि विपश्यामि आदिषु पूर्वेण** उपसर्गेण पदपाठे विगृह्यते। यथा- 'अभि। वि-पश्यामि' (प० पा०) 'अभि वि पश्यामि' (सं० १२.१.३३)। सूत्रे आदिषु इति बहुवचनेन ज्ञायते यदतोऽन्यत्रापि विग्रहः भवति। तद्विषये निदर्शनानि द्रष्टव्यानि 'अभि। सम्-विदुः' (प० पा०) 'अभि संविदुः' (सं० ३.२१.५) 'अभि। वि-जङ्गहे' (प० पा०) 'अभि विजङ्गहे' (सं० ५. १९.४) 'अभि। वि-पश्यति' (प० पा०) 'अभि वि पश्यति (सं० ६.३४.४)। उल्लेखनीयमत्र यद् 'अनेकोऽनुदात्तेनापि' (४ १.५५) इत्यनेन अनुदात्तेन क्रियापदेन अनेकोपसर्गस्य समासत्वमुक्तम्। अत्र तु अभि वि पश्याम्यादिषु क्रियापदमुदात्तम्। एवं ज्ञायते यदुदात्तेन क्रियापदेन अनेकः उपसर्गः न समस्यते। पूर्वेण विग्रह एव भवति ॥ ५७ ॥

### शशिकला

'अभि विपश्यामि' इत्यादि में पूर्ववर्ती उपसर्ग से पदपाठ में विच्छेद होता है। जैसे—'अभि। वि-पश्यामि (प० पा०) 'अभि वि पश्यामि' (सं० पा०)। 'आदिषु' इस बहुवचन से ज्ञात होता है कि इससे अन्यत्र भी होता है। इस विषय में ये उदाहरण द्रष्टव्य हैं—'अभि। सम्-विदुः' (प० पा०) 'अभि संविदुः' (सं० पा०) 'अभि। वि-जङ्गहे' (प० पा०) 'अभि वि जङ्गहे' (सं० पा०) 'अभि। वि-पश्यति' (प० पा०) अभि विपश्यति (सं० पा०)। उल्लेखनीय है कि 'अनेक उपसर्ग अनुदात्त क्रियापद से समस्त होते हैं' (४ १.५५) से अनुदात्त आख्यात के साथ अनेक उपसर्गों का समस्त होना

कहा गया है किन्तु यहाँ 'अभि वि पश्यामि' में क्रियापद उदात्त है। इससे ज्ञात होता है कि उदात्त क्रियापद के साथ अनेक उपसर्ग समस्त नहीं होते जिससे परवर्ती उपसर्ग पदपाठ में स्वतन्त्र पद के समान विगृह्य होता है॥ ५७॥

## योनावध्यैरयन्तादिषु च ॥ ५८ ॥

सू० अ०—योनावध्यैरयन्त इत्यादि में भी (उपसर्ग से विच्छेद होता है)।

### निर्मलभाष्यम्

चशब्दोऽत्र विगहः इत्यन्वादिशति। **योनावध्यैरयन्त आदिषु** स्थलेषु पूर्वेणोपसर्गेण विग्रहः भवति। यथा— योनौ'। अधि। आ-ईरयन्त' (प० पा०) 'योनावध्यैरयन्त' (सं० २.१.५)। आदिषु इति बहुवचनेन ज्ञायते यदन्यत्रापि भवति। तद्विषये निदर्शनानि द्रष्टव्यानि— अधि। तस्थुः (प० पा०) 'अधि तस्थुः' (सं० ९ ९.२) परि। जज्ञिरे' (प० पा०) 'परि जज्ञिरे' (सं० १०.७ २१) 'अधि। जज्ञिषे (प० पा०) 'अधि जज्ञिषे' (सं० ४. १०.२) ॥५८॥

### शशिकला

सूत्र में प्रयुक्त च शब्द 'विग्रह (विच्छेद) होता है' का अन्वादेश करता है। 'योनावध्यैरन्त' इत्यादि स्थलों में पूर्ववर्ती उपसर्ग से विच्छेद होता है। जैसे--'योनौ। अधि। आ-ईयरन्त' (प० पा०) 'योनावध्यैरयन्त' (सं०पा०)। 'आदि में' इस बहुवचन से ज्ञात होता है कि इससे अन्यत्र भी होता है। इस विषय में ये उदाहरण द्रष्टव्य हैं—'अधि। तस्थुः' (प० पा०) 'अधि तस्थुः' (सं० पा०) परि। जज्ञिरे' (प० पा०) 'परि जज्ञिरे' (सं० पा०) 'परि। जज्ञिषे' (प० पा०) 'परि जज्ञिषे (सं० पा०) ॥५८॥

## आशीर्बभूवेति प्लुतस्वरस्य सिद्धत्वात् ॥५९॥

सू० अ०—प्लुत स्वर के सिद्ध होने से आशीः३ तथा बभूवा३ (पद पूर्ववर्ती उपसर्ग से विगृहीत होता है)।

### निर्मलभाष्यम्

**प्लुतस्वरस्य** त्रिमात्रिकस्य **सिद्धत्वात्** युक्तत्वात् **'आशीः३' 'बभूवाँ३'** इति द्वे पदे पदपाठे पूर्वेणोपसर्गेण विगृह्येते। यथा—'मोदनम्। प्र। आशी३ः' (प० पा०) 'मोदनं प्राशी३ः' (सं० ११.३.२६-२७) 'पुरुषः। आ। बभूवाँ३' (प० पा०) 'पुरुष आ बभूवाँ३' (सं० १० २.२८) ॥६॥

### शशिकला

प्लुत अर्थात् त्रिमात्राकालिक स्वर से युक्त होने से आशीः३ तथा बभूवाँ३ ये दोनों पद पदपाठ में पूर्ववर्ती उपसर्ग से विगृह्य होते हैं। यथा— 'मोदनम्। प्र। आशी३ः' (प० पा०) 'मोदनं प्राशी३ः' (सं० पा०) पुरुषः। आ। बभूवा३ (प० पा०) पुरुष आ बभूवाँ३' (सं० पा०) ॥६॥

[ अवग्रहविधानम् ]

## पूर्वेणावग्रहः ॥६०॥

सू० अ०—पूर्ववर्ती (पद) से (परवर्ती का) पृथक्करण (होता है)।

### निर्मलभाष्यम्

**अवग्रहः** पृथक्करणम्। यथोक्तमुवटेन—'अवग्रहो नानाग्रहः' (ऋ० प्रा० १.२८ उ०) 'द्वयोः पदयोः पृथग्ग्रहणमवग्रहः। नानाग्रह इत्यर्थः' (वा० प्रा० ५.१ उ०)। कात्यायनविहितेन 'समासेऽवग्रहो ह्रस्वसमकालः' (वा० प्रा० ५ १) इत्यनेन विधानेन ज्ञायते यत् समासे यदवग्रहः पृथक्करणम्, तद् ह्रस्वसमकालःमात्राकाल भवति। अत्र सूत्रकारेणापि अवग्रहशब्दः समस्तपदस्य पृथक्करणार्थं प्रयुक्तः। समस्ते पदे **पूर्वेण** पूर्वपदेन परस्य पदस्य पदपाठे **अवग्रहः** पृथक्करणं भवति। अवग्रहेण समस्तपदस्य समस्तरूपं न तु बाधितं भवति, न तु विच्छिन्नम्। न तु तस्य पूर्वोत्तरपदयोः सत्तापि स्वतन्त्ररूपेण भवति। केवलं समस्तरूपस्य पृथक्करणमेव भवति। अधिकारोऽयम्। अतः प्रभृतिः अध्यायस्य द्वितीयपादपर्यन्तम् एतद्विधानमधिकृतं वेदितव्यम् ॥६०॥

### शशिकला

अवग्रह का अर्थ है—पृथक्करण। जैसा कि उवट ने कहा है—'अवग्रह=नानाग्रह अर्थात् अलग-अलग ग्रहण करना' (ऋ० प्रा० १.२८ उ०)। 'दो पदों का पृथक् ग्रहण अवग्रह कहलाता है, अलग-अलग ग्रहण करना यह अर्थ है' (वा० प्रा० ५.१ उ०)। कात्यायन के द्वारा विहित 'समस्त पद में ह्रस्व स्वर के समान काल वाला अवग्रह होता है' (वा० प्रा० ५.१) इस विधान से ज्ञात होता कि समस्त पद में जो पृथक्करण होता है, वह एक मात्रा काल वाला होता है। यहाँ सूत्रकार ने अवग्रह संज्ञा का प्रयोग समस्त पद के पृथक्करण के लिए किया है। पदपाठ में समस्त पद के

पूर्ववर्ती पद से परवर्ती पद का पृथक्करण होता है। अवग्रह से उनका समस्तरूप न तो बाधित होता है और न विच्छिन्न होता है। उसके पदों की सत्ता भी स्वतन्त्र नहीं होती। केवल समस्तरूप का पृथक्करण होता है। यह अधिकार सूत्र है। यहाँ से लेकर इस अध्याय के द्वितीय पाद की समाप्ति तक इसका अधिकार जानना चाहिए ॥६०॥

## यातुमावत् ॥६१॥

**सू० अ०**—'यातुमावत्' ( में पूर्ववर्ती से परवर्ती का पृथक्करण होता है )।

### निर्मलभाष्यम्

**'यातुमावत्'** इत्यत्र पूर्वेण परस्य अवग्रहः भवति। यथा—'यातु-मावत् ( प० पा० ) यातुमावत्' ( सं० ८.४.२३ ) ॥६१॥

### शशिकला

'यातुमावत्' इसमें पूर्ववर्ती से परवर्ती पृथक् होता है। जैसे—'यातु-मावत् ( प० पा० ) यातुमावत्' ( सं० पा० ) ॥६१॥

## समासे च ॥६२॥

**सू० अ०**—समास में भी ( पूर्वपद से पृथक्करण होता है )।

### निर्मलभाष्यम्

च शब्दो अवग्रहः इत्यन्वादिशति। **समासे** समस्तपदे **च** पूर्वेण परस्य पृथक्करणं भवति। यथा—'भूरि-धायसम् ( प० पा० ) भूरिधायसम्' ( सं० १.२.१ ) 'भूरि-वर्पसम् ( प० पा० ) भूरिवर्पसम्' ( सं० १ २ १ ) ॥६२॥

### शशिकला

च शब्द यहाँ अवग्रह' का अन्वादेश करता है। समास में पूर्ववर्ती से परवर्ती का पृथक्करण होता है। जैसे—भूरि-धायसम् ( प० पा० ) भूरिधायसम्' ( सं० पा० ) 'भूरि-वर्पसम् ( प० पा० ) भूरिवर्पसम् ( सं० पा० ) ॥६२॥

## उपजाते परेण ॥६३॥

**सू० अ०**—बहुत पदों वाले ( समास ) में परवर्ती ( पद ) से ( पूर्व पदों का पृथक्करण होता है ) ।

### निर्मलभाष्यम्

**उपजाते** बहुप्रकृतिपदे समासे परेण पदेन पूर्वपदयोः पदानां वा पृथक्करणं भवति। यथा —'प्रजा-पतिः ( प० पा० ) प्रजापतिः' ( सं० २. ३४.३४ ) अत्र प्रजापतिः इत्यस्मिन् पदे 'प्र-जा-पतिः' इति पदत्रयस्य समासः। अत एव परेण पदेन 'पति' इत्यनेन प्रजा अवगृह्यते। 'प्रजा-पति—सृष्टः' ( प० पा० ) 'प्रजापतिसृष्टः' ( सं० १०.६ १९ ) अत्र 'प्रजा-पतिसृष्टः' इत्यस्मिन्पदे 'प्र-जा-पति-सृष्टः' इति पदचतुष्टयस्य समास। अतः एव 'सृष्टः' इत्यनेन परेण पदेन 'प्र-जा-पति' इत्येतेषाम् अवग्रहः भवति ॥६३॥

### शशिकला

उपजाति = बहुत पदों वाले समस्त पद में परवर्ती पद से पूर्ववर्ती दो या दो से अधिक पदों का पृथक्करण होता है। जैसे —'प्रजा-पतिः ( प० पा० ) प्रजापतिः' ( सं० पा० ) इस उदाहरण में 'प्रजा' पद भी अवगृह्य है[1]। प्रजा इस अवगृह्य पद के साथ पुनः पति का समास होने से प्रजा-पति भी अवगृह्य पद है। इस प्रकार यह तीन पदों 'प्र-जा-पतिः' वाला समास है। पदपाठ में केवल एक ही अवग्रह होता है। इसलिए इस समस्त पद का परवर्ती पद 'पतिः' से पृथक्ककरण होता है। प्रजापति-सृष्टः ( प० पा० ) प्रजापतिसृष्ट.' ( सं० पा० ) यहाँ 'प्रजापतिसृष्टः' यह 'प्र-जा पति-सृष्टः' इन चार पदों वाला समस्त पद है। इसको भी परवर्ती पद सृष्टः से पृथक् किया जाता है ॥६३॥

## सुप्राव्या च ॥ ६४ ॥

**सू० अ०**—'सुप्राव्या' में भी (परवर्ती पद से पूर्ववर्ती दोनों पदों का पृथक्करण होता है )।

---

१. प्र-जा ( प० पा० ) प्रजा ( सं० ७.३५.१ )। यहाँ 'प्रजा' अवगृह्य पद है। पदपाठ में इसका पृथक्करण होता है।

### निर्मलभाष्यम्

चशब्द पूर्वात् 'परेण' इत्यस्यान्वादेशक । **सुप्रा या** इत्यत्र परेण अव्या' इत्यनेन पदेन 'सुप्र' इत्यनयोः पदयो पृथक्करणं भवति । यथा–'सुप्र-अव्या'। यजमानाय ( प० पा० ) सुप्राव्या यजमानाय' ( सं० ४ ३०.६ ) ॥ ६४ ॥

### शशिकला

सूत्र में प्रयुक्त च शब्द पूर्ववर्ती सूत्र से 'परवर्ती से' का अन्वादेश करता है। 'सुप्राव्या' में भी परवर्ती से 'सु प्र' इन दोनों पदों का पृथक्करण होता है। जैसे —"सुप्र-अव्या । यजमानाय (प० पा०) सुप्राव्या यजमानाय' (सं० पा०) ॥ ६४ ॥

## अनिङ्ग्येन पूर्वेण ॥६५॥

**सू० अ०**—(बहुत पदों वाले समास में) पूर्ववर्ती अविभाज्य (पद) से ( पृथक्करण होता है ) ।

### निर्मलभाष्यम्

बहुपदे समासे **अनिङ्ग्येन** अविभाज्येन पूर्वेणावगृह्यते । यथा–"सु-क्षत्रिया । सु-गातुया ( प० पा० ) सुक्षत्रिया सुगातुया' ( सं० ४.३३.२ ) सु–प्रजाः ( प० पा० ) सुप्रजा' ( सं० ४ ११.३ ) 'सह-सूक्तवाकः ( प० पा०) सहसूक्तवाकः' ( सं० ७.९७.६ ) 'स-अन्तर्देशाः प० पा० ) सान्तर्देशाः' ( सं० ९.५.३७ ) । 'ऋत-प्रजाता ( प० पा० ) ऋतप्रजाता' (सं० १ ११.१) 'ऋत-प्रजाताम् ( प० पा० ) ऋतप्रजाताम्' ( सं० २०.९१.१ ) 'मधु-संदृशः ( प० पा० ) मधुसंदृशः (सं० १ ३४ ३ ) 'मधु संकाश इति मधु-संकाशे (प० पा० ) मधुसंकाशे' ( सं० ३.३७.१ ) 'वि आवर्तने ( प० पा० ) व्यावर्तने' ( सं० ६.२६.२) 'प्रति-अभिचरणः (प० पा०) प्रत्यभिचरणः' (सं० २.११ २) 'मुष्क-आबर्हः ( प० पा० ) मुष्काबर्हः' (सं० ३.९.२ ) 'ब्रह्म-संशितम् (प० पा०) ब्रह्मसंशितम्' ( सं० १९.९.१ ) 'ब्रह्म-संशिता (प० पा०) ब्रह्मसंशिता' ( सं० ११.१२.१० ) 'ब्रह्म-संशिते ( प० पा० ) ब्रह्मसंशिते ( सं० ३.१९.८ ) सु-संनता ( प० पा० ) सुसंनता' ( सं० ३.२५.२ ) 'सु संनताम् ( प० पा०) सुसंनताम्' (सं० ३.२५.३) 'सु-संशासः ( प० पा० ) सुसंशासः' ( सं० १८. ३.१६ ) 'सु-संशितः (प० पा०) सुसंशितः' (सं० ६.१०५.२) 'स्वप्न-अभि-करणेन ( प० पा० ) स्वप्नाभिकरणेन' (सं० ४.५.७) 'आ-उत्सूर्यम् ( प०

पा० ) ओत्सूर्यम्' ( सं० ४ ५.७ ) 'आ-व्युषम् ( प० पा० ) आव्युषम् ( सं० ४ ५.७ ) 'आयुः-प्रतरणः (प० पा०) आयुष्प्रतरणः' (सं० ४.१०.४) 'शिव-अभिमर्शनः (प० पा०) शिवाभिमर्शनः' ( सं० ४ १३.६ ) 'अक्ष-पराजयम् (प० पा० ) अक्षपराजयम्' ( सं० ४ १७.७ ) 'अश्व-अभिधान्या (प० पा०) अश्वाभिधान्या' ( सं० ४.३६.१० ) ॥६५॥

## शशिकला

बहुत पद वाले समास में पूर्ववर्ती अविभाज्य पद से पृथक्करण होता है। जैसे—'सु-क्षत्रिया'। सु-गातुया ( प० पा० ) 'सुक्षत्रिया सुगातुया' ( सं० पा० ) · ···' ॥६५॥

# तद्धिते धा ॥ ६६॥

**सू० अ०**—'धा' तद्धित बाद में होने पर ( पूर्ववर्ती से पृथक्करण होता है )।

## निर्मलभाष्यम्

**धा तद्धिते** परे पूर्वेणावगृह्यते। यथा—'द्वादश-धा। निहितम्' ( प० पा० ) 'द्वादशधा निहितम्' ( सं० ६.११५ ३ ) 'चतुः-धा। रेतः' (प० पा०) 'चतुर्धा रेतः' ( सं० १०.१०.२९) 'अष्ट-धा। युक्तः' ( प० पा० ) 'अष्टधा युक्तः' (सं० ११ ३.१९) 'नव-धा। हिताः' ( प० पा० ) नवधा हिताः' ( सं० १३.४.१० )। तद्धिते इति किम् ? 'स्वधा। अभि' ( प० पा० ) 'स्वधा अभि' ( सं० ४.१.३ ) 'श्रद्धा। तम्' ( प० पा० ) 'श्रद्धा तम्' (सं० ५ ७ ५) 'गोधा। भवतु' ( प० पा० ) 'गोधा भवतु' (सं० ४ ३.६ ) इत्यादिष्वतद्धिते धाधातो निष्पन्नत्वाद् नावगृह्यते ॥६६॥

## शशिकला

'धा' तद्धित बाद होने पर पूर्ववर्ती से पृथक्करण होता है। जैसे-'द्वादश-धा। निहितम्' ( प० पा० ) 'द्वादशधा निहितम्' ( सं० पा० ) 'चतुः-धा। रेतः' (प० पा०) 'चतुर्धा रेत ' ( सं० पा० ) 'अष्ट-धा। युक्तः' ( प० पा० ) 'अष्टधा युक्तः' ( सं० पा० ) नव-धा। हिताः' ( प० पा० ) 'नवधा हिताः' (सं० पा०)। तद्धित होने पर यह क्यों कहा गया ? 'स्वधा। अभि' ( प० पा० ) 'स्वधा अभि' ( सं० पा० ) 'श्रद्धा। तम्' ( प० पा० )

'श्रद्धा तम्' ( सं० पा० ) 'गोधा । भवतु' ( प० पा० ) 'गोधा भवतु' ( सं० पा० ) यहाँ तद्धित न होने के कारण धा धातु से निष्पन्न होने पृथक्करण नहीं होता ॥६६॥

## त्राकारान्ते ॥६७॥

**सू० अ०**—आकार है अन्त में जिसके ऐसा (तद्धित) 'त्रा' बाद में होने पर ( पूर्वपद से पृथक् किया जाता है ) ।

### निर्मलभाष्यम्

**त्राकारान्ते** आकारः अन्ते यस्य स आकारान्तः तस्मिन् आकारान्ते 'त्रा' इति परे पूर्वेण पृथक्करणं भवति । चेत् त्रा तद्धितः स्यात् । यथा—'देव-त्रा । च । कृणुहि' ( प० पा० ) 'देवत्रा च कृणुहि' ( सं० ५.१२.२ ) 'पुरु-त्रा । ते । वन्वताम्' (प० पा०) 'पुरुत्रा ते वन्वताम्' (सं० ६ १२६.१) । आकारान्ते इति किम् ? 'यत्र । देवाः । अमृतम्' ( प० पा० ) 'यत्र देवा अमृतम्' (सं० २१.५) 'तत्र । अमृतस्य । चक्षणम्' (प० पा०) तत्रामृतस्य चक्षणम्' ( सं० ५ ४.३ ) इत्यादिषु माभूत् ॥६७॥

### शशिकला

आकार है अन्त में जिसके ऐसा 'त्रा' बाद में होने पर पूर्ववर्ती से पृथक् किया जाता हैं, यदि त्रा तद्धित हो । जैसे—'देव-त्रा । च । कृणुहि' ( प० पा० ) 'देवत्रा च कृणुहि' ( सं० पा० ) पुरु-त्रा । ते । वन्वताम्' ( प० पा० ) 'पुरुत्रा ते वन्वताम्' (सं० पा०) । 'आकार है अन्त में जिसके' यह क्यों कहा गया ? यत्र । देवाः । अमृतम्' (प० पा०) 'यत्र देवा अमृतम्' ( सं० पा० ) 'तत्र । अमृतस्य । चक्षणक्षम्' ( प० पा० ) 'तस्य अमृतस्य चक्षणम्' ( सं० पा० ) इत्यादि में आकार अन्त में न होने से पृथक्करण नहीं होता ॥६७॥

## थानेकाक्षरेण[1] ॥६८॥

**सू० अ०**—'था' (पूर्ववर्ती) अनेक अक्षरों से (पृथक् किया जाता है) ।

### निर्मलभाष्यम्

**थानेकाक्षरेण** 'था' इत्ययं पूर्वेण **अनेकाक्षरेण** एकाधिकेनाक्षरेणावगृह्यते । यथा—'ऋतु-था । वि । चक्षते ( प० पा० ) 'ऋतुथा वि चक्षते

१. (क) थ्यानेकाक्षरेण इति पाठः ।

( सं० ९.१०.२६ ) 'नाम-था । सः । मन्येत ( प० पा० ) नामथा स मन्येत' (सं० ११.८७) । अनेकाक्षरेणेति किम् ? 'तथा । तत् । अग्ने इति (प० पा०) तथा तदग्ने' (सं० ५.२९.२) 'यथा । यमस्य । त्वा (प० पा०) यथा यमस्य त्वा' (सं० ६.२९.३) 'अध । यथा । नः । पितरः (प० पा० ) अधा यथा न पितरः' ( सं० १८.३.२१ ) इत्यत्र एकाक्षरेण नावगृह्यते ।।६८।।

### शशिकला

'था' यह अनेक अक्षरों से अर्थात् एक से अधिक अक्षरों से पृथक् किया जाता है। जैसे –'ऋतु-था । वि । चक्षते ( प० पा० ) ऋतुथा वि चक्षते' ( सं० पा० ) 'नाम-था । सः । मन्येत ( प०पा० ) नामथा स मन्येत' ( सं० पा०)। सूत्र में 'अनेक अक्षरों से' यह क्यों कहा गया ? 'तथा । तत् । अग्ने इति ( प० पा० ) तथा तदग्ने' ( सं० पा० ) 'यथा । यमस्य । त्वा ( प० पा० ) यथा यमस्य त्वा' ( सं० पा० ) 'अध । यथा । नः । पितरः ( प० पा० ) अधा यथा नः पितरः' ( सं० पा० ) यहाँ एक अक्षर से पृथक्करण नहीं होता ।।६९।।

## तरतमयोः ।।६९।।

सू० अ० तर तथा तम ( प्रत्यय ) बाद में होने पर ( पूर्ववर्ती से पृथक्करण होता है ) ।

### निर्मलभाष्यम्

**तरतमयोः** तद्धिते 'तर' 'तम' इत्येतयोः प्रत्ययोः परयोः पूर्वेण पृथक्करणं भवति। यथा –'मधोः । अस्मि । मधुतरः (प० पा०) मधोरस्मि मधुतरः' (सं० १.३४.४) 'मदुघात् । मधुमत्–तरः ( प० पा० ) मधुघान्मधुमत्तरः' ( सं० १.३४.४ ) 'नृणाम् । च । भगवत्-तमः ( प० पा० ) नृणां च भगवत्तमः' ( सं० २.९.२ ) 'उत्–तमः । असि । ओषधीनाम् ( प० पा० ) उत्तम अस्योषधीनाम्' ( सं० ६.१५.१ ) 'अहम् । अस्मि । यशः-तमः ( प० पा० ) अहमस्मि यशस्तमः' ( सं० ६ ३९.३ ) 'रथम्–तरम् ( प० पा० ) रथन्तरम्' (सं० ८.१०.१३) । तरतमयोरिति किम् ? 'अश्वतरस्य । आजस्य ( प० पा० ) अश्वतरस्याजस्य' ( सं० ४ ४.८ ) 'अश्वतर्यः । देव–रथस्य ( प० पा० ) अश्वतर्यो देवरथस्य' ( सं० ८.८.२२ ) इत्यत्र नावगृह्यते । ह्विटनीमहाभागेन 'प्र–तरम् (प० पा० ) प्रतरम्' ( सं० ५.१.४ ) 'वि–तरम्

### शशिकला

प्रण् धातु से निष्पन्न प्रपण का भी मूलरूप-प्रदर्शन नहीं होता। जैसे—प्र-पणम् ( प० पा० ) प्रपणम् ( सं० पा० ) प्र-पणः ( प० पा० ) प्रपणः ( सं० पा० ) ॥२५॥

## इदमू ष्वादिषु पदत्वात् ॥ २६ ॥

**सू० अ०**—( क्रमपाठ में ) त्रिपद होने के कारण 'इदमू षु' इत्यादि में ( मूलरूप-प्रदर्शन नहीं होता )।

### निर्मलभाष्यम्

क्रमपाठे 'त्रीणि पदान्यपृक्तमध्यानि' ( ४.४ १४) इत्यनेन अपृक्तमध्यः त्रिपदक्रमः भवति। तत्र **पदत्वात्** त्रिपदत्वात् **'इदमू षु' इत्यादिषु** त्रिपद-क्रमेषु मूलरूपं न प्रदर्शनीयम्। यथा—'इदम्। ॐ इति। सु ( प० पा० ) इदमू षु ( क्र० पा० ) इदमू षु' ( सं० १.२४.४ ) 'आदिषु' पदेन ज्ञायते यद् अन्यत्रापि त्रिपदत्वात् क्रमपाठे मूलरूपं न प्रदर्शनीयम्। तद्विषये इमानि निदर्शनानि द्रष्टव्यानि—'तद्। ॐ इति। सु (प० पा० ) तदू षु (क्र० पा०) तदू षु' ( सं० ५ १ ५ ) 'परि। ॐ इति। सु ( प० पा० ) पर्यूं षु (क्र० पा०) पर्यूं षु' ( सं० ५.६ ४ ) 'महीम्। ॐ इति। सु ( प० पा० ) महीमू षु ( क्र० पा० ) महीमू षु' ( सं० ७.६.२ ) 'अन्यः। ऊँ इति। सु ( प० पा० ) अन्यः ऊ षु ( क्र० पा० ) अन्य ऊ षु' ( सं० १८.१.१६ ) 'स्तुष। ऊँ इति। सु ( प० पा० ) स्तुष ऊ षु ( क्र० पा० ) स्तुष ऊ षु' ( सं० १८ १.३७ ) 'त्यम्। ऊँ इति। सु प० पा० ) त्यमू षु ( क्र० पा० ) त्यमू षु' ( सं० ७.८५.१ ) 'परः। ऊँ इति। ते (प० पा०) पर ऊ ते ( क्र० पा० ) पर ऊ ते' ( सं० १८ ३.७ ) 'हविः। ओ इति। सु ( प० पा० ) हविरो षु ( क्र० पा० ) हविरो षु ( सं० ७.७२ २ ) ॥२६॥

### शशिकला

क्रमपाठ में 'अपृक्त है मध्य में जिसके ऐसे तीन पदों वाला क्रमवर्ग होता है' इस विधान के अनुसार अपृक्तमध्य वाला त्रिपदक्रम होता है। वहाँ त्रिपदक्रम होने से 'इदमू षु' इत्यादि त्रिपदक्रमों में मूलरूप-प्रदर्शन नहीं होता। जैसे 'इदम्। ऊँ इति। सु (प० पा० ) इदमू षु ( क्र० पा० ) इदमू षु' ( सं० पा० )। सूत्र में प्रयुक्त 'इत्यादि में' से ज्ञात होता है कि अन्यत्र

भी त्रिपदक्रम में मूलरूप-प्रदर्शन नहीं होता, उस विषय में ये उदाहरण द्रष्टव्य हैं—'तत्। ॐ इति। सु ( प० पा० ) तदू षु ( क्र० पा० ) तदू षु' ( सं० पा० ) ........' ॥२६॥

## ब्रह्मण्वत्यादीनाम् ॥ २७ ॥

सू० अ०—ब्रह्मण्वती इत्यादि का ( मूलरूप-प्रदर्शन नहीं होता )।

### निर्मलभाष्यम्

**ब्रह्मण्वत्यादीनाम्** ब्रह्मण्वती इत्यादीनां मूलरूपं न प्रदर्शनीयम्। यथा—'ब्रह्मण्-वतीम् ( प० पा० ) ब्रह्मण्वतीम्' (सं० ६.१०८.२)। आदीनां पदेन ज्ञायते यदन्यत्रापि मूलरूपं न प्रदर्शनीयम्। तद्विषये इमानि निदर्शनानि द्रष्टव्यानि—'अक्षण्-वान् ( प० पा० ) अक्षण्वान्' ( सं० ९.९ १५ ) 'शीर्षण्-वती ( प० पा० ) शीर्षण्वती' ( सं० १० १.२ ) 'वृषण्यवन्ती-इव ( प० पा० ) वृषण्यवन्तीव' ( सं० ५ ५.३ ) 'वृषण्यन्त्याः ( प० पा० ) वृषण्यन्त्याः ( सं० ६.९.१ ) 'वृषण्यतः (प० पा०) वृषण्यतः' ( सं० ६ ७० १-३ ) इत्यत्रावग्रहोऽपि न दृश्यते ॥२७॥

### शशिकला

'ब्रह्मण्वती' इत्यादि का मूलरूप-प्रदर्शन नहीं होता। जैसे—'ब्रह्मण्-वतीम् (प० पा०) ब्रह्मण्वतीम्' ( सं० पा० )। सूत्र में प्रयुक्त 'इत्यादि का' पद से ज्ञात होता है कि अन्यत्र भी मूलरूप-प्रदर्शन नहीं होता। उस विषय में ये उदाहरण द्रष्टव्य हैं—'अक्षण्-वान् ( प० पा० ) अक्षण्वान्' ( सं० पा० ) ..........' ॥२७॥

## दीर्घायुत्वादीनाञ्च ॥ २८ ॥

सू० अ०—दीर्घायुत्व इत्यादि का भी (मूलरूप-प्रदर्शन नहीं होता)।

### निर्मलभाष्यम्

'दीर्घायुत्वायादिषु' (२.२.२०) इत्यनेन विसर्जनीयस्य लोपः विहितः। तस्य लुप्तस्य विसर्जनीयस्य दीर्घायुत्व इत्यादीनां मूलरूपं न प्रदर्शनीयम्। यथा—'दीर्घायु-त्वाय ( प० पा० ) दीर्घायुत्वाय ( सं० १.२२.२ )। आदीनां

विषये निदर्शनद्वयं द्रष्टव्यम्—'सहस्रचक्षो इति सहस्र–चक्षो ( प० पा० ) सहस्रचक्षो' ( सं० ४.२०५ ) 'बर्हि–सदः ( प० पा० ) बर्हिषदः' ( सं० १८ १४५ ) ॥२८॥

॥ इति श्रीमत्पण्डितदशरथपाठकसूनुना डा० जमुनापाठकेन कृते निर्मलभाष्ये चतुरध्यायिकायाः चतुर्थाध्यायस्य तृतीयः पादः ॥

### शशिकला

'दीर्घायुत्वाय इत्यादि में विसर्जनीय का लोप हो गया है' से विसर्जनीय के लोप का विधान किया गया है। उस लुप्त हुए विसर्जनीय वाले दीर्घायुत्व इत्यादि का मूलरूप-प्रदर्शन नहीं होता। जैसे—'दीर्घायु–त्वाय ( प० पा० ) दीर्घायुत्वाय' ( सं० पा० )। सूत्र में प्रयुक्त 'इत्यादि का' के विषय से ये दो उदाहरण द्रष्टव्य हैं— सहस्रचक्षो इति सहस्र चक्षो ( प० पा० ) सहस्रचक्षो' ( सं० पा० ) 'बर्हि–सदः ( प० पा० ) बर्हिसदः' ( सं० पा० ) ॥ २८ ॥

॥ चतुरध्यायिका के चतुर्थ अध्याय के तृतीय पाद की डा० जमुनापाठक-कृत शशिकला व्याख्या समाप्त ॥

## अथ चतुर्थः पादः

[ वेदाध्ययनविधानम् ]

### वेदाध्ययनं धर्मः ॥१॥

**सू० अ०**—वेदाध्ययन ( करना ) धर्म ( कर्त्तव्य ) है।

#### निर्मलभाष्यम्

**वेदाध्ययनं** वेदानां वेदस्य वा अध्ययनं **धर्मः** अवश्यकरणीयं कर्त्तव्यम्। अध्ययनं नाम गुरुमुखोच्चारणपूर्वकं शिष्यानुच्चारणम्। गुरुमुखोच्चारणपूर्वकं वेदाध्ययनमवश्यमेव कर्त्तव्यमित्यर्थः। उपनयनसंस्कारानन्तरं सर्वेषां वेदानां द्वयोरेकस्य वा स्वप्रज्ञानुसारमध्ययनं कर्त्तव्यम्। यथोक्तं याज्ञवल्क्येन—'वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्' इति। एकस्यैव वेदस्य पक्षे पितृपितामहादिभिः परम्परया प्राप्त एव वेदोऽध्येतव्यः। अत एवोक्तं—'अहरहः स्वाध्यायमधीयीत' ( श० ब्रा० ११.५.६.३ ) 'स्वाध्यायोऽध्येतव्यः ( तै० आ० २.१५ ) इति। अत्र श्रुतौ स्वपदः परम्परया प्राप्तस्य वेदस्यार्थं प्रयुक्तः। वेदाध्ययनं नित्यमेव, न तु काम्यम्। अनाध्यायेन पतितः जायते। यथोक्तं पुरुषानुशासने—'वेदस्याध्ययनं नित्यमनध्ययने पातात्' इति। वेदः सखा। येन सखारूपः वेदः त्यक्तः तस्य वाचि भागो न भवति। सः सुकृतस्य पन्थामपि न वेत्ति। यथा श्रुतिः—

'यस्तित्याज सखिविदं सखायं न तस्य वाच्यपि भागो अस्ति।
यदीं शृणोत्यलकं शृणोति न हि प्रवेद सुकृतस्य पन्थाम् ॥'
( ऋ० सं० ७.७१ ६ )

अध्ययनं त्रिधा-ग्रहणं धारणं ब्रह्मयज्ञश्च। गुरुमुखोच्चारणानूच्चारणं ग्रहणम्। अभ्यासेन ग्रहणस्य संरक्षणं धारणम्। ग्रहीतस्य च वेदभागस्य नियमेन पारायणं ब्रह्मयज्ञश्च। पञ्च महायज्ञाः प्रोक्ताः—

'अध्ययनं ब्रह्मयज्ञं पितृयज्ञस्तु तर्पणम्।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥'
( मनुस्मृति ३.७० )

तत्र ब्रह्मयज्ञं वेदाध्ययनं प्रथममुक्तम्। ब्रह्मयज्ञस्य फलं प्राप्तुमपि वेदाध्ययनं कर्त्तव्यम्। एतदेव न। बहुद्रव्यप्रयाससाध्यस्य यज्ञस्य यत्फलं तत्तत्स्वाध्ययनमात्रेण सिध्यति। यथोक्तं—'यं यं क्रतुमधीते तेन तेनास्येष्टं भवत्यग्नेर्वायोरादित्यस्य सायुज्यं गच्छति (तै० आ० २.१५) इति। तत्रै-वमप्युक्तम्—'यदृचोऽधीते पयसः कूल्या अस्य पितॄन् स्वधा अभिवहन्ति। यद् यजूंषि घृतस्य कूल्या। यत्सामानि सोम एभ्यः पवते। यदथर्वाङ्गिरसो मधोः कूल्या। यद्ब्राह्मणानीतिहासान् पुराणानि कल्पान् गाथा नाराशं-सीर्मेदसः कूल्या अस्य पितॄन् स्वधा अभिवहन्ति (तै० आ० २.१०) इति। वेदाध्ययनं बिना द्विजः सान्वयः शूद्रत्वमाप्नोति। यथोक्तम्—

'योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम्।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः॥
(मनुस्मृति २.१६८)

सर्वज्ञोऽपि वेदज्ञानहीनः ब्राह्मणः निष्फलः एव जायते। यथोक्तम्—

यथा षण्ढोऽफलः स्त्रीषु यथा गौर्गवि चाफला।
यथा चाज्ञोऽफलं दानं तथा विप्रोऽनृचोऽफलः॥
(मनुस्मृति २.१५८)

अत एव पतञ्जलिनाप्युद्घोषितम्—'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयः ज्ञेयश्च' (महाभाष्यम् १.१)। मनुनाप्युक्तम्—

वेदमेव सदाभ्यस्येत्तपस्तस्य द्विजोत्तमः।
वेदाभ्यासो हि विप्रस्य तपः वरमिहोच्यते॥
आ हैव नखाग्रेभ्यः परमं तप्यते तपः।
यः स्रग्व्यपि द्विजोऽधीते स्वाध्यायः शक्तितः॥
(म० स्मृ० २.१६६-१६७)

नैतदेवमेव। ऐहिकं पारलौकिकं च सर्वं ज्ञानं वेदेषूपलभ्यते। वेदा-ध्ययनेन द्वयोरप्यभ्युदयं भवति। भैषज्यमभियान्त्रिकं सामाजिकं धार्मिकं सांस्कृतिकं राजनैतिकं कलादिकं साहित्यिकं ज्ञानमत्र प्राप्यते। पारलौकि-कन्तु वेदस्य वेदत्वमेव। यथोक्तं सायणाचार्येण—

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।
एतं विदन्ति वेदेन तस्माद्वेदस्य वेदता॥
(कृष्णयजुर्वेदभाष्यभूमिकायाम्)

वेदः मनुष्याणामेव न प्रत्युत पितॄणां देवानामप्यभ्युदयार्थं मार्ग-दर्शकः। मनुना उक्तम्—

पितृदेवमनुष्याणां वेदश्चक्षुः सनातनः।
अशक्यश्चाप्रमेयश्च वेदशास्त्रमिति स्थितिः॥

( मनुस्मृति १२ ९४ )

अत एव वेदाध्ययनं कर्त्तव्यम्। यथोक्तं कात्यायनेन—'वेदाध्ययनाद्धर्मः······' ( वा० प्रा० ८.३७ ) इति। अथर्ववेदस्याध्ययने विशिष्टं समाम्नातम् अथर्वपरिशिष्टे —

न तिथिर्न नक्षत्रं न ग्रहो न च चन्द्रमाः।
अथर्वमन्त्रसम्प्राप्त्या सर्वसिद्धिर्भविष्यति॥ ( २.५ )
यस्य राज्ञो जनपदे अथर्वा शान्तिपारगः।
निवसत्यपि तद्राष्ट्रं वर्धते निरुपद्रवम्॥
तस्माद्राजा विशेषेण अथर्वाणं जितेन्द्रियम्।
दानसम्मानसत्कारैर्नित्यं समभिपूजयेत्॥ ( ४.६ )

स्कन्दपुराणे कमलालयखण्डे—

'यस्तत्राथर्ववान् मन्त्रान् जपेच्छ्रद्धासमन्वितः।
तेषामर्थोद्भवं कृत्स्नं फलमाप्नोति स ध्रुवम्॥' इति

विष्णुपुराणे —

'पौरोहित्यं शान्तिकपौष्टिकानि राज्ञाम् अथर्ववेदेन कारयेद् इति॥'

नीतिशास्त्रे —

त्रय्यां च दण्डनीत्यां च कुशलः स्यात्पुरोहितः।
अथर्वविहितं कर्म कुर्याच्छान्तिकपौष्टिकम्॥

मारकण्डेयपुराणे—

अभिषिक्तोऽथर्वमन्त्रैर्महीं भुङ्क्ते ससागरम्।

अत एव वेदाध्ययनं कर्त्तव्यमिति॥१॥

## शशिकला

वेद का अध्ययन करना धर्म होता है। धर्म का अर्थ है—अवश्य-करणीय कर्त्तव्य। अध्ययन का अर्थ है--गुरु के द्वारा उच्चारित मन्त्र का शिष्य द्वारा उसी रूप में उच्चारण। गुरु के मुख से उच्चारित मन्त्र का

उसी रूप में उच्चारण द्वारा वेद का अध्ययन करना अवश्य-करणीय कर्त्तव्य है, यह अर्थ है। उपनयन संस्कार के बाद अपनी प्रज्ञा के अनुसार सभी वेदों का, दो वेदों का अथवा एक वेद का अध्ययन करना चाहिए। जैसा **याज्ञवल्क्य** ने कहा है—'उपनयन के पश्चात् वेदों, दो वेदों, अथवा एक वेद का अध्ययन करना चाहिए'। यदि एक वेद का अध्ययन करने की ही प्रज्ञा हो तो अपने पिता, पितामह इत्यादि द्वारा परम्परा से प्राप्त वेद का अध्ययन करना चाहिए। जैसा कहा गया है—'स्वाध्याय करना चाहिए' (तै० ब्रा० २.१५)। यहाँ स्वाध्याय में स्वपद परम्परा से प्राप्त वेद के लिए प्रयुक्त हुआ है। वेदों का अध्ययन करना नित्य[1] है, काम्य[2] नहीं। वेदाध्ययन न करने से **व्यक्ति पतित हो जाता है। जैसा पुरुषार्थानुशासन में** कहा गया है - 'वेदाध्ययन करना नित्य है, न करने से व्यक्ति पतित हो जाता है। वेद सखा है। जिस व्यक्ति ने सखा रूपी वेद का परित्याग कर दिया, उस व्यक्ति का वाणी में भाग ( हिस्सा ) नहीं रह जाता और वह कल्याण के मार्ग को भी नहीं जान पाता। जैसा ऋग्वेद में कहा गया है—

'जिसने सख्यभाव को जानने वाले सखारूप वेद का परित्याग कर दिया, उसका वाणी में कोई अधिकार नहीं होता। वह जो कुछ सुनता है, असत्य ही सुनता है और वह कल्याण के मार्ग को भी नहीं जान पाता।'

अध्ययन तीन प्रकार का होता है—ग्रहण, धारण और ब्रह्मयज्ञ। गुरुमुख से उच्चारित मन्त्र को सुनकर उसका पीछे-पीछे उच्चारण करना ग्रहण कहलाता है। अभ्यास के द्वारा ग्रहण किये गये मन्त्र का संरक्षण करना धारण कहलाता है। ग्रहण तथा धारण किये गये वेदभाग का नियम-पूर्वक पारायण करना ब्रह्मयज्ञ कहलाता है। पाँच महायज्ञ कहे गये हैं—

'वेद का अध्ययन करना ब्रह्मयज्ञ, पितरों के लिए तर्पण करना पितृ-यज्ञ, देवताओं के लिए हवन करना देवयज्ञ, प्राणियों के लिए बलि देना भूतयज्ञ तथा अतिथिपूजन नृयज्ञ है। इसमें वेदाध्ययन रूपी ब्रह्मयज्ञ का प्रथम स्थान है। इसलिए ब्रह्मयज्ञ के फल को प्राप्त करने के लिए वेदा-ध्ययन करना चाहिये।

---

१. नित्य वह कार्य है जिसे प्रतिदिन नियम-पूर्वक निष्कामभाव से करना चाहिए। जैसे —सन्ध्या इत्यादि।

२. काम्य वह कार्य है जिसे किसी अभिलाषा की पूर्ति के लिए किया जाता है।

इतना ही नहीं, प्रत्युत बहुत द्रव्य तथा प्रयास से पूरा होने वाले यज्ञ का जो फल होता है, वह फल उस यज्ञ के अध्ययन मात्र से ही प्राप्त हो जाता है। जैसा तै० आ० में कहा गया है—'जो जिस-जिस यज्ञ का अध्ययन करता है, उस-उस यज्ञ (के फल) से (अध्येता का) अभीष्ट होता है और वह अध्येता अग्नि, वायु तथा आदित्य की सन्निकटता को प्राप्त करता है।' वहीं यह भी कहा गया है—'जो ऋचाओं का अध्ययन करता है, दूध की नदियाँ उसके पितरों के लिए स्वधा के साथ प्रवाहित होती हैं, जो यजुषों का अध्ययन करता है घृत की नदियाँ प्रवाहित होती हैं, जो सामों का अध्ययन करता है उसके लिए सोम प्रवाहित होता है, जो अथर्वाङ्गिरस (अथर्वमन्त्रों) का अध्ययन करता है, मधु की नदियाँ उसके पितरों के लिए स्वधा के साथ प्रवाहित होती हैं, जो ब्राह्मणग्रन्थों, इतिहास-पुराण, कल्प, गाथा, नराशंसी का अध्ययन करता है माँस की नदियाँ उसके पितरों के लिए स्वधा के साथ प्रवाहित होती हैं। वेदाध्ययन के विना व्यक्ति अपने कुल के साथ शुद्धता को नहीं प्राप्त करता है। जैसा मनु ने कहा है—

'जो द्विज वेद का अध्ययन न करके अन्यत्र (साहित्य इत्यादि के पढ़ने में) परिश्रम करता है, वह जीवित रहता हुआ भी अपने कुल के साथ शुद्धत्व को प्राप्त नहीं करता है।'

मनु के अनुसार 'वेद के ज्ञान से हीन सर्वज्ञ ब्राह्मण वैसे ही निष्फल होता है, जैसे स्त्रियों के बीच में नपुंसक, गायों के बीच में गाय और अज्ञानी पुरुष को दिया गया दान निष्फल होता है।'

इसीलिए भगवान् पतञ्जलि ने कहा है—'निष्कारण षडङ्ग सहित वेद का अध्ययन करना और उसका ज्ञानार्जन करना ब्राह्मण का धर्म है।'

मनु ने भी कहा है—भविष्य में तपस्या करने वाला ब्राह्मण वेद का अभ्यास करें क्योंकि ब्राह्मण के लिए वेदाध्ययन ही इस लोक में उत्कृष्ट तप कहा गया है।' 'पुष्पमाला को धारण करता हुआ भी (यद्यपि ब्रह्मचर्यावस्था में पुष्पमाला पहनना निषिद्ध है तथापि वैसा करता हुआ) जो ब्राह्मण प्रतिदिन शक्ति के अनुसार स्वाध्याय करता है, वह नखाग्र तक (अर्थात् सम्पूर्ण शरीर में) श्रेष्ठ तपस्या को तपता है।

इतना ही नहीं, लौकिक तथा पारलौकिक सभी प्रकार का ज्ञान वेदों में निहित है। उसका अध्ययन करने से लौकिक तथा पारलौकिक दोनों प्रकार का अभ्युदय होता है। चिकित्साविज्ञान, अभियान्त्रिकी, सामाजिक,

धार्मिक, सांस्कृतिक, कला, साहित्य इत्यादि विषयक लौकिक ज्ञान को वेदों में देखा जा सकता है। पारलौकिक ज्ञान तो वेदों का वेदत्व ही है। जैसा सायण ने कहा है—

'प्रत्यक्ष अथवा अनुमान के द्वारा जो ज्ञान प्राप्त नहीं होता, वह वेद के द्वारा जाना जा सकता है यही वेद का वेदत्व है।

वेद केवल मनुष्यों का ही नहीं प्रत्युत पितरों तथा देवताओं के अभ्युदय के लिए मार्गदर्शन कराता है। इसीलिए मनु ने कहा है—अपौरुषेय, अप्रमेय वेद देवताओं, पितरों तथा मनुष्यों का सनातन नेत्र (मार्गदर्शक) है।

अतएव लौकिक तथा पारलौकिक अभ्युदय के लिए वेदाध्ययन करना चाहिये। इसीलिए कात्यायन ने कहा है—'वेदाध्ययन से धर्म होता है'। अथर्ववेद के अध्ययन के विषय में कुछ विशेष बात कही गयी है—

अथर्वपरिशिष्ट में कहा गया है—'न तिथि, न नक्षत्र, न ग्रह और न तो चन्द्रमा से प्रत्युत केवल अथर्वमन्त्रों की प्राप्ति से भी सभी अभीष्ट की प्राप्ति हो जाती है।' 'जिस राजा के राज्य में अथर्वविद् शान्तिपारग व्यक्ति निवास करता है वह राष्ट्र निरुपद्रव होकर वृद्धि को प्राप्त करता है। इसलिए राजा को चाहिये कि अथर्ववेद के मन्त्रों के वेत्ता जितेन्द्रिय व्यक्ति का दान, सम्मान तथा सत्कार के द्वारा पूजा करे।

स्कन्दपुराण के कमलालय खण्ड में कहा गया है—'जो व्यक्ति अथर्ववेदीय मन्त्रों को श्रद्धायुक्त होकर जपता है उसकी धनवृद्धि होती है और निश्चित रूप से सभी पुण्य को प्राप्त करता है'। विष्णुपुराण में कहा गया है—'पुरोहित को चाहिये कि वह राजा के शान्तिक और पौष्टिक कर्म को अथर्ववेद के अनुसार कराये।'

नीतिशास्त्र में कहा गया है—'राजा के पुरोहित को वेदत्रयी तथा दण्डनीति के ज्ञान में निपुण होना चाहिये तथा अथर्ववेद में विहित शान्ति और पौष्टिक कर्म को करना चाहिये।'

मारकण्डेयपुराण में कहा गया है—'अथर्ववेद के मन्त्रों से अभिषिक्त राजा सागरपर्यन्त पृथ्वी का भोग करता है।'

इसलिए वेदों का अध्ययन करना चाहिये ।।१।।

**प्रेत्य ज्योतिष्ट्वं कामयमानस्य ॥ २ ॥**

**सू० अ०**—मर कर ( मरने के बाद ) दिव्य ज्योति की ( प्राप्त करने की ) अभिलाषा करने वाले का ( वेदाध्ययन करना धर्म है )।

## निर्मलभाष्यम्

ज्योतिर्भावो ज्योतिष्ट्वं, परमात्मनः दिव्यज्योतिर्भावमित्यर्थः । **प्रेत्य** मृत्युं प्राप्य **ज्योतिष्ट्वं** परमात्मनः दिव्यज्योतिर्भावं प्राप्तुं **कामयमानस्य** अभिलषमाणस्य वेदाध्ययनं धर्मः । मरणोपरान्तं परमात्मनः दिव्यज्योतिर्भावमभिलषमाणैर्वेदाध्ययनं कर्त्तव्यमित्याशयः ॥२॥

## शशिकला

ज्योतिः में होने वाला ज्योतिष्ट्व है । परमात्मा के दिव्य ज्योतिर्भाव को–यह अर्थ है । मृत्यु को प्राप्त करने के बाद परमात्मा के दिव्य ज्योतिर्भाव को पाने की इच्छा करने वाले व्यक्ति को वेदाध्ययन करना चाहिये ।

### याज्ञिकैर्यथासमाम्नातम् ॥३॥

**सू० अ०**—याज्ञिकों द्वारा जैसा ( यज्ञ का फल ) कहा गया है ( उस फल को प्राप्त करने के लिए वेदाध्ययन करना चाहिए ) ।

## निर्मलभाष्यम्

**याज्ञिकैः** यज्ञविद्भिः **यथा** येन प्रकारेण यज्ञफलं **समाम्नातम्** अभिहितं तत्फलं प्राप्तुं वेदाध्ययनं कर्त्तव्यम् । याज्ञिकानां मते वेदाः यज्ञार्थमेवाभिप्रवृत्ता । अथोक्तम्—'वेदा हि यज्ञार्थमभिप्रवृत्ताः दुदोह यज्ञसिद्धयर्थम् ।' तैः 'यज्ञ एव सर्वश्रेष्ठं कर्म' इत्युद्घोषितम्—'यज्ञो वै श्रेष्ठतमं कर्म' ( श० ब्रा० १७.१.५, तै० ब्रा० ३ २.१ ) इति श्रुतिः । अत एवोक्तम्—'ज्योतिष्टोमेन यजेत स्वर्गकामः' 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इति । बहुद्रव्यप्रयाससाध्येन यज्ञेन यत्फलं तदेव तस्याध्ययनेनापि । यथोक्तम्—'यं यं क्रतुमधीते तेन तेनास्येष्टं भवत्यग्नेर्वायोरादित्यस्य सायुज्यं गच्छति' ( तै० आ० २ १५ ) । तैत्तिरीयसंहितायामप्युक्तम्—'सर्वं पाप्मानं तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद' ( तै० सं० ५.३.१२ ) इति । एवं स्पष्टमेव यत् सम्पादितेन यज्ञेन यत्फलं तदेव तस्याध्ययनेन ज्ञानेन वा । अत एव यज्ञफलप्राप्त्यर्थं वेदाध्ययनं कर्त्तव्यम् ॥३॥

## शशिकला

याज्ञिकों ( यज्ञ के वेत्ताओं ) द्वारा यज्ञ के जिस फल को कहा गया है, उस फल की प्राप्ति के लिए वेदाध्ययन करना चाहिए । याज्ञिकों के

अनुसार वेद यज्ञ के लिए ही प्रवृत हुए हैं जैसा श० ब्रा० तथा तै० ब्रा० में कहा गया है—'वेद यज्ञ के लिए ही अभिप्रवृत हुए है ( अतः ) यज्ञ की सिद्धि के लिए उनका दोहन हुआ'। यज्ञ को श० ब्रा० में सर्व श्रेष्ठ कर्म बतलाया गया है—'यज्ञ ही श्रेष्ठतम कर्म है'। इसी लिए कहा गया है—'स्वर्ग की कामना करने वाला ज्योतिष्टोम द्वारा यजन करे' 'स्वर्ग की कामना करने वाला अग्निहोत्र हवन करे'। अधिक द्रव्य तथा प्रयास से साध्य यज्ञ को करने से जो फल मिलता है वही फल उसके अध्ययन से भी मिलता है। जैसा तै० आ० में कहा गया है—जिस-जिस यज्ञ का अध्ययन करता है ( अध्येता ) उस-उस ( यज्ञ के ) अभीष्ट ( फल ) को प्राप्त करता है तथा अग्नि, वायु तथा आदित्य के सायुज्य को जाता है'। तै० सं० में कहा गया है—'जो अश्वमेध से यजन करता है या उसको जानता है, वह सभी पापों और ब्रह्महत्या से मुक्त हो जाता है'। इस प्रकार स्पष्ट है कि किए गये यज्ञ से जो फल प्राप्त होता है उसके अध्ययन अथवा ज्ञान से भी वह फल प्राप्त होता है। इस लिए यज्ञ के फल की प्राप्ति के लिए वेदाध्ययन करना चाहिए ॥३॥

## यज्ञततिर्न पृथग्वेदेभ्यः ॥४॥

सू० अ०—वेदों से अन्यत्र यज्ञों का विस्तार नहीं है।

### निर्मलभाष्यम्

**यज्ञततिः** यज्ञानां ततिः विस्तारः समूहो वा **वेदेभ्यः पृथग्** अन्यत्र **न** नैव विद्यते। यज्ञस्य विवेचनं वेदेष्वेव विद्यते इत्यर्थः। वेदाः यज्ञार्थमेव अभिप्रवृत्ताः विद्यन्ते। मीमांसाप्रवर्तकजैमिनिमते वेदानामभीष्टं यागमेव–'आम्नायस्य क्रियार्थत्वादानर्थ्यकमतदर्थानाम्' इति। यज्ञीयविषयानां प्रतिपादनं वेदेष्वेव विद्यते। वेदाध्ययनं बिना यज्ञानां ज्ञानं भवितुं नार्हति। याज्ञिकानां मते संहितापेक्षया ब्राह्मणग्रन्थानां प्रधानत्वम्। यतो हि तत्रैव यज्ञानां सर्वाङ्गीणं विवेचनं प्राप्यते। मन्त्रास्तु अङ्गरूपेण यज्ञेषु प्रयुक्ता भवन्ति। अत एव वैदिककाले आर्यजनाः नियमपूर्वकं वेदानधीत्य अग्न्याधानान्तरं दर्शपौर्णमासचातुर्मास्याग्निष्टोमवाजपेयराजसूयसौत्रामण्यश्वमेधसर्वमेधादीनां यज्ञानामनुष्ठानेन लौकिकं पारलौकिकञ्च सुखसमृद्धिं सम्पादयन्तिस्म। एषां सर्वेषामुत्सः वेदः एव। अत एव यज्ञानामवबोधनार्थं वेदाध्ययनं कर्त्तव्यम् ॥४॥

**शशिकला**

यज्ञततिः का अर्थ है—यज्ञ का विस्तार, यज्ञ का समूह। यज्ञ का विस्तार वेदों से अन्यत्र नहीं है। यज्ञ का विवेचन वेदों में ही है—यह अर्थ है। वेद यज्ञ के लिए ही अभिप्रवृत्त हुए है। मीमांसा के प्रवर्तक जैमिनि के अनुसार वेद का अभीष्ट याग ही है। यज्ञीय विषयों का प्रतिपादन वेदों में ही हुआ है। वेदाध्ययन के बिना यज्ञों का ज्ञान नहीं हो सकता। याज्ञिकों के मत में संहिता की अपेक्षा ब्राह्मणग्रन्थों की प्रधानता है क्योंकि वहाँ ही यज्ञों का सर्वाङ्गीण विवेचन प्राप्त होता है, मन्त्र तो अङ्ग के रूप में यज्ञों में प्रयुक्त होते हैं। इसी लिए वैदिक-काल में आर्य लोग नियमपूर्वक वेदों का अध्ययन करके अग्न्याधान के पश्चात् दर्शपौर्णमास, चातुर्मास्य, अग्निष्टोम, वाजपेय, राजसूय, सौत्रामणी, अश्वमेध, सर्वमेध इत्यादि यज्ञों के अनुष्ठान से लौकिक तथा पारलौकिक सुख-समृद्धि का सम्पादन करते थे। इन सभी यज्ञों का स्रोत वेद ही हैं। अत एव यज्ञों के अवबोध के लिए वेदों का अध्ययन करना चाहिए ॥४॥

**यज्ञे पुनर्लोकाः प्रतिष्ठिताः ॥५॥**

**सू० अ०**—यज्ञ में लोक प्रतिष्ठित हैं।

**निर्मलभाष्यम्**

भूर्भुवः स्वः इत्येते त्रयः लोकाः सन्ति। 'लोके पञ्चजनाः' ( ४.४.६ ) इत्यनेन लोके निवासिनां पञ्चजनानाम् अभिधानं कृतम्। देवाः, पितरः गन्धर्वाप्सरसः, सर्पाः, मनुष्याः च पञ्चजनाः। एवं इत्येते पञ्चजनाः त्रिषु लोकेषु निवसन्ति। यज्ञेन सर्वे पञ्चजनाः पुष्टिं प्राप्नुवन्ति। एवं सर्वे **लोकाः** लोकनिवासिनः यज्ञे **प्रतिष्ठिता** भवन्ति। यज्ञेन सर्वे लोकनिवासिनः पुष्टिं गच्छन्ति। यथोक्तं

अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः।
यज्ञाद्भवति पर्जन्यः यज्ञः कर्मसमुद्भवः॥
कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम्।
तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्॥
( गीता ३.१४–१५ )

एवं सर्वे प्राणिनः अन्नाद् भवन्ति। यथोक्तं—'अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते अन्नेन जातानि जीवन्ति (तैत्तिरीयोपनिषद् ३.२)। अन्नेन

—खाद्यपदार्थेन एव प्राणिनां शरीरे रज-वीर्यं निष्पद्यते। रजवीर्ययोः च संयोगेन प्राणिनाम् उत्पत्तिर्जायते। खाद्यपदार्थेनैव ततः तेषां पोषणं भवति। एवं अन्नमेव प्राणिनामुत्पत्तौ वृद्धौ पोषणे च हेतुः। अन्नस्य चोत्पत्तिः पर्जन्यात्=वृष्टितः भवति। सर्वेषां खाद्यपदार्थानाम् उत्पत्तिः जलेन भवति। जलस्य वृष्टिरेवाधारभूतः। वृष्टिः यज्ञाज्जायते। सृष्टौ विद्यमानानां सर्वेषां प्राणिनां भरणपोषणस्य संरक्षणस्य च दायित्वं मानवानामेव कर्त्तव्यम्। स्वदायित्वस्यार्थं मनसा वाचा कर्मणा मनुष्यैः प्राणिनां जीवनधारणादिहिताय यानि कर्माणि कृतानि भवन्ति तानि सर्वाणि यज्ञसंज्ञया ख्यापितानि सन्ति। यज्ञे होमदानतपादिकर्मणां समाहारः भवति। यज्ञः विहितात् कर्मणः एव जायते। मनुष्याणां वर्णाश्रमस्वभावपरिस्थितिभेदानुसारं वेदेषु कर्माणि विहितानि। तेषां कर्मणां सम्पादनमेव यज्ञः। अत एव स्वकर्मणां ज्ञानार्थं वेदानामध्ययनमपरिहार्यम्। वेदाः अक्षराद् नित्यात् परमेश्वराद् उद्भूताः अभवन्। अत एव सर्वगतः परमेश्वरः यज्ञे प्रतिष्ठितं भवति। एवं सर्वे लोकनिवासिनः यज्ञे प्रतिष्ठिताः सन्ति। यज्ञः मनुष्याणामावश्यकर्त्तव्यं कर्म। यथोक्तम्—

इष्टान्भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः।
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः॥
(गीता ३.१२)

इत्येवं सर्वेषां हिताय मनुष्यैः यज्ञः कर्त्तव्यः ॥५॥

## शशिकला

भूर्लोक, अन्तरिक्ष लोक तथा द्युलोक—ये तीन लोक हैं। 'इन लोकों में पञ्चजन निवास करते हैं' के द्वारा लोक में रहने वालों को बतलाया गया है। देवता, पितृगण, गन्धर्व तथा अप्सराएँ, सर्प ( नाग ) और मनुष्य ये पञ्चजन है जो इन तीनों लोकों में निवास करने वाले हैं। यज्ञ से सभी पञ्चजन परिपुष्टि को प्राप्त करते हैं। इस प्रकार सभी लोकों के निवासी यज्ञ में प्रतिष्ठित होते हैं। जैसा कहा गया है—'अन्न से सभी प्राणी उत्पन्न होते हैं। पर्जन्य ( वृष्टि ) से अन्न होता है। पर्जन्य ( यज्ञ ) से उत्पन्न होता है। यज्ञ विहितकर्मों से उत्पन्न होता है। कर्म समुदाय वेद से तथा वेद अविनाशी परमेश्वर से उत्पन्न हुआ है। इस प्रकार सर्वव्यापी परमात्मा सदा ही यज्ञ में प्रतिष्ठित रहता है।' ( गीता ३.१४–१८ )। ......। इस लिए मनुष्यों को सभी लोकों के निवासियों के हित के लिए यज्ञ करना चाहिए ॥५॥

## पञ्चजनाः लोकेषु ॥ ६ ॥

**सू० अ०**—लोक में पञ्चजन ( प्रतिष्ठित है )।

### निर्मलभाष्यम्

लोकेषु के के विद्यन्ते इति निर्दिशति। **लोकेषु** पञ्चजनाः विद्यन्ते। 'के पञ्चजनाः' इत्यस्मिन् विषये आचार्याणां मतैक्यं न प्राप्यते। औपमन्योः मते ब्राह्मणः क्षत्रियः वैश्यः शूद्रश्च चत्वारो वर्णाः पञ्चमः निषादश्च इत्येते पञ्चजनाः—'चत्वारो वर्णाः निषादश्च पञ्चमः इत्यौपमन्यवाः' (नि० ३.८)। एकेषां मते गन्धर्वाश्च पितरो देवा असुरा रक्षांसि चेत्येते पञ्चजनाः–'गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके' ( नि० ३.८ )। ऐतरेयानुसारं देवाः मनुष्याः गन्धर्वाप्सरसः सर्पाः पितरो इत्येते पञ्चजनाः— 'सर्वेषां वा एतत्पञ्चजनानामुक्थं देवमनुष्याणां गन्धर्वाप्सरसां सर्पाणां च पितॄणां च' ( ऐ० ब्रा० ३.३१ ) ॥ ६ ॥

### शशिकला

लोकों में कौन कौन लोग हैं ? इसका निर्देश किया जा रहा है। लोकों में पञ्चजन रहते हैं। पञ्चजन कौन-कौन हैं, इस विषय में आचार्यों में मतैक्य नहीं प्राप्त होता। औपमन्यु लोगों के अनुसार ब्राह्मण, क्षत्रिय, वैश्य शूद्र—ये चारों वर्ण तथा पञ्चम निषाद ये पञ्चजन हैं। कतिपय आचार्यों के मत में गन्धर्वगण, पितृगण, देवगण असुरगण तथा राक्षसगण—ये पञ्चजन कहलाते हैं। ऐतरेय ब्राह्मण के अनुसार देवगण, मनुष्यगण, गन्धर्व-अप्सराएँ सर्प ( विचरण करने वाले मनुष्येतर जीव ) तथा पितृगण—ये पञ्चजन हैं। इनमें से ऐतरेय ब्राह्मण का मत अधिक समीचीन है क्योंकि इन पञ्चजनों से तीनों लोकों में रहने वालों का बोध हो जाता है जिनका यज्ञ से सम्बन्ध रहता है ॥६॥

[ पदपाठप्रयोजननिरूपणम् ]

## पदाध्ययनमन्तादिशब्दस्वरार्थज्ञानार्थम् ॥ ७ ॥

**सू० अ०**—( पदों के ) अन्त (पदान्त), आदि (पदादि), शब्द (मूल-पद ), ( पदों के ) स्वर तथा ( पदों के ) अर्थ के ज्ञान के लिए पद ( पद-पाठ ) का ( अध्ययन करना चाहिये )।

## निर्मलभाष्यम्

वेदाध्यनस्य प्रयोजनमुक्त्वात्र पदपाठस्य प्रयोजनमुच्यते । **पदाध्ययनं** पदपाठस्याध्ययनं संहितायां प्रयुक्तानां पदानाम् **अन्तादिशब्दस्वरार्थज्ञानार्थम्** अन्तस्य पदान्तस्य, आदेः पदादिवर्णस्य, शब्दस्य मूलपदस्वरूपस्य, पदानां स्वरस्य, अर्थस्य पदानामर्थस्य च **ज्ञानार्थ**मवबोधनार्थं कर्त्तव्यमिति शेषः। पदपाठेन संहितायाः पदानां पदान्तस्य, पदादेः, मूलपदस्य, मूलस्वरस्य अर्थस्य च ज्ञानं भवति । संहितायां पदानाम् अन्त्यवर्णः परपदस्यादिवर्णेन, पदादिवर्णश्च पूर्वपदान्तवर्णेन प्रभावितः भवति । अत एव तत्र पदान्तः पदादिः वर्णश्च सन्धिपरिणामेन लोपाद्यवस्थायां विद्यते । पदपाठे संहितायां प्रयुक्तानां पदानां विच्छेदं भवति। येन पदान्तः परपदस्यादिना तथा च पदादिः पूर्वपदान्तेन अप्रभावितः जातः। तत्र पदान्तः पदादिश्च मूलावस्थायां भवति। एवं पदपाठे पदान्तस्य पदादेश्च मूलरूपं ज्ञायते । **पदान्तस्य यथा**—'धिय आकूतय उत' ( सं० ६.४१.१ ) अत्र संहितायां धिय इत्यस्य पदान्तः वर्णः न प्राप्यते। धियः इत्ययं पदः विसर्जनीयान्तः यत्र 'स्वरे यकारः' ( २.२ २ ) इत्यनेन विसर्जनीयस्य यकारस्ततः 'स्वराद्यवयोः पदान्तयो' ( २.१.२१ ) इत्यनेन यकारस्य लोपः अथवा धिये इति पदः यत्र 'सन्ध्यक्षराणामयवायावः' ( ३.२.१७ ) इत्यनेन एकारस्थाने अय्भावः ततः यकारलोपः। पदस्यास्य पदान्तः एकारः इति पदपाठेनैव ज्ञायते । एवमेव 'आकूतय' पदोऽपि एकारान्तः, न तु विसर्जनीयान्तः इति पदपाठेनैवावबुध्यते । 'यस्या उपस्थ उर्वन्तरिक्षम्' इत्यत्र यस्याः इति विसर्जनीयान्तः यत्र 'स्वरे यकारः' इत्यनेन विसर्जनीयस्य यकारः ततः यकारस्य 'स्वराद्यवयोः पदान्तयोः' ( २.१.२१ ) लोपश्च। न तु ऐकारान्तः पदः। एवमेव 'उपस्थः इत्ययं विसर्जनीयान्तः, न तु 'उपस्थे' एकारान्तः इति पदपाठेनैव बोध्यते। **पदादेः यथा**—'मेऽहिम्' ( सं० १०.४.१६ ) इत्यत्र 'अहिम्' इत्यस्य पदादौः अकारः इति पदपाठेनैव ज्ञायते ।

पदानां मूलस्वरूपमपि पदपाठेनैव ज्ञायते। यथा—'अश्वावतीम्' ( सं० १८ २ ३१ ) इत्यत्र 'अश्व-वतीम्' एव मूलपदः यत्र 'बहुलं मतौ' (३.१.१७) इत्यनेन मतौ पूर्वस्वरस्य दीर्घः जातः न तु 'अश्वा-वतीम्' पदः, इति पदपाठेनैवावबुध्यते । संहितायां पदानां स्वरा अपि पूर्वपरप्रभावेण मूलरूपेण न प्राप्यन्ते। तत्र स्वरविषयकविधानेन परिवर्तनं भवति। परञ्च पदपाठे पदानां विच्छेदात् परस्परपूर्वपरप्रभावाभावात् तेषां मूलस्वरः ज्ञायते।

यथा — वृ॒र्षस्य॑ । सर्गा॑ः । म॒ह॒य॒न्तु॒ ( प० पा० ) वृ॒र्षस्य॒ सर्गा॑ महयन्तु' ( सं० ४.१५.३ ) 'पृ॒थि॒वी । अ॒दा॒त् ( प० पा० ) पृ॒थ॒व्य॑दात् ( सं० ६.१००.१ ) 'रूपाय॑ । अ॒घ्न्ये॒ ( प० पा० ) रू॒पाया॑घ्न्ये' ( सं० १० १०.१ ) ।

संहितायां मूलपदस्य मूलस्वरस्य च ज्ञानं बिना तेषामर्थनिर्धारण-मशक्यम् । पदार्थनिर्धारणं बिना मन्त्रार्थं ज्ञातुं न शक्यते, यतो हि मन्त्रेषु पदाः विद्यन्ते । एवं स्पष्टं यद् मन्त्राणामभीष्टमर्थविबोधनार्थं तत्प्रयुक्तानां पदानां मूलस्वरूपस्य च ज्ञानमत्यावश्यकम् । वर्णपरिवर्तनेन स्वरपरिवर्तनेन वा तेषामर्थपरिवर्तनं भवति । यथोक्तं पाणिनिशिक्षायाम्—

मन्त्रो हीनः स्वरतो वर्णतो वा, मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रं यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥
( पा० शि० )

पदानां मूलस्वरूपस्य मूलस्वरस्य च ज्ञानं पदपाठेन भवति । एवं मन्त्रणामर्थबोधनाय पदपाठस्योपयोगित्वं सिद्धमेव ॥७॥

**शशिकला**

वेदाध्ययन के कथन के बाद यहाँ पदपाठ के अध्ययन का प्रयोजन बताया जा रहा है। पदपाठ का अध्ययन संहिता में प्रयुक्त पदों के अन्त ( पदान्त ), आदि ( पदादि ) पद ( पद के मूलस्वरूप ); पद के स्वर तथा अर्थ –ज्ञान के लिए करना चाहिए। पदपाठ से संहिता के पदों के पदान्त, पदादि, मूलपद, पद के मूल स्वर तथा अर्थ का ज्ञान होता है। संहिता में पदान्त तथा पदादि वर्ण परस्पर एक दूसरे से प्रभावित रहते हैं। अतः वहाँ लोप, आगम, विकार तथा प्रकृतिभाव—ये सन्धि के परिणाम प्राप्त रहते हैं किन्तु पदपाठ में पद अलग-अलग हो जाते हैं जिससे पदान्त तथा पदादि का परस्पर प्रभाव समाप्त हो जाता है। अतः वे अपने मूलरूप में प्राप्त होते हैं। इस प्रकार पदपाठ से पदान्त तथा पदादि का स्पष्टतः ज्ञान हो जाता है। **पदान्त का जैसे**—'धिय आकूतय उत' यहाँ संहिता में प्राप्त 'धिय' पद का अन्त्य वर्ण स्पष्ट नहीं है। यहाँ स्वर बाद में होने पर धियः के विसर्जनीय का 'स्वर बाद में होने पर विसर्जनीय का यकार हो जाता है' से यकार होकर 'स्वर से बाद में पदान्त यकार तथा वकार का लोप हो जाता है' से उसका लोप हो गया है अथवा धिये के एकार का 'स्वर बाद में होने पर सन्ध्यक्षरों का क्रमशः अय् अव् आय् तथा आव् हो जाता है' से अय् होकर 'स्वर से बाद में पदान्त यकार तथा वकार का लोप हो

जाता है' से यकार का लोप हो गया है—यह सन्देह होता है। इस सन्देह का निवारण पदपाठ से ही होता है कि यहाँ 'धिये' एकारान्त पद है, धियः विसर्जनीयान्त नहीं। इसी प्रकार 'आकूतये' एकारान्त पद है 'आकूतयः' विसर्जनीयान्त नहीं, पदपाठ से ही ज्ञात होता है। 'यस्या उपस्थ उर्वन्त-रिक्षम्' यहाँ यस्याः पद विसर्जनीयान्त है, ऐकारान्त यस्यै अथवा यस्य का संहिता में दीर्घ होकर यस्या रूप प्राप्त है, इसका निवारण पदपाठ से ही ही होता है कि यहाँ यस्याः विसर्जनीयान्त पद है। इसी प्रकार 'उपस्थः' भी विसर्जनीयान्त पद है उपस्थे यह एकारान्त नहीं—यह भी पदपाठ से ज्ञात होता है। **पदादि का जैसे**—'मेऽहिम्' यहाँ 'अहिम्' पदादि अकार वाला पद है -यह भी पदपाठ ही ज्ञात होता है।

पदों का मूलरूप पदपाठ से ही मालूम होता है। संहिता में पदों के स्वर भी अपने मूलरूप में नहीं रहते। वह अपने पूर्ववर्ती तथा परवर्ती पदों के स्वर से प्रभावित रहते हैं। किन्तु पदपाठ में पदच्छेद होने से पदों के मूलस्वर पर पूर्ववर्ती अथवा परवर्ती पद के स्वर का प्रभाव न होने से उनके मूलरूप ज्ञात हो जाता हैं। जैसे—'वर्षस्यं। सर्गाः। मह यन्तु (प० पा०) वर्षस्य सर्गा महयन्तु (सं० पा०) 'पृथिवी। अदात् (प० पा०) पृथिव्यदात्' (सं० पा०) 'रूपायं। अघ्न्ये (प० पा०) रूपायांघ्न्ये (सं० पा०)।

संहिता में प्रयुक्त पदों के मूलरूप तथा मूलस्वर के ज्ञान के बिना उनका अभीष्ट अर्थनिर्धारण नहीं हो सकता। पदों के अर्थ के निर्धारण के बिना मन्त्रों का अर्थ—निर्धारण नहीं किया जा सकता क्योंकि मन्त्रों में पद ही प्रयुक्त होते हैं। इस प्रकार स्पष्ट है कि मन्त्रों के अभीष्ट अर्थ के अव-बोध के लिए उनमें प्रयुक्त पदों के मूलरूप तथा मूलस्वर का ज्ञान अत्या-वश्यक है। वर्ण के परिवर्तन अथवा स्वर के परिवर्तन से उन मन्त्रों के अर्थ में परिवर्तन हो जाता है। जैसा पाणिनिशिक्षा में कहा गया है—

'वर्ण अथवा स्वर से हीन मिथ्या प्रयुक्त मन्त्र अपने (अभीष्ट अर्थ को नहीं कहते। वही (मिथ्याप्रयुक्त मन्त्र) वाणीरूपी वज्र होकर यजमान को विनष्ट कर देता है। जैसे इन्द्रशत्रुः (इन्द्र है शत्रु जिसका ऐसा =वृत्र) स्वर से (अशुद्ध मन्त्र के प्रयोग के) अपराध के कारण मारा गया।'

पदों के मूलरूप तथा मूलस्वर का ज्ञान पदपाठ से ही होता है। इस प्रकार मन्त्रों के अर्थावबोधन में पदपाठ की उपयोगिता स्वतः सिद्ध है ।।७।।

## संहितादार्ढ्यार्थम् ॥८॥

**सू० अ०**—संहिता की दृढ़ता के लिए ( पदपाठ का अध्ययन करना चाहिए )।

### निर्मलभाष्यम्

पदपाठस्यापरं प्रयोजनमुच्यते । पदपाठस्याध्ययनं **संहितादार्ढ्यार्थम्** संहितायाः दार्ढ्याय कर्त्तव्यम्, परिज्ञानार्थं कर्त्तव्यमित्यर्थः । पदानां सन्धिना संहिता निष्पद्यते इति प्रातिशाख्यकाराणां मतम् । तेषां मते पदाः सिद्धाः भवन्ति । पदानां सन्धिना एव संहिता जायते । अत एव पदानामध्ययनमपरिहार्यम् येन संहितायाः अभीष्टरूपस्य निष्पादनं भवितुमर्हति ।।८।।

### शशिकला

यहाँ पदपाठ का अन्य प्रयोजन बतलाया गया है। पदपाठ का अध्ययन संहितापाठ की दृढ़ता के लिए करना चाहिए। पदों की सन्धि के द्वारा ही संहिता निष्पन्न होती है ऐसा प्रातिशाख्यकारों का मत है। उनके मत में पद सिद्ध होते हैं तथा पदों की सन्धि से ही संहिता होती है। अत एव पदपाठ का अध्ययन अपरिहार्य है जिससे संहिता के अभीष्ट स्वरूप की निष्पत्ति हो सके ।।८।।

[ क्रमपाठप्रयोजनविधानम् ]

## क्रमाध्ययनं संहितापददार्ढ्यार्थम् ॥ ९ ॥

**सू० अ०**—संहिता ( -पाठ ) तथा पद ( -पाठ ) की दृढ़ता के लिए क्रम ( -पाठ ) का अध्ययन (करना चाहिए)।

### निर्मलभाष्यम्

संहिताध्ययनस्य 'वेदाध्ययनं धर्मः' (४.४.१) इत्यादिना पदाध्ययनस्य च पदाध्ययनमन्तादिशब्दस्वरार्थज्ञानार्थम्' (४.४.७) इत्यादिना प्रयोजनमुक्तम्। अत्र क्रमाध्ययनस्य प्रयोजनमुच्यते। **संहितापददार्ढ्यार्थं** संहिता च पदश्च तयो:

दाढ्यर्थिं दाढ्र्यांय परिज्ञानार्थंमित्यर्थः, **क्रमाध्ययनं** क्रमपाठस्याध्ययनं कर्त्तव्यमिति शेषः। क्रमपाठे द्विपदक्रमेण त्रिपदक्रमेण वा संहितारूपम्, उत्तरपदाद्विच्छेदेन पदपाठरूपञ्च ज्ञायते। यतो ह्यत्र संहितारूपं पदरूपञ्च सहैव प्राप्यते। क्रमाध्ययनेन संहिताविषयकं पदविषयकञ्च स्मरणं दृढं भवति। यथा—'ये। त्रि-स॒प्ताः। प॒रि-य॒न्ति। विश्वाः। रू॒पाणि। विभ्रतः (प० पा०) ये त्रि॒ष॒प्ताः। त्रिष॒प्ताः प॑रि॒यन्ति। त्रि॒स॒प्ता इति॑ त्रि-स॒प्ताः। प॒रि॒यन्ति॒ विश्वाः। प॒रि॒यन्तीति॑ परि॒-यन्ति। विश्वा रू॒पाणि। रू॒पाणि॒ विभ्रतः। विभ्र॑त॒ इति॒ विभ्रतः (क्र० पा०) ये त्रि॒ष॒प्ताः प॑रि॒यन्ति॒ विश्वा रू॒पाणि॒ विभ्रतः (सं० १.११) इति ॥९॥

**शशिकला**

'वेद का अध्ययन करना चाहिये' (४.४.१) द्वारा संहितापाठ तथा 'पदों के अन्त (पदान्त), आदि (पदादि), शब्द (मूलपद), (पदों के) स्वर तथा (पदों के) अर्थ के ज्ञान के लिए पद (पदपाठ) का अध्ययन करना चाहिये' (४.१.७) द्वारा पदपाठ के अध्ययन का प्रयोजन कह दिया गया है। यहाँ क्रमपाठ का प्रयोजन कहा गया है। संहिता तथा पद—संहिता-पदौ, उन दोनों (संहिता तथा पद) की दृढ़ता के लिए क्रमपाठ का अध्ययन करना चाहिए। क्रमपाठ में द्विपदक्रम अथवा त्रिपदक्रम के द्वारा संहिता का रूप तथा उत्तरवर्ती पद से विच्छेद द्वारा पदपाठ का रूप ज्ञात होता है। क्योंकि यहाँ (क्रमपाठ में) संहितापाठ तथा पदपाठ दोनों साथ-साथ दिखलाई पड़ते हैं। क्रमपाठ के अध्ययन से संहिता-विषयक तथा पदविषयक स्मरण दृढ़ होता है। जैसे–'ये। त्रि-सप्ताः। परि-यन्ति। विश्वा। रूपाणि। विभ्रतः (प० पा०) ये त्रिषप्ता। त्रिषप्ता परियन्ति। त्रि-सप्ता इति त्रि-सप्ताः। परियन्ति विश्वा। परियन्तीति परि-यन्ति। विश्वा रूपाणि। रूपाणि विभ्रतः। विभ्रत इति विभ्रतः (क्र० पा०) 'ये त्रिषप्ताः परियन्ति विश्वा रूपाणि विभ्रतः' (सं· पा० ॥१॥

## स्वरोपजनश्चादृष्टः पदेषु संहितायाञ्च ॥ १० ॥

**सू० अ०**—पदों (पदपाठ) तथा संहिता (संहिता-पाठ) में न दिखलाई पड़ने वाली स्वरों की उत्पत्ति (स्वर-परिवर्तन) (के ज्ञान के लिए) भी (क्रमपाठ का अध्ययन करना चाहिये)।

**निर्मलभाष्यम्**

चशब्दोऽत्र क्रमाध्ययनमित्यन्वादिशति **स्वरोपजनः** स्वराणामुपजनः उत्पत्तिः स्वरपरिवर्तनमित्यर्थः, **पदेषु** पठपाठेषु **संहितायां** संहितापाठे च यो

अदृष्टः स्वरोपजनः स्वरपरिवर्तनं तदवबोधनाय क्रमाध्ययनं कर्त्तव्यम्। क्रमाध्ययनेन पदेषु संहितायां च स्वराणां परिवर्तनं सहैव ज्ञायत इत्यर्थः। पदस्य मूलस्वरः संहितायां पूर्वपरपदस्वरप्रभावेण परिवर्तते, स्वमूलरूपेण नैव दृश्यते। एवञ्च संहितायाः स्वरः पदपाठेऽपि पूर्वोत्तरपदस्वरप्रभावाभावात् स्वावस्थायां नैव प्राप्यते। अत एव पदपाठेन संहितायाः संहितापाठेन पदस्य च मूलस्वरः नैव ज्ञायते। परञ्च क्रमपाठे संहितायाः पदानां च स्वरः सहैव दृश्यते। एवं संहितापाठस्य, तत्र प्रयुक्तानां पदानां च मूलस्वरंप्रदर्शनमपि क्रमपाठस्यापरं प्रयोजनम्। यथा—'पुनः। आ। इहि। वाचः। पते। देवेन। मनसा। सह (प० पा०) पुनरेहि। एहि। इहि वाचः। वाचस्पते। पते देवेन। देवेन मनसा। मनसा सह। सहेति सह (क्र० पा०) पुनरेहि वाचस्पते देवेन मनसा सह' (सं० १.१२) ॥१०॥

**शशिकला**

सूत्र में प्रयुक्त प्रथम च शब्द यहाँ 'क्रमपाठ का अध्ययन करना चाहिये' का अन्वादेश करता है। स्वरोपजनः = स्वरों की उत्पत्ति, स्वरों का परिवर्तन–यह अर्थ है। पदों (पदपाठ) में तथा संहिता (संहितापाठ) में जो अदृष्ट स्वरों की उत्पत्ति (= स्वरों का परिवर्तन) है, उसके ज्ञान के लिए क्रमपाठ का अध्ययन करना चाहिये। क्रमपाठ के अध्ययन से पदपाठ तथा संहितापाठ में होने वाले स्वरों के परिवर्तन का ज्ञान साथ-साथ हो जाता है यह अर्थ है। पदों के मूलस्वर संहिता में पूर्ववर्ती तथा परवर्ती पदों के स्वरों के प्रभाव से परिवर्तित हो जाते हैं, अपने मूलरूप में नहीं रहते। इसी प्रकार पदपाठ में संहितापाठ के स्वर पूर्ववर्ती तथा परवर्ती पदों के स्वरों के प्रभाव के अभाव में अपने मूलरूप में नहीं रहते। परन्तु क्रमपाठ में संहिता तथा पदों के स्वर साथ-साथ दिखलाई पड़ते हैं। इस प्रकार क्रमपाठ का दूसरा प्रयोजन संहितापाठ तथा उस (संहितापाठ में) प्रयुक्त पदों के मूलस्वर का प्रदर्शन करना भी है। जैसे—पुनः। आ। इहि। वाचः। पते। देवेन। मनसा। सह (प० पा०) पुनरेहि। एहि। इहि वाचः। वाचस्पते। पते देवेन। देवेन मनसा सह (क्र० पा०) पुनरोहि वाचस्पते देवेन मनेसा सह' (सं० पा०) ॥१०॥

[ द्विपदक्रमविधानम् ]

**द्वे पदे क्रमपदम् ॥ ११ ॥**

सू० अ०—(क्रमपाठ में) दो-दो पदों का क्रमपद (होता है)।

### निर्मलभाष्यम्

क्रमपाठस्य विधानमत्र विहितम् । क्रमपाठे **द्वे पदे क्रमपदं** भवति । तत्र द्वे द्वे पदे सन्दधाति । पूर्वपदस्य परेण पदेन संहिताकार्यं कर्त्तव्यम् । यथा—'विद्म । शरस्य । पितरम् । पर्जन्यम् । भूरि-धायसम् ( प० पा० ) विद्मा शरस्य । विद्म इति विद्म । शरस्य पितरम् । पितरं पर्जन्यम् । पर्जन्यं भूरिधायसम् । भूरिधायसमिति भूरि-धायसम् ( क्र० पा० ) विद्मा शरस्य पितरं पर्जन्यं भूरिधायसम्' (सं० १ २.२) । अत्र द्वे द्वे पदे क्रमपदम् । क्रमपदस्य द्वितीयपदस्य परेण पदेन सन्धानं भवति इति 'तस्यान्तेन परस्य प्रसन्धानम्' ( ४.४.१२ ) इत्यत्र विहितः ॥ ११ ॥

### शशिकला

यहाँ क्रमपाठ बनाने का विधान किया गया है । क्रमपाठ में दो-दो पदों का क्रमपद बनाया जाता है । उसमें दो-दो पदों की सन्धि की जाती है । पूर्ववर्ती पद का परवर्ती पद से सन्धि-कार्य किया जाता है । जैसे— 'विद्म । शरस्य । पितरम् । पर्जन्यम् । भूरि-धायसम् ( प० पा० ) विद्मा शरस्य । विद्म इति विद्म । शरस्य पितरम् । पितरं पर्जन्यम् । पर्जन्यं भूरिधायसम् । भूरिधायसमिति भूरि-धायसम् ( क्र० पा० ) विद्मा शरस्य पितरं पर्जन्यं भूरिधायसम् (सं० १.२.१) । यहाँ दो दो पदों का क्रमपाठ में क्रमपद है । क्रमपद के द्वितीय पद को परवर्ती पद को सन्धान होता है । इसलिए सूत्रकार ने विधान किया है कि 'उस ( क्रमपद ) के अन्तिम पद से परवर्ती पद का सन्धान होता है' ( ४ ४.१२ ) ॥ ११ ॥

## तस्यान्तेन परस्य प्रसन्धानम् ॥ १२ ॥

**सू० अ०**—उस (द्विपदक्रम) के अन्त वाले ( पद ) से परवर्ती (पद) का मेल ( होता है ) ।

### निर्मलभाष्यम्

**तस्य** द्विपदस्य क्रमपदस्य **अन्तेन** द्वितीयेन पदेन **परस्य** संहितायां विद्यमानस्य तस्मात्परस्य पदस्य **प्रसन्धानम्** सन्धिविषयकं कार्यं कर्त्तव्यम् । यथा—'यः । चकार । सः । निः-करत् । सः । एव । सुभिषक्-तमः (प० पा० ) यश्चकार । चकार सः । स निष्करत् । निष्करत्सः । निष्करदिति निः-करत् । स एव । एव सुभिषक्तमः । सुभिषक्तम इति सुभिषक्-तमः ( क्र० पा० ) यश्चकार स निष्करत्स एव सुभिषक्तमः' (सं० २.९.५) । इत्यत्र 'यश्चकार' इति द्वयोः पदयोः क्रमपदम् । अस्य क्रमपदस्य द्वितीयेन

'चकार' इत्यनेन पदेन परस्य 'सः' इत्यस्य पदस्य सन्धानम् । एवं 'चकार सः' इति क्रमपदम् । एवमेवावसानपदपर्यन्तं क्रमपदं कर्त्तव्यम् । अवसानस्थेन पदेन परस्य पदस्य सन्धानं न करणीयम् । अत एव सूत्रकारेण 'नान्तगतं परेण' ( ४ ४ १३ ) इति विधानं विहितम् ॥१२॥

### शशिकला

इस दो पद वाले क्रमपद के द्वितीय पद से परवर्ती पद का सन्धान ( सन्धि ) किया जाता है । जैसे—'यः । चकार । सः । निः-करत् । सः । एव । सुभिषक्-तमः ( प० पा० ) यश्चकार । चकार सः । स निष्करत् । निष्करत्सः । निष्करदिति निः-करत् । स एव । एव सुभिषक्तमः । सुभिषक्तम इति सुभिषक्-तमः ( क्र० पा० ) यश्चकार स निष्करत्स एव सुभिषक्तमः ( सं० २.९५ ) । यहाँ सर्वप्रथम 'यश्चकार' यह द्विपद क्रमपद बना है । इस क्रमपद के द्वितीय पद 'चकार' से परवर्ती पद 'सः' का सन्धान हुआ है । इस प्रकार 'चकार सः' यह दूसरा क्रमपद बना है । इसी प्रकार अवसान तक क्रमपद बनता है । अवसान वाले पद का परवर्ती पद से सन्धान नहीं होता । इसीलिए सूत्रकार ने 'अवसान में स्थित पद का परवर्ती पद से सन्धान नहीं होता' ऐसा विधान किया है ॥१२॥

[ द्विपदक्रमनिषेधः ]

## नान्तगतं परेण ॥१३॥

**सू० अ०**—अवसान में स्थित (पद) का परवर्ती (पद) से ( मेल ) नहीं ( होता ) ।

### निर्मलभाष्यम्

द्वयोः पदयोः क्रमपदं क्रमपाठे कर्त्तव्यम् । तस्य क्रमपदस्य अन्त्येन पदेन परस्य पदस्य प्रसन्धानं भवति । परञ्च **अन्तगतम्** अवसानस्थं पदं **परेण** पदेन सन्धानं न भवति, प्रत्युत 'प्रगृह्यावगृह्यसमापाद्यान्तगतानां द्विवचनं परिहार इतिमध्ये' ( ४.४.१४ ) इत्यनेन परिहारो भवति । यथा- अहम् । रुद्रेभिः । वसु-भिः । चरामि । अहम् । आदित्यैः । उत । विश्व-देवैः ॥ अहम् ( प० पा० ) अहं रुद्रेभिः । रुद्रेभिर्वसुभिः । वसुभिरिति वसु-भिः । वसुभिश्चरामि । चराम्यहम् । अहमादित्यैः । आदित्यैरुत । उत विश्वदेवैः । विश्वदेवैरिति विश्व-देवैः ( क्र० पा० ) अहं रुद्रेभिर्वसुभिश्च-

राम्यहमादित्यैरुत विश्वदेवैः । अहम्' ( सं० ४.३०.१ ) इत्यत्र 'विश्वदेवैः' पदः अवसानस्थः । अत एव अस्य पदस्य परेण 'अहम्' इत्यनेन पदेन सन्धानं न भवति ॥ १३ ॥

## शशिकला

क्रमपाठ में दो-दो पदों का क्रमपद बनाया जाता है। इस क्रमपद के द्वितीय पद का परवर्ती पद के साथ सन्धान करके दूसरा क्रमपद बनाया जाता है। किन्तु अवसान वाले पद से परवर्ती पद का सन्धान नहीं होता, प्रत्युत 'इति मध्य में ( रखकर पद का ) दो बार उच्चारण करना परिहार कहलाता है, प्रगृह्य अवगृह्य समापाद्य तथा अवसान वाले पदों का परिहार ( होता है )' इस विधान के अनुसार अवसान वाले पद का परिहार होता है। जैसे—'अहम् । रुद्रेभिः । वसु-भिः । चरामि । अहम् । आदित्यैः । उत । विश्व-देवैः । अहम् ( प० पा० ) अहं रुद्रेभिः । रुद्रेभिर्वसुभिः । वसुभिरिति वसु-भिः । वसुभिश्चरामि । चराम्यहम् । अहमादित्यैः । आदित्यैरुत । उत विश्वदेवैः । विश्वदेवैरिति विश्व-देवैः ( क्र० पा० ) अहं रुद्रेभिर्वसुभिश्च-राम्यहमादित्यैरुत विश्वदेवैः' । अहम् ( सं० पा० ) यहाँ 'विश्वदेवैः' अव-सानस्थ पद है। अतः इस पद का परवर्ती 'अहम्' पद से सन्धान होकर द्विपद क्रमवर्ग नहीं होता ॥ १२ ॥

[ त्रिपदक्रमविधानम् ]

## त्रिणि पदान्यपृक्तमध्यानि ॥१४॥

**सू० अ०**—अपृक्त ( पद ) है मध्य जिसके ऐसे तीन पदों वाला ( क्रमवर्ग ) होता है।

## निर्मलभाष्यम्

एकवर्णः पदः अपृक्तः आ उ ओ इति । अपृक्तः मध्ये येषां तानि अपृक्तमध्यानि । **अपृक्तमध्यानि त्रीणि पदानि** यत्र तत् त्रिपदानां क्रमपदम् । कात्यायनेन तत्क्रमपदकृते त्रिक्रमसंज्ञा प्रयुक्ता—'अपृक्तमध्यानि त्रीणि सः त्रिक्रमः (वा० प्रा० ४.१८४) । सामान्यतया क्रमपाठे द्वयोः पदयोः क्रमपदम् भवति । परञ्च यत्र अपृक्तः पदः, तत्र अपृक्तपदं मध्ये कृत्वा त्रयाणां पदानां क्रमपदं कर्त्तव्यम् । यथा—पुनः । आ । इहि । वाचः-पते । देवेन । मनसा । सह ( प० पा० ) पुनरेहि । एहि । इहि वाचस्पते । वाचस्पते इति वाचपते । वाचः-पते देवेन । देवेन मनसा । मनसा सह । सहेति सह ( क्र०

पा० ) पुनरेहि वाचस्पते देवेन मनसा सह' ( सं० १.१.२ ) इत्यत्र क्रमपाठे 'आ' इत्ययमपृक्तपदः । मध्ये कृत्वा त्रयाणां पुनरेहि इति पदानां क्रमपदं कर्त्तव्यम् । 'धिया । आ । इहि । आ । नः ( प० पा० ) धियेहि । एहि । इह्या नः । आ नः (क्र० पा०) धियेह्या नः' (सं० २५४) इत्यत्रापि क्रमपाठे 'आ' इत्ययमपृक्तपदः मध्ये कृत्वा त्रयाणां क्रमशः 'धिया' आ 'इहि' धियेहि तथा च 'इहि' 'आ' 'नः' पदानां 'इह्या नः' क्रमपदं करणीयम् ॥ १४ ॥

### शशिकला

एक वर्ण वाले पद अपृक्त कहलाते हैं। वे हैं—आ, उ तथा ओ। अपृक्त है मध्य में जिनके वे अपृक्तमध्य हैं। अपृक्त है मध्य में जिनके ऐसे तीन पद वाले त्रिपदक्रम होते हैं। कात्यायन ने त्रिपदक्रम के लिए त्रिक्रम संज्ञा का प्रयोग किया है—'अपृक्त है मध्य में जिनके ऐसे तीन पदों का क्रम त्रिक्रम कहलाता है'। सामान्यतया क्रमपाठ में दो पदों का क्रमपद बनाया जाता है। किन्तु जहाँ अपृक्त पद है वहाँ अपृक्त पद को मध्य में रखकर तीन पदों वाला त्रिपदक्रम करना चाहिए। जैसे—'पुनः। आ। इहि। वाचः-पते। देवेन। मनसा। सह ( प० पा० ) पुनरेहि। एहि। इह वाचस्पते। वाचस्पते इति वाचः-पते। वाचस्पते देवेन। देवेन मनसा। मनसा सह। सहेति सह (क्र० पा०) पुनरेहि वाचस्पते देवेन मनसा सह (सं० पा०) यहाँ क्रमपाठ में 'आ' इस अपृक्त पद को मध्य में रख कर तीन पदों का 'पुनरेहि' यह पदक्रम बनता है। 'धिया। आ। इहि। आ। नः (प०पा०) धियेहि। एहि। इह्या नः। आ नः (क्र० पा०) धियेह्या नः (सं० पा०) ॥१४॥

### [ त्रिपदक्रमप्रयोजनविधानम् ]

## एकादेशस्वरसन्धिदीर्घविनामाः प्रयोजनम् ॥१५॥

**सू० अ०**—एकादेश, स्वर-सन्धि, दीर्घभाव तथा मूर्धन्यभाव को प्रदर्शित करना ( तीन पदों के क्रमपद का ) प्रयोजन है।

### निर्मलभाष्यम्

त्रिपदक्रमस्य प्रयोजनमुच्यते। 'पूर्वपरयोरेकः' (३.२.१६) इत्यादिना एकादेशः, 'एकादेश उदात्तेनोदातः' (३ ३.२२) इत्यनेन 'एकारौकारौ पदान्तौ परतोऽकारं सोऽभिनिहितः ( ३.३.११ ) इत्यादिना स्वरितभेदविधाने च स्वरसन्धिः, 'सहावाडन्ते दीर्घः ( ३.१.१ ) इत्यादिना दीर्घः, 'अत्र नाम्यु-

पधस्य षकारः' ( २.४ १ ) इत्यादिना विनामः उक्तः। **एकादेशस्वरसन्धिदीर्घविनामाः** एकादेशः स्वरसन्धिः दीर्घः विनामः मूर्धन्यभावश्च त्रिपदक्रमस्य **प्रयोजनं** विद्यते। तात्पर्योऽयं यत् त्रिपदक्रमेण एकादेशस्य, उदात्तादिस्वराणां सन्धेः, दीर्घभावस्य, मूर्धन्यभावस्य च प्रदर्शनं भवति। यथा—धि॒या। आ। इ॒हि॒। आ। नः॒ (प० पा०) धि॒येहि॑। एहि॑। इ॒ह्या नः॑। आ नः॑। न॒ इति॑ नः ( क्र० पा० ) धि॒येह्या नः॑' ( सं० २.५.४ ) इत्यत्र त्रिपदक्रमेण एकादेशः स्वरसन्धिश्च ज्ञायते। 'इदम्। ऊँ इति। सु। प्र-साधय ( प० पा० ) इदमूषु। ऊँ इत्यूँ इति। सु प्रसाधय। प्र-साधय ( क्र० पा० ) इदमू षु प्रसाधय ( सं०१ २४.४ ) इत्यत्र त्रिपदक्रमेण 'उ' इत्यस्य दीर्घत्वं 'सु' इत्यस्य सकारस्य मूर्धन्यभावत्वं च ज्ञायते॥ १५॥

**शशिकला**

यहाँ त्रिपदक्रम का प्रयोजन बतलाया गया है। 'पूर्ववर्ती तथा परवर्ती के स्थान में एक आदेश होता है' इत्यादि के द्वारा एकादेश का विधान हुआ हैं। 'उदात्त के साथ एकादेश उदात्त होता है' के द्वारा तथा 'पदान्त एकार तथा ओकार से परवर्ती अकार का पूर्वरूप होने पर अभिनिहित स्वरित होता है' के द्वारा उदात्तादि स्वरों की सन्धि को कहा गया हैं। वाद् अन्त में होने पर सह् के अन्त्य स्वर का दीर्घ हो जाता है' से संहिता में दीर्घ और 'नामिन् उपधा वाले सकार का षकार हो जाता है' के द्वारा मूर्धन्यभाव कहा गया है। एकादेश, उदात्तादि स्वरों की सन्धि संहिता में हुए ह्रस्व का दीर्घ तथा मूर्धन्यभाव ( विनाम ) को बतलाना त्रिपदक्रम का प्रयोजन है। तात्पर्य यह है कि त्रिपदक्रम द्वारा स्वरवर्णों की सन्धि में हुआ एकादेश, उदात्तादि स्वरों की सन्धि, संहिता में हुए ह्रस्व स्वरों का दीर्घ तथा मूर्धन्यभाव प्रदर्शित हो जाते हैं। जैसे—धि॒या। आ। इ॒हि॒। आ। नः॒। ( प० पा० ) धि॒येहि॑। एहि॑। इ॒ह्या नः॑। आ नः॑। न॒ इति॑ नः। ( क्र० पा० ) धि॒येह्या नः॑' ( सं० पा० ) यहाँ त्रिपदक्रम से स्वरवर्ण का एकादेश तथा उदात्तादि स्वर की सन्धि ज्ञात हो जाती है। 'इदम्। ऊँ इति। सु। प्रसाधय ( प० पा० ) इदमूषु। ऊँ इत्यूँ इति। सु प्रसाधय। प्र-साधय (क्र० पा०) 'इदमूषु प्रसाधय ( सं० पा० ) यहाँ त्रिपदक्रम से 'उ' के दीर्घत्व तथा सु का मूर्धन्यभाव ज्ञात हो जाता है॥ १५॥

## आकारौकारादि पुनः ॥१६॥

**सू० अ०**—आकार तथा ओकार हैं आदि में जिसके ऐसे ( दो पदों वाला क्रमपद ) पुनः ( होता है )।

### निर्मलभाष्यम्

**आकारौकारादि** आकारः 'आ' इत्यपृक्तपदः औकारश्च 'ओ' इत्यपृक्तपदश्च आदिः यस्य तद्द्वयोः पदयोः क्रमपदं **पुनः** त्रयाणां पदानां क्रमपदानन्तरं कर्त्तव्यम् । आकारादि यथा—धिया । आ । इहि । आ । नः (प० पा०) धियेहि । एहि । इह्या नः । आ नः । न इति नः ( क्र० पा० ) धियेह्या नः ( सं० २.५.४) इत्यत्र 'धियेहि' 'इह्या नः' इत्येताभ्यां अपृक्तमध्याभ्यां त्रिक्रमपदाभ्यामनन्तरं पुनः आकारादिद्विक्रमपदं क्रमशः एहि' 'आ नः' करणीयम् । ओकारादि यथा—श्रातम् । हविः । ओ इति । सु ( प० पा० ) श्रातं हविः । हविरो षु । ओ सु । ओ इत्यो ( क्र० पा० ) श्रातं हविरो षु ( सं० ७ ७२.२ ) इत्यत्रापि हविरोषु' इति अपृक्तमध्यत्रिपदक्रमपदानन्तरम् ओकारादि द्विपदं क्रमपदम् 'ओषु' कर्त्तव्यम् ।।१६।।

### शशिकला

आ तथा ओ ये अपृक्त पद हैं आदि में जिसके ऐसे दो पदों का त्रिपदक्रम के पश्चात् पुनः द्विक्रमपद बनाया जाना चाहिए । आकारादि का जैसे—'धिया । आ । इहि । आ । नः (प० पा०) धियेहि । एहि । इह्या नः । आ नः । न इति नः ( क्र० पा० ) धियेह्या नः' (सं० पा०) । यहाँ 'धियेहि' और 'इह्या नः' में अपृक्त मध्य में रख कर त्रिपदक्रम के पश्चात् पुनः आकारादि वाला द्विपदक्रम क्रमशः 'एहि' और 'आ नः' बनाया जाता है । ओकारादि जैसे—'श्रातम् । हविः । ओ इति । सु (प० पा०) श्रातं हविः । हविरो षु । ओ सु । ओ इत्यो । सु इति सु ( क्र० पा० ) श्रातं हविरो षु' ( सं० पा० ) यहाँ भी अपृक्तपद को मध्य में रखकर त्रिपद क्रमपद के बाद ओकार के साथ दो पदों वाला क्रमपद ओ सु' बनाया जाता है ।। १६ ।।

[ उकारस्य परिहार्यत्वकथनम् [

## उकारः परिहार्य एव ॥१७॥

**सू० अ०**—उकार परिहार्य ही ( होता है ) ।

### निर्मलभाष्यम्

परिहार्यः इतिमध्ये कृत्वा पदस्य द्विरुच्चारणं परिहारः । संज्ञेयं सूत्रकारेण '··द्विर्वचनं परिहार इतिमध्ये' (४.४.१८) इत्यत्र विहितः । **उकारः** 'उ' इत्ययमपृक्तपदः **परिहार्यः** परिहारणीयः भवति । इतिमध्ये कृत्वा

उकारस्य द्विकथनम् इत्यर्थः । अपृक्तपदं मध्ये कृत्वा त्रयाणां पदानां पदक्रमं करणीयम् इत्युक्तम् । तदनन्तरम् उकारस्य परिहारः कर्त्तव्यः । न तु पुनः परेण पदेन सन्धानम् । यथा—सः । अग्निः । सः । ऊँ इत्यूँ । सूर्यः । सः । ऊँ इत्यूँ । एव । महायमः ( प० पा० ) सो अग्निः । अग्निः सः । स उ सूर्यः । ऊँ इत्यूँ इति । सूर्यः सः । स उ एव । ऊँ इत्यूँ इति । एव महायमः । महायम इति महा-यमः ( क्र० पा० ) सो अग्निः स उ सूर्यः स उ एव महायमः ( सं० १३.४.५ ) इत्यत्र क्रमपाठे उमध्ये कृत्वा त्रयाणां पदानां क्रमपदानन्तरम् उकारस्य परिहारः 'ऊ इत्यूँ इति' भवति ॥१७॥

### शशिकला

इति मध्य में रखकर पद का दो बार उच्चारण परिहार कहलाता है। परिहार संज्ञा का विधान ४.४ १८ में सूत्रकार ने किया है। 'उ' यह अपृक्त पद परिहार्य होता है। इति मध्य में रखकर उ अपृक्त पद का दो बार उच्चारण होता है। सर्वप्रथम इस अपृक्त पद को मध्य में रखकर तीन पदों का पदक्रम बनाने का विधान ४.४. ४ में किया गया है। त्रिपदक्रम बनाने के बाद उकार का परिहार होता है. परवर्ती के साथ सन्धि करके दो पदों का क्रमवर्ग नहीं बनता। जैसे—सः। अग्निः। सः। ऊँ इत्यूँ। एव। महा-यमः (प० पा०) सो अग्निः। अग्निः सः। सः उ सूर्यः। ऊँ इत्यूँ इति। सूर्यः सः। स उ एव। ऊँ इत्यूँ इति। एव महायमः। महायम इति महा-यमः ( क्र० पा० ) सो अग्निः स उ सूर्यः स उ एव महायमः ( सं० पा० ) यहाँ क्रमपाठ में उ मध्य में रखकर तीन पदों वाले पदक्रम के पश्चात् उकार का परिहार हुआ है ॥१७॥

[ परिहारसंज्ञाविधानम् ]

**प्रगृह्यावगृह्यसमापाद्यान्तगतानां द्विर्वचनं परिहार इतिमध्ये ॥१८॥**

**सू० अ०**—'इति' मध्य में ( रख कर पद का ) दो बार उच्चारण परिहार ( कहलाता है )। प्रगृह्य, अवगृह्य, समापाद्य तथा अवसान वाले ( पदों ) का ( परिहार होता है )।

### निर्मलभाष्यम्

**इतिमध्ये** कृत्वा पदानां द्विर्वचनं द्विरुच्चारणं **परिहारसंज्ञं** भवति। प्रगृह्यावगृह्यसमापाद्यान्तगतानां प्रगृह्यस्य प्रगृह्य-संज्ञकपदस्य अवगृह्यस्य

सावग्रहपदस्य समापाद्यस्य मूलरूपप्रदर्शनीयस्य पदस्य अन्तगतस्यावसान-स्थस्य च पदस्य **परिहारः** भवति। प्रगृह्यस्य यथा—'उभौ। इन्द्राग्नी इति। आ। भरताम्। नः। वसूनि ( प० पा० ) उभाविन्द्राग्नी। इन्द्राग्नी आ भरताम्। इन्द्राग्नी इति इन्द्राग्नी। आ भरताम्। भरतां नः। नो वसूनि। वसूनीति वसूनि ( क्र० पा० ) उभाविन्द्राग्नी आ भरतां नो वसूनि' ( सं० ५.७६ )। अवगृह्यस्य यथा—'मधु-मत्। मे। निः—क्रमणम् ( प० पा० ) मधुमन्मे। मधुमदिति मधु-मत्। मे निष्क्रमणम्। निष्क्रमणं मधुमत्। निष्क्रमणमिति निः—क्रमणम् ( क्र० पा० ) मधुमन्मे निष्क्रमणम्' ( सं० १.३४.३ )। समापाद्यस्य यथा—'तेन। देवाः। वि-सहन्ते। शत्रून्। हन्ता ( प० पा० ) तेन देवाः। देवा विषहन्ते। विषहन्त शत्रून्। विषहन्त इति वि-सहन्ते। शत्रून् हन्ता ( क्र० पा० ) तेन देवा विषहन्त शत्रून्हन्ता' ( सं० ३ १०.१२ )। अन्तगतस्य यथा—कामान्। अस्माकम्। पूरय। प्रति। गृह्णाहि। नः। हविः ( प० पा० ) कामानस्माकम्। अस्माकं पूरय। पूरय प्रति। प्रति गृह्णाहि। गृह्णाहि नः। नो हविः। हविरिति हविः ( क्र० पा० ) कामानस्माकं पूरय प्रति गृह्णाहि नो हविः ( सं० ३.१०.१३ ) ॥१८॥

## शशिकला

'इति' मध्य में रखकर पदों का दो बार उच्चारण करना परिहार कहलाता है। प्रगृह्य, अवगृह्य, समापाद्य और अवसान में स्थित पद का परिहार किया जाता है। प्रगृह्य = प्रगृह्य संज्ञक पद, अवगृह्य = अवग्रह योग्य पद समापाद्य = मूलरूप-प्रदर्शन के योग्य पद तथा अन्तगत = अवसान में स्थित पद। इन पदों को क्रमपाठ में परिहार द्वारा भी प्रस्तुत किया जाता है। प्रगृह्य पद जैसे—'उभौ। इन्द्राग्नी इति। आ। भरताम्। नः। वसूनि ( प० पा० ) उभाविन्द्राग्नी। इन्द्राग्नी आ भरताम्। इन्द्राग्नी इति इन्द्राग्नी। आ भरताम्। भरतां नः। नो वसूनि। वसूनीति वसूनि ( क्र० पा० ) उभाविन्द्राग्नी आ भरतां नो वसूनि' ( सं० पा० )। अवगृह्य जैसे—'मधु-मत्। मे। निः—क्रमणम् ( प० पा० ) मधुमन्मे। मधुमदिति मधुमत्। मे निष्क्रमणम्। निष्क्रमणमिति निः-क्रमणम् ( क्र० पा० ) मधु-मन्मे निष्क्रमणम्' ( सं० पा० )। समापाद्य जैसे -'तेन। देवा। वि-सहन्ते। शत्रून्। हन्ता ( प० पा० ) तेन देवाः। देवा विषहन्ते। विषहन्त इति वि-सहन्ते। शत्रून् हन्ता ( क्र० पा० ) तेन देवा विषहन्त शत्रून् हन्ता' ( सं० पा० )। अन्तगत जैसे—'कामान्। अस्माकम्। पूरय। प्रति।

गृह्णाहि । नः । हविः ( प० पा० ) कामानस्माकम् । अस्माकं पूरय । पूरय प्रति । प्रति-गृह्णाहि । गृह्णाहि नः । नो हविः । हविरिति हविः (क्र० पा०) कामानस्माकं पूरय प्रति गृह्णाहि नो हविः ( सं० पा० ) ।।१८।।

[ उकारस्य परिहारविधानम् ]

## द्वाभ्यामुकारः ।।१९।।

**सू० अ०**—उकार दो ( इति ) द्वारा ( प्रदर्शित किया जाता है ) ।

### निर्मलभाष्यम्

परिहारे **उकारः** 'उ' इत्ययमपृक्तपदः **द्वाभ्या**मितिद्वयाभ्यां प्रदर्शितव्यः । क्रमापाठे उकारस्यापृक्तपदस्य प्रदर्शने मध्ये अन्ते च 'इति' प्रयुज्यते । यथा—सः । अग्निः । ऊँ इति । सूर्यः । सः । ऊँ इति । एव । महायमः ( प० पा० ) सो अग्निः । अग्निः सः । स उ सूर्यः । ऊँ इत्यूँ इति । सूर्यः सः । स उ एव । ऊँ इत्यूँ इति । एव महामयः । महायमः इति महायमः ( क्र० पा० ) सो अग्निः स उ सूर्यः स उ एव महायमः ( सं० १३.४.५ ) इत्यत्र क्रमपाठे उकारस्य परिहारे इतिद्वयेन निर्दिष्टः ।।१९।।

### शशिकला

परिहार में अपृक्तपद उ दो इति द्वारा प्रदर्शित किया जाता है । क्रमपाठ में अपृक्तपद उ के प्रदर्शन में मध्य तथा अन्त में दो वार इति का प्रयोग होता है । जैसे—सः । अग्निः । ऊँ इति । सूर्यः । सः । ऊँ इति । एव । महायमः ( प० पा० ) सो अग्निः । अग्निः सः । स उ सूर्यः । ऊँ इत्यूँ इति । सूर्यः सः । स उ एव । ऊँ इत्यूँ इति । एव महायमः । महायमः इति महायमः ( क्र० पा० ) सो अग्निः स उ सूर्यः स उ एव महायमः ( सं० पा० ) यहाँ क्रमपाठ में उकार का परिहार दो इति द्वारा हुआ है ।।१९।।

[ उकारस्य परिहारप्रयोजनम् ]

## अनुनासिकदीर्घत्वं प्रयोजनम् ।।२०।।

**सू० अ०**—उकार के अनुनासिकत्व तथा दीर्घता को प्रदर्शित करना ( ही उसके दो इति द्वारा परिहार करने का ) प्रयोजन है ।

